Digitized By Siddhanta eGangotri Gyaan Kosha

मायकर्म्मणऽआप्प्यायद्ध्वमग्घ्न्याऽइन्द्रायभागम्प्रजावतीरनमीवाऽ-

---

ब्राह्मणो भवेत् । तच्छाखाध्ययनं कार्यमन्यथा पतितो भवेत् ॥'

हरि÷"ॐ भूर्भुवःस्व÷तत्सवितुर्व्वरेण्यंभर्गोदेवस्यधीमहि । धियोयोनः÷ प्रचोदयात्"। भरद्वाजशिक्षायाम्—"प्रश्नानुवाकाद्यारम्भे सविसर्गोच्चको हरिः। न सन्धिः प्रणवे नित्यं विरामे स्वरितोभवेत्"॥ सविसर्गउदात्तो हरिशब्द आरम्भे प्रयोक्तव्यः,। अन्तेऽध्ययनसमाप्तौ स्वरितो हरिशब्दो भवेत । अत्र वेदारम्भ इषेत्वेत्यादितः कर्त्तव्यः । यद्यपि व्रतादेशे प्रथमम् 'आग्नेयं व्रतं प्रथममादिशेत्' इति विधिः, तदनुरोधेन समिधाऽग्निमित्याद्यारम्भः कर्तव्य इत्यापाततः प्रतीयते, तथापि तस्य पृथगध्ययनकाले तदारम्भेऽपि वेदारम्भकाले प्रथमाध्यायस्य परित्यागे प्रमाणाभावात् । संस्कारभास्करादौ सर्वत्र प्रथमाध्यायादेवारम्भस्य विहितत्वात्तत आरभ्यैव वेदाध्ययनम् ।

२. अध्ययनक्रमः—'हस्तौ सुसंयतौ धार्यौ जानुनोरुपरि स्थितौ । गुरोरनुमितिं कुर्यात्पठन्नान्यमतिर्भवेत् । करभागे तृतीये तु कूर्परं न्यस्य दक्षिणम् ।

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

अ॒य॒क्ष्मामा॒व॑स्ते॒नऽई॑शत॒माघश॑ꣳसोध्रु॒वाऽअ॒स्मिन्गोप॑तौस्यातब॒ह्वी-

कूर्परम्—प्रगण्डप्रकोष्ठयोः सन्धिम् । करमित्यपि पाठभेदः । या० शि० श्लो० १९-२० ।

३. 'वेदाभ्यासो हि विप्राणां परमं तप उच्यते ।'

४. 'ॐकारं वेदेषु' 'अथकारं भाष्येषु' ( शु० य० प्रा० १।१८।१९ ) इति व्यवस्थाकृता । 'प्रणवं प्राक् प्रयुञ्जीत व्याहृतीस्तदनन्तरम् । सावित्रीं चानुपूर्वेण ततो वेदान्समारभेत् ॥ आरभेत्—अत्र परस्मैपदमार्षम् । या० शि० श्लो० २२ । "कूर्मोऽङ्गानीव संहृत्य चेष्टां दृष्टिं दृढं मनः । स्वस्थः प्रशान्तो निर्भीतो वर्णानुच्चारयेद् बुधः" या० १ लो० २३ प्रशान्तः—शान्तमनाश्च सन् ।

५. देवा÷इत्यत्र—स्वरितं यन्नवेत्किञ्चित्सवकारोऽमकं ततः । ह्रस्वं वा यदि वा दीर्घं निक्षेप उभयोरपि ( या० ६६ ) इति वाक्यात् । 'दे॒वोवं÷सवि॒ता' इत्यत्र 'अङ्गुलिद्वयप्रक्षेपः ।' एवम् 'अति विश्वा÷' इत्यत्रापि ( शु० १२।८४ ) वा॒यव्यै॑ः वा॒यव्या÷ इत्यादौ च अङ्गुलिद्वयप्रक्षेपः ।

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized by Siddhanta eGangotri Gyaan Kosha

र्य्यजमानस्यपशून्पाहि ॥ १ ॥ व्वसोःपवित्रमसिद्यौरसिपृथि
व्व्यसिमातरिश्श्वनोघर्म्मोसिव्विश्श्वधाऽअसि । परमेणधाम्नादृꣳ
हस्वमाह्वार्म्मातेयज्ञपतिर्ह्वार्षीत् ॥ २ ॥ व्वसोःपवित्रमसिशत-

---

१. 'हस्तभ्रष्टः स्वरभ्रष्टो न वेदफलमश्नुते ।' या० श्लो० २६ हस्तहीनं तु योऽधीते मन्त्रं वेदविदो विदुः । न साधयेद्याजुषाणि भुक्तमव्यञ्जनं यथा ॥ ऋचो यजूꣳषि सामानि हस्तहीनानि यः पठेत् । अनृचो ब्राह्मणस्तावद् यावत्स्वारं न विन्दति ॥ हस्तहीनं तु योऽधीते स्वरवर्णविवर्जितम् । ऋग्यजुः-सामभिर्दग्धो वियोनिमधिगच्छति ॥ अनृचः—अवैदिकः, या० श्लो० ३९–४१ ।

२. मनुः 'वेदारम्भेऽवसाने च पादौ ग्राह्यौ गुरोः सदा । प्रणवं प्राक् प्रयुञ्जीत व्याहृतीस्तदनन्तरम् ॥ सावित्री चानुपूर्वेण ततो वेदान् समारभेत् । ओङ्कारं प्रथमं कृत्वा ततो ब्रह्म प्रवर्तयेत् । ओंकारं च पुनः कृत्वा भूमिं स्पृष्ट्वा समापयेत् ।

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

धारंव्वसोःपवित्रमसिसहस्रधारम् । देवस्त्वासवितापुनातुव्वसोः२
पवित्रेणशतधारेणसुप्वाकामधुक्षः ॥ ३ ॥ साव्विश्वायुःसाव्विश्श्व-
कर्म्मासाव्विश्श्वधायाः । इन्द्रस्यत्वाभागꣳसोमेनातनच्मिव्विष्णो
हव्यꣳरक्ष ॥ ४ ॥ अग्नेव्व्रतपतेव्व्रतञ्चरिष्यामितच्छकेयन्तन्मेराद्ध्य-
ताम् । इदमहमनृतात्सत्यमुपैमि ॥५॥ कस्त्वायुनक्तिसत्त्वायुनक्तिक-
स्म्मैत्वायुनक्तितस्म्मैत्वायुनक्ति । कर्म्मणेवांव्वेषायवाम् ॥ ६ ॥ प्रत्यु-
ष्टꣳरक्षःप्रत्युष्टाऽअरातयोनिष्टप्तꣳरक्षोनिष्टप्ताऽअरातयः।उर्व्वन्त-
रिक्षमन्न्वेमि ॥७॥ धूरसिधूर्व्वधूर्व्वन्तन्धूर्व्वतँय्योस्म्मान्धूर्व्वतितन्धू-
र्व्वयंव्वयन्धूर्व्वामः । देवानामसिव्वह्नितमꣳसस्नितमम्पप्रितमञ्जु-

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


ष्टन्तमन्देवहूतमम् ॥ ८ ॥ अह्रुतमसिहविर्द्धानन्दृꣳहस्वमाह्वार्म्मा-
तेयज्ञपतिर्ह्वार्षीत् । व्विष्णुस्त्वाक्क्रमतामुरुव्वातायापहतꣳरक्षो-
यच्छन्ताम्पञ्च ॥ ९ ॥ देवस्यत्त्वासवितुःप्प्रसवेश्विनोर्ब्बाहुभ्याम्पू-
ष्णोहस्ताभ्याम् । अग्नयेजुष्टङ्गृह्णाम्म्यग्नीषोमाभ्याञ्जुष्टङ्गृह्णामि
॥ १० ॥ भूतायत्त्वानारातयेस्वरभिविख्येषन्दृꣳहन्तान्दुर्य्याःपृथि-
व्यामुर्व्वन्तरिक्षमन्वेमिपृथिव्यास्त्वानाभौसादयाम्म्यदित्याऽउप-
स्थेग्नेहव्यꣳरक्ष ॥ ११ ॥ पवित्त्रेस्त्थोव्वैष्णव्यौसवितुर्व्वःप्प्र-
सवऽउत्पुनाम्म्यच्छिद्द्रेणपवित्त्रेणसूर्य्यस्यरश्मिभिः । देवीरापोऽ-
अग्ग्रेगुवोऽअग्ग्रेपुवोग्ग्रऽइममद्ययज्ञन्नयताग्ग्रेयज्ञपतिꣳसुधातुँय्य-

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

ह्वपतिन्देवयुवम् ॥ १२ ॥ शुष्म्मा॒ऽइन्द्रोवृणीतव्वृत्त्रतूर्य्येयुयमिन्द्रम
वृणीद्ध्वंव्वृत्त्रतूर्य्येप्रोक्षितास्स्थ । अग्नयेत्वाजुष्टम्प्रोक्षाम्यग्नी-
षोमाब्भ्यान्त्वाजुष्टम्प्रोक्षामि । दैव्व्यायकर्म्मणेशुन्धद्ध्वन्देवयज्ज्या-
यैयद्वोशुद्धाःपराजग्घ्नुरिदंव्वस्तच्छुन्धामि ॥ १३ ॥ शर्म्मास्यवधू-
तꣳरक्षोवधूताऽअरातयोदित्यास्त्वगसिप्रतित्वादितिर्व्वेत्तु । अद्रि-
रसिवानस्पत्योग्रावासिपृथुबुध्नःप्रतित्वादित्यास्त्वग्वेत्तु ॥ १४ ॥
अग्नेस्तनूरसिव्वाचोविसर्ज्जनन्देववीतयेत्वागृह्णामिबृहद्ग्रावासि-
वानस्पत्यःसऽइदन्देवेब्भ्योहविःशमीष्ष्वसुशमिशमीष्ष्व । हविष्कृ-
देहिहविष्कृदेहि ॥ १५ ॥ कुक्कुटोसिमधुजिह्वऽइषमूर्ज्जमावद-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


त्वयाव्वयꣳसंङ्घातꣳसंङ्घातञ्जेष्म्मव्वर्षवृंद्धमसिप्प्रतित्वाव्वर्ष-
वृंद्धंव्वेत्तुपरापूतꣳरक्षꣳपरापूताऽअरातयोपंहतꣳरक्षोव्वायुर्व्वोव्वि-
विंनक्तुदेवोवंꣳसविताहिरंण्ण्यपाणिꣳप्प्रतिगृब्भ्णात्त्वच्छिंद्द्रेणपाणिना-
॥ १६ ॥ धृष्टिरस्यपाग्ग्नेऽअग्निमामादंञ्जहिनिष्क्रव्व्यादꣳसेधादेव-
यजंव्वह । ध्रुवमंसिपृथिवीन्दꣳहब्ब्रह्मम्मवनित्त्वाक्षत्त्रवनिसजातवन्न्यु-
पंदधामिब्भ्रातृव्व्यस्यव्वधाय ॥ १७ ॥ अग्ग्नेब्रह्मंगृब्भ्णीष्ष्वधरुणंम-
स्यन्तरिंक्षन्दꣳहब्ब्रह्मवनित्त्वाक्षत्त्रवनिसजातवन्न्युपंदधामिब्भ्रातृ-
व्व्यस्यव्वधाय । धर्त्रमंसिदिवंन्दꣳहब्ब्रह्मवनित्त्वाक्षत्त्रवनिसजात-
वन्न्युपंदधामिब्भ्रातृव्व्यस्यव्वधाय । विश्वाब्भ्यस्त्वाशाब्भ्यऽउपंद-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

धामिचितंस्त्थोर्द्ध्वंचिताभृगूणामङ्गिरसान्तपसातप्प्यद्ध्वम् ॥१८॥
शर्म्मास्यवधूतᳪरक्षोवधूताऽअरातयोदित्त्यास्त्वगसिप्प्रतित्त्वादिति-
र्व्वेत्तु । धिषणासिपर्व्वतीप्प्रतित्त्वादित्त्यास्त्वग्ग्वेत्तुदिवस्कम्भनीरसि-
धिषणासिपार्व्वतेयीप्प्रतित्त्वापर्व्वतीर्व्वेत्तु ॥ १९ ॥ धान्यमसिधिनुहि-
देवान्प्राणायत्त्वोदानायत्त्वाव्व्यानायत्वा । दीर्ग्घामनुप्प्रसितिमायुषे-
धान्देवोवः सविताहिरण्ण्यपाणिःप्प्रतिगृब्भ्णात्त्वच्छिद्द्रेणपाणिनाच-
क्षुषेत्वामहीनाम्पयोसि ॥२०॥ देवस्यत्त्वासवितुःप्प्रसवेश्श्विनोर्ब्बाहु-
ब्भ्याम्पूष्णोहस्ताब्भ्याम् । सव्वपामिसमापऽओषधीभिःसमोषध-
योरसेन । सᳪरेवतीर्जगतीभिःपृच्च्यन्ताᳪसम्मधुमतीर्म्मधुमतीभिः

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

पृच्च्यन्ताम् ॥ २१ ॥ जनयत्यैत्त्वासंय्यौमीदमग्ग्नेरिदमग्ग्नीषो-
मयोरिषेत्त्वाघर्म्मोसिव्विश्श्वायुरुरुप्प्रथाऽउरुप्प्रथस्वोरुतेयज्ञपतिःप्प्र-
थतामग्निष्ट्टेत्त्वचम्माहिंसीद्देवस्त्वासविताश्श्रपयतुव्वर्षिष्ठेधिनाके
॥ २२ ॥ माभेर्म्मासंव्विक्क्थाऽअतमेरुर्य्यज्ञोतमेरुर्य्यजमानस्यप्प्रजा-
भूयात्त्रितायत्त्वाद्द्वितायत्त्वैकतायत्त्वा ॥ २३ ॥ देवस्यत्त्वासवितुःप्प्र-
सवेश्श्विनोर्ब्बाहुब्भ्याम्पूष्ष्णोहस्ताब्भ्याम् । आददेद्ध्वरकृतन्देवे-
ब्भ्यऽइन्द्रस्यबाहुरसिदक्षिणःसहस्रभृष्टिःशततेजाव्वायुरसितिग्ग्म-
तेजाद्द्विषतोव्वधः ॥ २४ ॥ पृथिविदेवयजन्न्योषद्ध्यास्तेमूलम्माहिं-
सिषंव्व्रजङ्गच्छगोष्ठानंव्वर्षतुतेद्यौर्ब्बधानदेवसवितःपरमस्याम्पृथि-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

व्याᳬंशतेनपाशैर्ष्ठोस्स्मान्द्वेष्टियञ्चवयन्द्विष्मस्तमतोमामौक्
॥ २५ ॥ अपारुम्पृथिव्यैदेवयजनाद्वध्यासंव्रजङ्गच्छगोष्ठानं-
वर्षतुतेद्यौर्बधानदेवसवितःपरमस्याम्पृथिव्याᳬंशतेनपाशैर्ष्ठो-
स्मान्द्वेष्टियञ्चवयन्द्विष्मस्तमतोमामौक् । अररोदिवम्मापप्तो-
द्रप्सस्तेद्याम्मास्कन्व्रजङ्गच्छगोष्ठानंवर्षतुतेद्यौर्बधानदेवस-
वितःपरमस्याम्पृथिव्याᳬंशतेनपाशैर्ष्ठोस्मान्द्वेष्टियञ्चवयन्द्वि-
ष्मस्तमतोमामौक् ॥२६॥ गायत्रेणत्वाच्छन्दसापरिगृह्णामित्रैष्टु-
भेनत्वाच्छन्दसापरिगृह्णामिजागतेनत्वाच्छन्दसापरिगृह्णामि । सु-
क्ष्माचासिशिवाचासिस्योनाचासिसुषदाचास्यूर्जस्वतीचासिपय-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

स्वतीच ॥ २७ ॥ पुराक्क्रूरस्यंव्विसृपोव्विरप्शिन्नुदादायपृथिवीञ्जीवदानुम् । यामैरंयँश्चन्द्रमसिस्वधाभिस्तामुधीरासोऽअनुदिश्ययजन्ते । प्रोक्षणीरासादयद्द्विषतोव्वधोसि ॥२८॥ प्रत्युष्टृंरक्षःप्रत्युष्टाअरातयोनिष्टप्तंरक्षोनिष्टप्ताऽअरातयः । अनिशितोसिसपत्नक्षिद्वाजिनंत्वाव्वाजेध्यायैसम्मार्ज्मि । प्रत्युष्टंरक्षःप्रत्युष्टाऽअरातयोनिष्टप्तंरक्षोनिष्टप्ताऽअरातयः । अनिशितासिसपत्नक्षिद्वाजिनीन्त्वाव्वाजेध्यायैसम्मार्ज्मि ॥ २९ ॥ अदित्यैरास्नासिव्विष्णोर्व्वेष्प्योस्यूर्ज्जेत्वादब्धेनत्त्वाचक्षुषावपश्यामि । अग्नेर्जिह्वासिसुहूर्देवेभ्योधाम्नेधाम्नेमेभवयजुषेयजुषे ॥ ३० ॥ सवितुस्त्वाप्रसवऽउ-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

त्त्पुनाम्म्यच्छिद्द्रेणपवित्त्रेणसूर्य्यस्यरश्मिभिः। सवितुर्व्वःप्रस ४
वऽउत्त्पुनाम्म्यच्छिद्द्रेणपवित्त्रेणसूर्य्यस्यरश्मिभिः। तेजोसिशुक्रम-
स्यमृतमसिधामनामासिप्प्रियन्देवानामनाधृष्टन्देवयजनमसि ॥ ३१ ॥

इति प्रथमोऽध्यायः ॥

## ❀ अथ द्वितीयोऽध्यायः ❀

ॐकृष्णोस्याखरेष्ठोग्ग्नयेत्त्वाजुष्टम्प्रोक्षामिव्वेदिरसिबर्हिषेत्त्वा-
जुष्टाम्प्रोक्षामिबर्हिरसिस्रुग्भ्यस्त्वाजुष्टम्प्रोक्षामि ॥ १ ॥ अदित्यैव्युन्द-
नमसिव्विष्णोस्तपोस्यूर्णम्म्रदसन्त्वास्तृणामिस्वासस्त्थान्देवेभ्योभु-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

वंपतयेस्वाहाभुवंनपतयेस्वाहाभूतानाम्पतयेस्वाहा ॥ २ ॥ गन्धर्व्व स्त्वाविश्श्वावसुः परिदधातुव्विश्श्वस्यारिष्ट्यैयजमानस्यपरिधिरस्य-ग्निरिडऽईडितः । इन्द्रस्यबाहुरसिदक्षिणोव्विश्श्वस्यारिष्ट्यैयजमान-स्यपरिधिरस्यग्निरिडऽईडितः । मित्त्रावरुणौत्त्वोत्तरतःपरिधत्तान्ध्रु-वेणधर्म्मणाव्विश्श्वस्यारिष्ट्यैयजमानस्यपरिधिरस्यग्निरिडऽईडितः ॥ ३ ॥ व्वीतिहोत्त्रन्त्वाकवेद्युमन्तꣳ समिधीमहि । अग्नेबृहन्तमद्ध्वरे ॥ ४ ॥ समिदसिसूर्य्यस्त्वापुरस्तात्त्पातुकस्याश्चिदभिशस्त्यै । सवितु-

---

१. इत्यत्र 'विश्वसहभुवपुषवसुषु' ( शु० य० प्रा० ३।१० ) विश्व इत्ये-तत्पदं सह इत्येतेषु प्रत्ययेषु दीर्घमापद्यते ।

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

र्व्वाहूस्त्थऽऊर्णम्म्रदसन्त्वास्तृणामिस्वासस्थन्देवेब्भ्यऽआत्त्वाव्वसं-
वोरुद्राऽआदित्याःसंदन्तु ॥ ५ ॥ घृताच्च्यसिजुहूर्न्नाम्म्नासेदम्प्रि
येणधाम्म्नाप्प्रियꣳसदऽआसीदघृताच्च्यस्युपभृन्नाम्म्नासेदम्प्रियेणधा-
म्म्नाप्प्रियꣳसदऽआसीदघृताच्च्यसिद्ध्रुवानाम्म्नासेदम्प्रियेणधाम्म्ना-
प्प्रियꣳसदऽआसीदप्प्रियेणधाम्म्नाप्प्रियꣳसदऽआसीद । ध्रुवऽआव-
सदन्नृतस्ययोनौताव्विष्ष्णोपाहिपाहियज्ञम्पाहियज्ञपतिम्पाहिमांयज्ञन्न्यम्
॥ ६ ॥ अग्नेव्वाजजिद्वाजन्त्वासरिष्ष्यन्तंव्वाजजितꣳसम्मार्ज्जिम ।
नमोदेवेब्भ्यः स्वधापितृब्भ्यः सुयमेमेभूयास्तम् ॥ ७ ॥ अस्कन्-
न्नमद्यदेवेब्भ्यऽआज्ज्यꣳसम्भ्रियासमङ्घ्रिणाव्विष्ष्णोमात्त्वावक्क्र-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha
मिषंव्वसुमतीमग्ग्नेतेच्छायामुपस्स्थेषंव्विष्ण्णोस्स्थानमसीतऽइन्द्रो-
व्वीर्य्यमकृणोदूर्द्ध्वोदूर्द्ध्वरऽआस्स्थात् ॥ ८ ॥ अग्ग्नेव्वेहोत्रंव्वे-
र्दूत्युमवतान्त्वान्द्यावापृथिवीऽअवत्वन्द्यावापृथिवीस्विष्ट्टकृद्देवेब्भ्यऽ
इन्द्रऽआज्ज्येनहविषाभूत्स्वाहासञ्ज्योतिषाज्ज्योतिः ॥९॥ मयीदमि-
न्द्रऽइन्द्रियन्दधात्त्वस्मान्न्रायोमघवानःसचन्ताम् । अस्माकꣳसन्त्वा
शिषःसत्त्यानःसन्त्वाशिषऽउपहूतापृथिवीमातोपमाम्पृथिवीमाता-
ह्व्वयतामग्ग्निराग्ग्नीध्रात्त्स्वाहा ॥ १० ॥ उपहूतोद्यौष्प्पितोपमा-
न्द्यौष्प्पिताह्व्वयतामग्ग्निराग्ग्नीध्रात्त्स्वाहा । देवस्यत्त्वासवितुःप्प्र-
सवेश्विनोर्ब्बाहुब्भ्यांपूष्ण्णोहस्ताब्भ्याम् । प्रतिगृह्ण्णाम्म्यग्ग्नेष्ट्वा-
CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

स्येनप्प्राश्नामि ॥ ११ ॥ एतन्तेदेवसवितर्य्यज्ञम्प्राहुर्बृहस्प्पतयेब्ब्र्
ह्मणे । तेनयज्ञमवतेनयज्ञपतिन्तेनमामव ॥ १२ ॥ मनोजूतिज्र्जुषता-
माज्ज्यस्यबृहस्प्पतिर्य्यज्ञमिमन्तनोत्त्वरिष्टँय्यज्ञᳬसमिमन्दधातु ।
व्विश्श्वेदेवासऽइहमादयन्तामोऽम्प्रतिष्ठ ॥ १३ ॥ एषातेऽअग्नेस-
मित्तयाव्वर्द्धस्वचाचप्प्यायस्व । व्वर्द्धिषीमहिचव्वयमाचप्प्यासिषी-
महि । अग्नेव्वाजजिद्वाजन्त्वाससृवाᳬसंव्वाजजितᳬसम्मार्ज्जिम
॥ १४ ॥ अग्नीषोमयोरुज्जितिमनूज्जेषंव्वाजस्यमाप्प्रसवेनप्प्रोहामि।
अग्नीषोमौतमपनुदताँय्योस्मान्द्वेष्टियञ्चव्वयन्द्विष्म्मोव्वाजस्यैनम्प्र-
सवेनापोहामि । इन्द्राग्न्योरुज्जितिमनूज्जेषंव्वाजस्यमाप्प्रसवेनप्प्रो-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

हामि । इन्द्राग्नीतमपनुदतांय्योस्मान्द्वेष्टियञ्चव्वयन्द्विष्मोव्वाज-
स्यैनम्प्रसवेनापोहामि ॥ १५ ॥ व्वसुब्भ्यस्त्वारुद्द्रेब्भ्यस्त्वादित्त्ये-
ब्भ्यस्त्वासञ्जानाथान्द्यावापृथिवीमित्त्रावरुणौत्त्वाव्वृष्ट्यावताम् ।
व्यन्तुव्वयोक्क्तꣳरिहाणाम्मरुताम्पृषतीर्गच्छव्वशापृश्निर्ब्भूत्त्वादिवं-
गच्छततोनोव्वृष्टिमावह । चक्षुष्पाऽअग्नेसिचक्षुर्म्मेपाहि ॥ १६ ॥
यम्परिधिम्पर्य्यधत्थाऽअग्नेदेवपणिभिर्गुह्यमानः । तन्तऽएतमनु-
जोषम्भराम्येषनेत्त्वदपचेतयाताऽअग्नेःप्प्रियम्पाथोपीतम् ॥ १७ ॥
सꣳस्रवभागास्त्थेषाबृहन्तः प्प्रस्तरेष्ठाःपरिधेयाश्चदेवाः । इमांव्वा-
चमभिविश्वेगृणन्तऽआसद्यास्मिन्बर्हिषिमादयद्ध्वꣳस्वाहाव्वाट्

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

॥१८॥ घृताचीस्त्थोधुरुयौंपातꣳसुम्म्नेस्त्थꣳसुम्म्नेमाधत्तम् । यज्ञनमश्श्चतऽउपंचयज्ञस्यंशिवेसन्तिष्ठुस्वस्विष्टटेमेसन्तिष्ठस्व ॥१९॥अग्ग्नेदब्धायोशीतमपाहिमादिद्द्योः पाहिप्प्रसित्त्यैपाहिदुरिंष्ट्यैपाहिदुरद्म्न्न्याऽअंविषन्नꣳपितुङ्कृणुसुषदायोनौस्वाहाव्वाडग्नयेसंव्वेशपतये-स्वाहासरंस्वत्त्यैयशोभगिन्न्यैस्वाहा ॥ २० ॥ व्वेदोसियेनत्त्वन्देंवव्वेददेवेभ्योव्वेदोभंवस्तेनमह्यंव्वेदोभूयाꣳ । देवागातुविदोगातुंव्वित्त्वागातुमित । मनंसस्प्पतऽइमन्देंवयज्ञꣳस्वाहाव्वातेधाꣳ ॥ २१ ॥ स-

१. 'अकारे च' ४।४२ अकारे परे सति सर्वो अकार ओकारमापद्यते । व्वेदोऽसि । इत्यादि ।

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

म्बर्हिरङ्क्ताᳬंहविषाघृतेनसमादित्यैर्व्वसुभिःसम्मरुद्भिः ।
समिन्द्रोविश्श्वदेवेभिरङ्क्तान्दिव्व्यन्नभोगच्छतुयत्स्वाहा ॥ २२ ॥
कस्त्वाविमुञ्चतिसत्त्वाव्विमुञ्चतिकस्मैत्वाविमुञ्चतितस्मैत्वाविमुञ्च-
ति । पोषायरक्षसाम्भागोसि ॥ २३ ॥ संव्वर्चसापयसासन्तनूभिरग-
न्महिमनसासᳬशिवेन । त्वष्टासुदत्रोव्विदधातुरायोनुमार्ष्टुतन्न्वो-
यद्विलिष्टम् ॥ २४ ॥ दिविव्विष्णुर्व्यक्रᳬंस्तजागतेनच्छन्दसात-
तोनिर्भक्क्तोयोस्मान्द्वेष्टियञ्चव्वयन्द्विष्मोन्तरिक्षेव्विष्णुर्व्यक्-
रᳬंस्तत्रैष्टुभेनच्छन्दसाततोनिर्भक्क्तोयोस्मान्द्वेष्टियञ्चव्वयन्द्वि-
ष्मःपृथिव्यांव्विष्णुर्व्यक्रᳬंस्तगायत्रेणच्छन्दसाततोनिर्भक्क्तो-

CC-0, Panini Kanya Maha Vidyalaya Collection

Digitized By Siddhanta eGangotri Gyaan Kosha

स्रुोस्म्मान्द्वेष्टि॒यञ्च॑व॒यन्द्वि॒ष्मुोस्म्मादन्नाद॒स्यैप्प्रति॒ष्ठाया॒ऽअगंन्म॒स्वु-
÷सञ्ज्योतिषाभूम ॥२५॥ स्व॒य॒म्भूर॑सि॒श्श्रेष्ठो॒र॒श्मिम्वर्च्चो॒दाऽअंसि-
वर्च्चो॑मेदेहि । सूर्यस्या॒वृत॒मन्न्वावर्त्ते ॥ २६ ॥ अग्ग्नेगृहपतेसुगृहपति-
स्त्वयाग्ग्ने॒हङ्गृ॒हप॑तिनाभूयासᳬ सुगृहप॒तिस्त्वम्मयाग्ग्नेगृ॒हप॑तिनाभू-
याᳬ । अस्त्थू॒रिणौ॒गार्हपत्त्यानिसन्तुश॒तᳬ हिमा॒ᳬ सूर्यस्या॒व्वृत॒मन्न्वा-
वर्तें ॥२७॥ अग्ग्नेव्व्रतपतेव्व्र॒तम॑चारि॒षन्तद॑शक॒न्तन्म॑राधी॒दम॒हंयऽ
एवास्म्मि॒सोस्म्मि ॥ २८ ॥ अग्ग्नयेकव्व्य॒वाह॑नाय॒स्वाहा॒सोमा॑यपितृ
म॒तेस्वाहा । अप॑हता॒ऽअसु॑रा॒रक्षा॑ᳬसिव्वेदि॒षद॑÷ ॥ २९ ॥ येरू॒पा-
णिप्प्रतिमु॒ञ्च॑माना॒ऽअसु॑राᳬ सन्त॒÷स्वधयाचरन्ति । परा॒पुरो॑नि॒पुरो-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

येभरन्त्यग्निष्ट्वाँल्लोकात्प्रणुदात्यस्मात् ॥ ३० ॥ अत्रपितरोमादय-
ध्वंयथाभागमावृषायध्वम् । अमीमदन्तपितरोयथाभागमावृषा-
यिषत ॥ ३१ ॥ नमोवःपितरोरसायनमोवःपितरःशोषायनमोवःपि-
तरोजीवायनमोवःपितरःस्वधायैनमोवःपितरोघोरायनमोवःपितरो-
मन्यवेनमोवःपितरःपितरोनमोवोगृहान्नःपितरोदत्तसतोवःपि-
तरोदेष्मैतद्वःपितरोवासः ॥ ३२ ॥ आधत्तपितरोगर्भङ्कुमारम्पु-
ष्करस्रजम् । यथेहपुरुषोसत् ॥ ३३ ॥ ऊर्जंवहन्तीरमृतङ्घृतम्प-
यःकीलालम्परिस्रुतम् । स्वधास्थतर्पयतमेपितॄन् ॥ ३४ ॥

इति द्वितीयोऽध्यायः ॥

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

# ❀ अथ तृतीयोऽध्यायः ❀

ॐस॒मिधा॒ग्ग्निन्दु॑वस्यतघृ॒तैर्ब्बो॑धय॒ताति॑थिम् । आस्मि॑न्न्ह॒व्याज्जु॑होतन ॥ १ ॥ सु॒स॑मिद्धायशो॒चिषे॑ । घृ॒तन्ती॒व्रञ्जु॑होतन । अ॒ग्नये॑जा॒तवे॑दसे ॥ २ ॥ तन्त्वा॑स॒मिद्भि॑रङ्गिरोघृ॒तेन॑वर्द्धयामसि । बृ॒हच्छो॑चायविष्ठ्य ॥ ३ ॥ उप॑त्वाग्ने ह॒विष्म॑तीर्घृ॒ताचीर्य॑न्तुहर्य॒त । जु॒षस्व॑स॒मिधो॒मम॑ ॥ ४ ॥ भूर्भुव॒ᳪस्व॒र्द्यौरि॑वभू॒म्नापृ॑थि॒वीव॑ब्वरि॒म्णा । तस्या॑स्तेपृथिविदेवयजनिपृ॒ष्ठे॒ग्निम॑न्ना॒दम॒न्नाद्या॒याद॑धे

१. 'चलुर्नौकास्फुटोदण्डी स्वस्तिकोमुष्टिकाकृतिः । एते वै हस्तदोषाः स्युः परशुश्चैव सप्तमः' ( या० शि० ४४ ) यास्ताकारः ।

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

॥५॥ आयङ्गौःपृश्निरक्क्रमीदसदन्न्मातरम्पुरः । पितरञ्च्चप्प्रयन्त्स्वः
॥ ६ ॥ अन्तश्चरतिरोचनास्यप्प्राणादपानती । व्व्यख्यन्न्महि-
षोदिवम् ॥ ७ ॥ त्रिंशद्धामव्विराजतिवाक्क्पतङ्गायधीयते ।
प्रतिवस्तोरहद्युभिः ॥ ८ ॥ अग्निर्ज्ज्योतिर्ज्ज्योतिरग्निःस्वाहासू-
र्य्योर्ज्ज्योतिर्ज्ज्योतिःसूर्य्यःस्वाहा । अग्निर्व्वर्च्चोर्ज्ज्योतिर्व्वर्च्चःस्वा-
हासूर्य्योव्वर्च्चोर्ज्ज्योतिर्व्वर्च्चःस्वाहा । ज्योतिःसूर्य्यःसूर्य्योर्ज्ज्योति-
स्वाहा ॥ ९ ॥ सजूर्द्देवेनसवित्रासजूरात्र्येन्द्रवत्या । जुषाणोऽअग्नि-
र्वेतुस्वाहा । सजूर्द्देवेनसवित्रासजूरुषसेन्द्रवत्या । जुषाणःसूर्य्योव्वे-
तुस्वाहा ॥१०॥ उपप्रयन्तोऽअध्वरम्मन्त्रंव्वोचेमाग्नये । आरेऽअ-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

स्म्मेचंश्शृण्ण्वते ॥ ११ ॥ अग्ग्निर्म्मूर्द्धादिवःककुत्पतिः पृथिव्व्याऽअ-
यम् । अपाᳬरेताᳬसिजिन्न्वति ॥ १२ ॥ उभावामिन्द्राग्ग्नीऽआहुव-
द्ध्याऽउभाराधसःसहमादयद्ध्यै । उभादातारविषाᳬरयीणामु-
भाव्वाजस्यसातयेहुवेवाम् ॥ १३ ॥ अयन्तेयोनिर्ऋत्त्वियोयतोजातोऽ-
अरोचथाः । तञ्जानन्नग्नऽआरोहाथानोवर्द्धयारयिम् ॥ १४ ॥ अय-
मिहप्प्रथमोधायिधातृभिर्होतायजिष्ठोऽअद्ध्वरेष्ष्वीड्यः । यमप्प्न-
वानोभृगवोव्विरुरुचुर्व्वनेषुचित्रंव्विभ्भ्वंव्विशेविशे ॥ १५ ॥ अस्यप्र-
त्नामनुद्द्युतःशुक्रन्दुदुह्रेऽअह्रयः । पयःसहस्रसामृषिम् ॥ १६ ॥
तनूपाऽअग्ग्नेसितन्न्वम्मेपाह्यायुर्द्दाऽअग्ग्नेस्यायुर्म्मेदेहिवर्च्चोदाऽअ-

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

ग्ग्नेसि॒व्वर्च्चौ॑मेदेहि । अग्ग्ने॒यन्मे॑त॒न्न्वा॒ऽऊ॒नन्तन्म॒ऽआपृ॑ण ॥ १६ ॥
इन्धा॑नास्त्वाश॒तꣳहिमा॑द्द्युमन्त॒ꣳ॒सामि॑धीमहि । व्वयं॑स्वन्तोव्वय॒स्कृ-
त॒ꣳ॒सह॑स्वन्तꣳसह॒स्कृतं॑म् । अग्ग्ने॑सपत्न॒दम्भ॑न॒मद॑ब्धासो॒ऽअदा॑भ्यम् ।
चित्रा॑वसोस्व॒स्तिते॑पा॒रम॑शीय ॥ १८ ॥ सन्त्वम॑ग्ग्ने॒सूर्य॑स्य॒व्वर्च्च॑सा-
ग॒थाꣳसमृषी॑णाꣳस्तु॒तेन॑ । सम्प्रि॒येण॒धाम्म्ना॒समहमायु॑षा॒संव्वर्च्च॑सा॒-
सम्प्र॒जया॒सꣳरा॒यस्पोषे॑णग्ग्मिषीय ॥१९॥ अन्ध॒स्त्थान्धो॑वोभक्षीय॒मह॑-
स्त्थ॒महो॑वोभक्षी॒योर्ज्ज॒स्त्थोर्ज्जं॑वोभक्षीयरा॒यस्पोष॑स्त्थरा॒यस्पोषं॑वोभ- ७
क्षीय ॥२०॥ रेवं॑ती॒रम॑ध्वम॒स्मिन्न्योना॑व॒स्मिन्ग्गो॒ष्ठेस्मिँल्लो॒केस्मि॑न्-
न्क्षये॑ । इ॒हैवस्त॒माप॑गात ॥२१॥ स॒ꣳहि॒तासि॑विश्श्वरू॒प्प्यूर्ज्जामावि-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

शगौपत्स्येन । उपत्वाग्नेदिवेदिवेदोषावस्तर्द्धियाव्वयम् । नमोभरन्तऽ-
एमसि ॥२२॥ राजन्तमद्ध्वराणाङ्गोपामृतस्यदीदिविम् । वर्द्धमानꣳ
स्वेदमे ॥ २३ ॥ सनः पितेवसूनवेग्नेसूपायनोभव । सचस्वानः स्व-
स्तये ॥ २४ ॥ अग्नेत्वन्नोऽअन्तमऽउतत्त्राताशिवोभवावरूत्थ्यः ।
वसुरग्निर्व्वसुश्श्रवाऽअच्छानक्षिद्द्युमत्तमꣳरयिन्दाः ॥ २५ ॥ त-
न्त्वाशोचिष्ठदीदिवः सुम्नायनूनमीमहेसखिब्भ्यः । सनोबोधिश्श्रु-
धीहवमुरुष्याणोऽअघायतः समस्मात् ॥ २६ ॥ इडऽएह्यदितऽए-
हिकाम्म्याऽएत । मयिवः कामधरणम्भूयात् ॥ २७ ॥ सोमा-
नꣳस्वरणङ्कृणुहिब्रह्मणस्पते । कक्षीवन्तंयऽऔशिजः ॥ २८ ॥

Digitized By Siddhanta eGangotri Gyaan Kosha
सोरे॒वान्न्यो॑ऽअ॑मीव॒हाव्व॑सु॒वित्पु॑ष्ट्टि॒वर्द्ध॑नः । सन॑ः सिषक्क्तु॒यस्त्तु॒रः
॥२९॥ मान॒ᳪशᳪसो॒ऽअर॑रुषो धू॒र्त्तिः प्प्रण॒ङ्मर्त्त्य॑स्य । रक्षा॑णो ब्रह्म्म-
णस्प्पते ॥ ३० ॥ महि॒त्त्री॒णामवो॑स्त्तु द्यु॒क्षम्मि॒त्रस्या॒र्य्य॑म्मणः ।
दु॒रा॒धर्ष॑ब्वरु॑णस्य ॥ ३१ ॥ न॒हि तेषा॑म॒मा च॒नना॒द्ध्वसु॒ब्वार॒णेषु॑ । ईशे॑-
रि॒पु॒र॒घशᳪसः ॥ ३२ ॥ ते हि पु॒त्रासो॒ऽअदि॑तेः प्प्रजी॒वसे॒मर्त्त्या॑य ।
ज्योति॒र्य्य॑च्छ॒न्त्यज॑स्रम् ॥ ३३ ॥ क॒दा च॒नस्त्त॒रीर॑सि॒नेन्द्र॑ सश्श्चसि दा॒-
शुषे॑ । उपो॑पेन्नु म॑घवन्भूय॒ऽइन्नु ते॒ दान॑न्दे॒वस्य॑ पृच्च्यते ॥ ३४ ॥
तत्स॑वि॒तुर्व्वरे॑ण्य॒म्भर्ग्गो॑ दे॒वस्य॑ धीमहि । धियो॒ यो नः॑ प्प्रचो॒दया॑त्
॥ ३५ ॥ [ शतम् १०० ] परि॑ ते दू॒डभो॒रथो॒ऽस्माँ२ऽअ॑श्नोतु वि॒श्श्व-
CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

तं÷ । येनरक्षांसिदाशुषं÷ ॥३६॥ भूर्ब्भुवः॒स्व॒÷सुप्प्रजाः॒प्प्रजाभिं÷
स्याᳫंसुवीरो॒व्वीरैः॒सुपोषः॒पोषैः॑ । नर्य्यंप्प्रजाम्मेंपाहिशᳫंस्यंपशू
न्न्मेंपाह्यथर्य्यंपितुम्मेंपाहि ॥ ३७ ॥ आगंन्मविश्श्ववेंदसमस्म्म-
भ्यंव्वसुवित्तंमम् । अग्ग्नेंसम्म्राडभिद्युम्म्नमभिसहऽआयंच्छस्व
॥ ३८ ॥ अयमग्ग्निर्गृहपंतिर्गार्हंपत्यः॒प्प्रजायांव्वसुवित्तंमः॑ । अग्ग्नें-
गृहपतेभिद्युम्म्नमभिसहऽआयंच्छस्व ॥३९॥ अयमग्ग्निः॒पुरीष्ष्योर-
यिमान्पुंष्टिवर्द्धनः॑ । अग्ग्नेंपुरीष्ष्याभिद्युम्म्नमभिसहऽआयंच्छस्व
॥४०॥ गृहामाबिंभीतमाव्वेंपद्ध्वमूर्ज्जंम्बिब्भ्रंतऽएमंसि । ऊर्ज्जंम्बि
ब्भ्रंद्वः॒सुमनाः॒सुमेधागृहानैमिमनंसामोदमानः॑ ॥ ४१ ॥ येषाम-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

द्धयोतिंप्रवसन्न्येषुसौमनसोबहुः । गृहानुपंह्वयामहेतेनोजानन्तु-
जानतः ॥ ४२ ॥ उपंहूताऽइहगावऽउपंहूताऽअजावयः । अथोऽ-
अन्नस्यकीलालऽउपंहूतोगृहेषुनः । क्षेमायवःशान्त्यैप्रपद्येशिवꣳ
शग्मꣳशंय्योःशंय्योः ॥ ४३ ॥ प्रघासिनोहवामहेमरुतश्चरिशा-
दसः । करम्भेणसजोषसः ॥४४॥ यद्ग्रामेयदरंण्ण्येयत्सभायांय्य-
दिन्द्रिये । यदेनश्चकृमाव्वयमिदन्तदवंयजामहेस्वाहा ॥ ४५ ॥
मोषूणऽइन्द्रात्त्रपृत्सुदेवैरस्तिहिष्म्मातेशुष्मिन्नवयाः । महश्चि-
द्यस्यमीढुषोयव्व्याहविष्म्मतोमरुतोव्वन्दतेगीः ॥ ४६ ॥ अक्रन्क-
र्म्मकर्म्मकृतःसहव्वाचामयोभुवा । देवेभ्यःकर्म्मकृत्वास्तम्प्रेतस-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

चाभुवः ॥ ४७ ॥ अवभृथनिचुम्पुणनिचेरुरसिनिम्पुणः । अवदेवै-
र्देवकृतमेनोयासिषमवमर्त्यैर्मर्त्यकृतम्पुरुराव्णोदेवरिषस्पाहि ॥४८॥
पूर्णादर्विपरापतसुपूर्णापुनरापत । वस्नेवविक्रीणावहाऽइष-
मूर्ज᳖ᳫंशतक्रतो ॥ ४९ ॥ देहिमेददामितेनिमेधेहिनितेदधे । निहा-
रञ्चहरासिमेनिहारन्निहराणितेस्वाहा ॥ ५० ॥ अक्षन्नमीमदन्तह्
ह्यवप्रियाऽअधूषत । अस्तोषतस्वभानवोविप्रानविष्ठयामतीयो-
जान्विन्द्रतेहरी ॥ ५१ ॥ सुसन्दृशन्त्वाव्वयम्मघवन्वन्दिषीमहि ।
प्रनूनम्पूर्णबन्धुरस्तुतोयासिव्वशाँ२ऽअनुयोजान्विन्द्रतेहरी ॥ ५२ ॥
मानोन्वाह्वामहेनाराश᳖ᳫंसेनस्तोमेन । पितृणाञ्चमन्मभिः ॥ ५३ ॥

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

आनऽएतुमनःपुनःक्क्रत्वेदक्षायजीवसे । ज्योक्चसूर्य्यन्दृशे ॥५४॥
पुनर्न्नःपितरोमनोददातुदैव्योजनः । जीवंव्व्रातꣳसचेमहि ॥५५॥
व्वयꣳसोमव्व्रतेतवमनस्तनूषुबिब्भ्रतः । प्रजावन्तःसचेमहि ॥५६॥
एषतेरुद्द्रभागःसहस्वस्राम्बिकयातञ्जुषस्वस्वाहैषतेरुद्द्रभागऽआ-
खुस्तेपशुः[1] ॥५७॥ अवरुद्द्रमदीमह्यवदेवन्त्र्यम्बकम् । यथानो

1. 'तथयोः सम्'श० प्रा० ३।८ तकारथकारयोः परयोः विसर्जनीयः सकारमापद्यते। तकारे—'आखुः ते पशुः' इत्यत्र विसर्गस्य सकारो भवति। एवम्—'नमः ते रुद्र' १६।१। इत्यादिषु। संहितायां विसर्जनीयसन्धिस्तु न विद्यते अतो रूपोदाहरण दीयते कः थकारः कस्थकारः।

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

व्वस्यंसस्करद्यथानःश्श्रेयसस्करद्यथानोव्व्यवसाययात् ॥ ५८ ॥
भेषजमसिभेषजङ्गवेश्श्वायपुरुषायभेषजम् । सुखम्मेषायमेष्ष्यै ॥५९॥
त्र्यम्बकंय्यजामहेसुगन्धिम्पुष्टिवर्द्धनम् । उर्व्वारुकमिवबन्धनान्मृ-
त्योर्म्मुक्षीयमामृतात् । त्र्यम्बकंय्यजामहेसुगन्धिम्पतिवेदनम् ।
उर्व्वारुकमिवबन्धनादितोमुक्षीयमामुतः ॥ ६० ॥ एतत्तेरुद्द्रावु-
सन्तेनपरोमूजवतोतीहि । अवततधन्न्वापिनाकावसःकृत्तिवासाऽ-
अहिंᳫसन्नःशिवोतीहि ॥ ६१ ॥ त्र्यायुषञ्जमदग्ग्नेःकश्श्यपस्यत्र्यायु-
षम् । यद्देवेषुत्र्यायुषन्तन्नोऽअस्तुत्र्यायुषम् ॥६२॥ शिवोनामासि-
स्वधितिस्त्तेपितानमस्तेऽअस्तुमामाहिंᳫसीः । निर्वर्त्तयाम्म्यायुषेन्ना-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha



दुर्घायप्प्रजननायरायस्प्पोषायसुप्प्रजास्त्वायसुवीर्य्याय ॥ ६३ ॥

इति तृतीयोऽध्यायः ॥

## ॐ अथ चतुर्थोऽध्यायः ॐ

ॐ एदमगन्म्मदेवयजनम्पृथिव्व्याऽयत्रदेवासोऽअजुषन्तव्विश्श्वे ।
ऋक्क्सामाभ्याᳪंसन्तरन्तोयजुर्ब्भीरायस्प्पोषेणसमिषामदेम । इमा-
ऽआपᳪंशमुमेसन्तुदेवीरोषधेत्त्रायस्वस्वधितेमैनᳪंहिᳪंसीः ॥ १ ॥
आपोऽअस्म्मान्म्मातरःशुन्धयन्तुघृतेननोघृतप्प्वःपुनन्तु । वि-

---

१. 'न कुर्वीत पदं दीर्घं न चाऽप्यन्तविलम्बितम् । पदस्य ग्रहमोक्षौ च यथाशीघ्रगतिर्हयः ।' ( या० शि० ४६ )

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

श्श्वद्दे॒हिरि॑प्रप्प्रवहन्ति॒दे॒वीरु॒दिदा॑भ्य॒ꣳशु॒चि॒रापु॒तऽए॑मि । दी॒क्षा॒तप॒-
सो॑स्त॒नूर॑सि॒तान्त्वा॑शि॒वाꣳश॒ग्ग्माम्परि॑दधेभ॒द्द्रं॑व॒र्णम्पु॒ष्य॑न् ॥ २ ॥
म॒हीना॒म्पयो॑सिव॒र्च्चो॒दा॑ऽअसि॒व॒र्च्चो॑मेदेहि । वृ॒त्रस्या॑सिक॒नीन॑क-
श्चक्षु॒र्द्दाऽअ॑सि॒चक्षु॒र्म्मे॑देहि ॥ ३ ॥ चि॒त्पति॑र्म्मापुनातु॒वा॒क्पति॑र्म्मा-
पुनातु॒दे॒वोमा॑सवितापु॑ना॒त्वच्छि॑द्द्रेण॒पवि॒त्त्रे॑ण॒सूर्य॑स्य॒र॒श्मिभिः॑ ।
तस्य॑तेपवित्रपतेप॒वित्र॑पूतस्य॒यत्का॑मꣳपु॒नेतच्छ॑केयम् ॥ ४ ॥ आवो॑-
देवासऽईमहेवा॒मम्प्र॑य॒त्त्य॒द्ध्व॒रे । आवो॑देवासऽआ॒शिषो॑य॒ज्ञियासो॑-
हवामहे ॥ ५ ॥ स्वाहा॑य॒ज्ञम्मन॑स॒ꣳस्वाहो॒रोर॒न्तरि॑क्षा॒त्स्वाहा॒द्द्यावा॑-
पृ॒थि॒वीभ्या॒ꣳस्वाहा॒व्वाता॒दार॑भे॒स्वाहा॑ ॥ ६ ॥ आकू॑त्यैप्प्र॒युजे॒ग्नये॒-

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

स्वाहामेधायैमनसेग्नयेस्वाहादीक्षायैतपसेग्नयेस्वाहासरस्वत्यैपूष्णे--
ग्नयेस्वाहा । आपोदेवीर्बृहतीर्व्विश्श्वशम्भुवोद्यावापृथिवीऽउरोऽ-
अन्तरिक्ष । बृहस्पतयेहविषाव्विधेमस्वाहा ॥ ७ ॥ व्विश्श्वोदेवस्य
नेतुर्म्मर्त्तोव्वुरीतसख्यम् । व्विश्श्वोरायऽइषुध्यतिद्युम्नंव्वृणी-
तपुष्यसेस्वाहा ॥८॥ ऋक्सामयोःशिल्पेस्त्थस्तेव्वामारभेतेमापा-
तमास्ययज्ञस्योदृचः । शर्म्मासिशर्म्ममेयच्छनमस्तेऽअस्तुमामा-
हिꣳसीः ॥ ९ ॥ ऊर्ग्गस्याङ्गिरस्यूर्णम्म्रदाऽऊर्ज्जम्मयिधेहि । सोमस्य
नीविरसिव्विष्ण्णोःशर्म्मासिशर्म्मयजमानस्येन्द्रस्ययोनिरसिसुस-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By SIddhanta eGangotri Gyaan Kosha

स्याᳬ[1]कृषीस्कृधि । उच्छ्रयस्वव्वनस्पतऽऊर्द्ध्वोमापाह्यᳬहंसऽआ-
स्ययज्ञस्योदृचः ॥ १० ॥ व्व्रतङ्कृणुताग्निर्ब्रह्माग्निर्यज्ञोव्वनस्प-
तिर्यज्ञियः । दैवीन्धियम्मनामहेसुमृडीकामभिष्टयेवर्च्चोधाँयज्ञ-
वाहसᳬसुतीर्त्थानोऽअसद्वशे । येदेवामनोजातामनोयुजोदक्षक्क्रत-
वस्तेनोवन्तुतेनःपान्तुतेब्भ्यःस्वाहा ॥ ११ ॥ श्वात्त्राःपीताभवत

---

१. इत्यत्र 'कृषीश्च कृधौ सकारम् ( शु० य० प्रा० ३।२४ )' इति सूत्रेण कृधौ प्रत्यये ( परे सति ) कृषीरित्ययं विसर्जनीयः सकारमापद्यते । ननु—'कविष्कृरस्कृधिषु ( ३।२२ )' इत्यनेनैव गतार्थत्वात् व्यर्थमिदं सूत्रमिति चेत्स-त्यम् । भाव्युपधस्य षत्वं नियतं तन्माभूदित्येतदर्थमित्यदोषः ।

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha
यूयमापोऽअस्म्माकमन्तरुदरेसुशेवा÷ । ताऽअस्म्मब्भ्यमयक्ष्माऽअन-
मीवाऽअनागसḥस्वदन्तुदेवीरमृताऽऋतावृध÷ ॥ १२ ॥ इयन्तेय-
ज्ञियातनूरपोमुञ्चामिनप्प्रजाम् । अꣳहोमुचḥस्वाहाकृताḥपृथिवीमा-
विशतपृथिव्व्यासम्भव ॥ १३ ॥ अग्ग्नेत्त्वꣳसुजागृहिव्वयꣳसुमन्दि-
षीमहि । रक्षाणोऽअप्प्रयुच्छन्न्प्रबुधेनḥपुनस्कृधि ॥ १४ ॥ पुनर्म्मनḥ
पुनरायुर्म्मऽआगन्न्पुन ÷ प्प्राणःपुनरात्त्मामऽआगन्न्पुनश्चक्षुḥपुनः
श्रोत्त्रम्मऽआगन् । व्वैश्श्वानरोऽअदब्धस्त्तनूपाऽअग्ग्निर्न्न÷पातुदु-
रितादवद्यात् ॥ १५ ॥ त्वमग्ग्नेव्व्रतपाऽअसिदेवऽआमर्त्त्येष्ष्वा ।
त्वँय्यज्ञेष्ष्वीड्य÷ रास्वेयत्त्सोमाभूयोभरदेवोन ÷ सविताव्वसोर्दाता
CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha
व्वस्वंदात् ॥१६॥ एषातेंशुक्क्रतनूरेतद्वर्च्चस्त्तयासम्भंवब्भ्राजंङ्गच्छ।
जूरंसिधृतामनंसाजुष्ट्ठाव्विष्ण्णंवे ॥ १७ ॥ तस्यांस्त्तेसत्त्यसंवसःप्प्रस-
वेतन्न्वोयन्त्रमंशीयस्वाहा । शुक्क्रमंसिचन्द्रमंस्यमृतंमसिव्वैश्श्वदेवम-
सि ॥ १८ ॥ चिदंसिमनासिधीरंसिदक्षिणासिक्षत्त्रियांसियज्ञियास्य-
दिंतिरस्युभयतःशीष्ष्णीं । सानःसुप्प्राचीसुप्प्रतीच्च्येधिमित्त्रस्त्वांप-
दिबंध्नीताम्पूषाद्ध्वंनस्प्पात्त्विन्द्रायाद्ध्यंक्षाय ॥ १९ ॥ अनुंत्त्वामा-
तामंन्न्यतामनुंपितानुब्भ्रातासगब्भ्योंनुसखासयूत्थ्यः । सादेंविदेव-
मच्छेहीन्द्रायसोमंरुद्रस्त्वावंर्त्तयतुस्वस्त्तिसोमंसखापुनरेहिं ॥२०॥
व्वस्व्यस्यदिंतिरस्यादित्यासिरुद्रासिंचन्द्रासिं । बृहस्प्पतिंष्ट्वासु-
CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

म्म्नेरम्म्णातुरुद्द्रोव्वसुभिराचके ॥ २१ ॥ अदित्त्यास्त्वामूर्द्धन्नाजिघर्म्मिदेवयजनेपृथिव्व्याऽइडायास्प्पदमसिघृतवत्स्वाहा । अस्म्मेरमस्वास्म्मेतेबन्धुस्त्वेरायोमेरायोमाव्वयꣳरायस्प्पोषेणव्वियौष्म्मतोतोरायः ॥ २२ ॥ समक्ख्येदेव्व्याधियासन्दक्षिणयोरुचक्षसा । मामऽआयुःप्प्रमोषीम्मोऽअहन्तवव्वीरंव्विदेयतवदेविसन्दृशि ॥२३॥ एषतेगायत्त्रोभागऽइतिमेसोमायब्ब्रूतादेषतेत्त्रैष्टुभोभागऽइतिमेसोमायब्ब्रूतादेषतेजागतोभागऽइतिमेसोमायब्ब्रूताच्छन्दोनामानाꣳसाम्म्राज्ज्यङ्गच्छेतिमेसोमायब्ब्रूतादास्म्माकोसिशुक्क्रस्तेग्ग्रह्य्योव्विचितस्त्वाव्विचिन्न्वन्तु ॥ २४ ॥ अभित्त्यन्देवꣳसवितारमोण्ण्योः कविक्क्र-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By SIddhanta eGangotri Gyaan Kosha
तुमच्चामिसत्त्यसवꣳरत्नधामभिप्प्रियम्मतिङ्कुविम् । ऊर्द्ध्वायस्या-
मतिर्भाऽअदिद्युतत्सवीमनिहिरंण्ण्यपाणिरमिमीतसुक्क्रतुं÷कृपा-
स्वं÷ । प्रजाब्भ्यंस्त्वाप्प्रजास्त्वानुप्प्राणन्तुप्प्रजास्त्वमनुप्प्राणिहि
॥२५॥ शुक्क्रन्त्वाशुक्क्रेणक्क्रीणामिचन्द्रञ्चन्द्रेणामृतममृतेन । सग्ग्मे-
तेगोरस्म्मेतेचन्द्राणितपसस्तनूरसिप्प्रजापतेर्व्वण्णं÷परमेणपशुनाक्क्री-
यसेसहस्रपोषम्पुषेयम् ॥ २६ ॥ मित्रोनऽएहिसुमित्रधऽइन्द्रस्यो-
रुमाविंशदक्षिणमुशन्नुशन्तꣳस्योनःस्योनम् । स्वानब्भ्राजाङ्घारेब-
म्भारेहस्तसुहस्तकृशानवेतेवं÷सोमक्क्रयंणास्तान्नक्षदुध्वम्मावोदभन्
॥ २७ ॥ परिमाग्ग्नेदुश्चरितादुद्बाधस्वामासुचरितेभज । उदायुषा
CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

स्वायुषोदंस्त्थाममृताँ२ऽअनु ॥२८॥ प्रतिपन्थामपद्महिस्वस्तिगामनेहसम् । येनव्विश्श्वाः परिद्विषोव्वृणक्ति विन्दतेव्वसु ॥ २९ ॥ अदित्यास्त्वगस्यदित्यैसद्ऽआसीद । अस्तभ्नाद्द्यांव्वृषभोऽअन्तरिक्षममिमीतव्वरिमाणम्पृथिव्याः । आसीदद्विश्श्वाभुवनानिसम्म्राड्विश्श्वेत्तानिव्वरुणस्यव्व्रतानि ॥३०॥ व्वनेषुव्व्यन्तरिक्षन्ततानव्वाजमर्व्वत्सुपयऽउस्रियासु । हृत्सुक्क्रतुंव्वरुणोव्विक्क्ष्वग्गिनन्दिविसूर्यमदधात्सोममद्रौ ॥३१॥ सूर्य्यस्यचक्षुरारोहाग्नेरक्ष्णःकनीनकम् ॥ यत्रतशेभिरीयसेभ्राजमानोविपश्चिता ॥ ३२ ॥ उस्रावेतन्धूर्षा।

CC-0. Jhalani Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

हौषुज्ज्येथामनश्श्रूऽअवीरहणौब्ब्रह्म्मम्मचोदनौ । स्वस्त्तियजमानस्यगृ-
हान्न्गच्छतम् ॥ ३३ ॥ भद्द्रोमेसिष्प्रच्च्यवस्वभुवस्प्पतेव्विश्श्वान्न्य-
भिधामानि । मात्त्वापरिपरिणोव्विदन्न्मात्त्वापरिपन्थिनोव्विदन्न्मा-
त्त्वाव्वृकाऽअघायवोव्विदन् । श्श्येनोभूत्त्वापरापतयजमानस्यगृहान्न्गा-
च्छतन्नौसँस्कृतम् ॥ ३४ ॥ नमोमित्त्रस्यव्वरुणस्यचक्षसेमहोदेवायत-
दृतᳬसपर्य्यत । दूरेदृशेदेवजातायकेतवेदिवस्प्पुत्त्रायसूर्य्यायशᳬसत

---

१. अत्र तत्पुरुषसमासः।

२. इत्यत्र 'दिवोऽकद्रुत्पृथिव्योः (३।२४) इति सूत्रेण कद्रुत्पृथिवीशब्दौ वर्जयित्वा दिव इत्येतस्य सम्बन्धी विसर्जनीयः सकारमापद्यते ।

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

॥ ३५ ॥ व्वरुणस्योत्तम्भनमसिव्वरुणस्यस्कम्भसर्ज्जनीस्त्थोव्वरुण स्यऽऋतसदन्न्यसिव्वरुणस्यऽऋतसदनमसिव्वरुणस्यऽऋतसदनमा सीद ॥ ३६ ॥ याते धामानिहविषायजन्तितातेव्विश्श्वापरिभूरस्त्तुय- ज्ञम् । गयस्फानःप्रतरणःसुवीरोवीरहाप्रचरासोमदुर्य्यान् ॥३७॥

इति चतुर्थोऽध्यायः ।

## ❀ अथ पञ्चमोऽध्यायः ❀

ओ३म् अग्ग्नेस्त्तनूरसिव्विष्ण्णवेत्त्वासोमस्यतनूरसिव्विष्ण्णवेत्त्वातिथे-

---

१. 'यथा वाणी तथा पाणी रिक्तं तु परिवर्जयेत् । यत्र यत्र स्थिता वाणी पाणिस्यत्रैव तिष्ठति (या० शि० ४७)।

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

रातिथ्यमसिव्विष्णवेत्त्वाश्श्येनायत्त्वासोमभृतेव्विष्णवेत्त्वाग्ग्नयेत्त्वा-
रायस्पोषदेव्विष्णवेत्त्वा ॥ १ ॥ अग्ग्नेर्ज्जनित्रमसिव्वृषणौस्त्थऽउ-
र्व्वशीस्यायुरसिपुरूरवाऽअसि । गायत्रेणत्त्वाच्छन्दसामन्थामित्रै-
ष्टुभेनत्त्वाच्छन्दसामन्थामिजागतेनत्त्वाच्छन्दसामन्थामि ॥ २ ॥
भवतन्नः᳘समनसौसचेतसावरेपसौ । मायज्ञᳬहिᳬसिष्ट्टम्मायज्ञपतिं-
ज्जातवेदसौशिवौभवतमद्यनः ॥ ३ ॥ अग्नावग्निश्चरतिप्प्रविष्टऽ-
ऋषीणाम्पुत्त्रोऽअभिशस्तिपावा । सनः स्योनः सुयजायजेहदेवेब्भ्यो-
हव्यᳬसदमप्प्रयुच्छन्त्स्वाहा ॥४॥ आपतयेत्त्वापरिपतयेगृह्णामितनू-
नप्त्रेशाक्क्वरायशक्क्वनऽओजिष्ठाय । अनाधृष्टमस्यनाधृष्ष्यन्देवाना-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

मोजोनभिशस्त्यभिशस्तिपाऽअनभिशस्तेन्न्यमञ्जसासत्त्यमुपगेषꣳस्वि-
तेमाधाः ॥ ५ ॥ अग्ग्नेव्व्रतपास्त्वेव्व्रतपाषातवतनूरियꣳसामयि
षोममतनूरेषासात्त्वयि । सहनौव्व्रतपतेव्व्रतान्न्यनुमेदीक्षान्दीक्षाप-
तिर्म्मन्न्यतामनुतपस्त्तपस्प्पतिः ॥ ६ ॥ अꣳशुरꣳशुष्टेदेवसोमाप्प्या-
यतामिन्द्रायैकधनविदे । आतुभ्भ्यमिन्द्रः प्प्यायतामात्त्वमिन्द्राय-
प्प्यायस्व । आप्प्याययास्म्मान्त्सखीन्त्सन्न्यामेधयास्वस्त्तितेदेवसो-
मसुत्त्यामशीय । एष्टारायः प्प्रेषेभगायऽऋतमृतवादिभ्भ्योनमोद्द्या-
वापृथिवीभ्याम् ॥ ७ ॥ षातेऽअग्ग्नेयः शयातनूर्व्वर्षिष्ठागह्वरेष्ठा ।
उग्ग्रंव्वचोऽअपावधीत्त्वेषंव्वचोऽअपावधीत्स्वाहा । षातेऽअग्ग्नेरजःश

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

यातनूर्व्वर्षिष्ठागह्वरेष्ठा । उग्ग्रंव्वचोऽअपावधीत्त्वेषंव्वचोऽअपाव-
धीत्स्वाहा । यातेऽअग्ग्नेहरिशयातनूर्व्वर्षिष्ठागह्वरेष्ठा । उग्ग्रंव्व-
चोऽअपावधीत्त्वेषंव्वचोऽअपावधीत्स्वाहा ॥ ८ ॥ तप्पायनीमेऽसि-
व्वित्तायनीमेस्यवतान्मानाथितादवतान्माव्यथितात् । व्विदेदग्ग्नि-
र्न्नभोनामाग्ग्नेऽअङ्गिरऽआयुनानाम्नेहियोस्यास्पृथिव्यामसियत्तेना-
धृष्टन्नामयज्ञियन्तेनत्त्वादधेव्विदेदग्ग्निर्न्नभोनामाग्ग्नेऽअङ्गिरऽआयुना

---

१. इत्यत्र 'हरिशयेत्येके' ( ३।१२९ ) शयप्रत्यये परे सति हरीत्यस्य एके आचार्या दीर्घमिच्छन्ति । अत्र पाठव्यवस्था कृता—प्रथमशाखिनां काण्वानां दीर्घपाठः । अन्येषां ह्रस्वपाठ इत्यर्थः ।

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

नाम्म्नेहिषोद्द्वितीयस्याम्पृथिव्व्यामसियत्तेनाधृष्ट्टन्नामंयज्ञियन्तेनत्त्वा
दधेव्विदेदग्निर्न्नभोनामाग्नेऽअङ्गिरऽआयुनानाम्म्नेहियस्तृतीयस्या-
म्पृथिव्व्यामसियत्तेनाधृष्ट्टन्नामंयज्ञियन्तेनत्त्वादधे । अनुत्त्वादेववीतये
॥९॥ सिᳯंह्यसिसपत्नसाहीदेवेब्भ्यः कल्पस्वसिᳯंह्यसिसपत्न-
साहीदेवेब्भ्यः शुन्धस्वसिᳯंह्यसिसपत्नसाहीदेवेब्भ्यः शुम्भस्व
॥१०॥ इन्द्रघोषस्त्वाव्वसुभिः पुरस्त्तात्पातुप्प्रचेतास्त्वारुद्द्रैः पश्चात्पा-
तुमनोजवास्त्वापितृभिर्द्दक्षिणतः पातुव्विश्श्वकर्म्मात्त्वादित्यैरुत्तरतः
पात्विदमहन्तप्प्तंव्वार्व्बहिर्द्धायज्ञान्निःसृजामि ॥ ११ ॥ सिᳯंह्यसि-

१. यथा कामातुरा नारी शब्दं कुर्यात् हिते हिते । तच्छब्दं कुरुते प्राज्ञः 'सिᳯं'

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

स्वाहासि॑ऽह्यूषस्यादित्यवनि॑स्वाहासि॑ऽह्यूषसिब्ब्रह्मवनि॑ः क्षत्रव-
नि॑स्वाहासि॑ऽह्यूषसिसुप्प्रजावनीरायस्प्पोषवनि॑स्वाहासि॑ऽद्यूष-
स्यावंहदेवान्न्यजमानायस्वाहाभूतेब्भ्यंस्त्वा ॥१२॥ ध्रुवोसिपृथिवीन्दृ॑ह
ध्रुवक्षिदस्यन्तरिक्षन्दृ॑हाच्युतक्षिदसिदिवन्दृ॑हाग्ग्नेःपुरीषमसि
॥१३॥ युञ्जतेमनऽउतयुञ्जतेधियोव्विप्प्राव्विप्रस्यबृहतोव्विपश्चितः।
व्विहोत्रादधेव्वयुनाविदेकऽइन्न्मही देवस्यसवितुःपरिष्टुतिःस्वाहा
॥ १४ ॥ इदंव्विष्णुर्व्विचक्क्रमेत्रेधानिदधेपदम्। समूढमस्यपा॑ऽसुरे-

---

ह्यसि' इति दर्शनम्। कामातुरा रतिभावं प्राप्ता नारी दिने दिने रात्रौ पति-
प्रसंङ्गे 'सिऽसि' इति ध्वनिं करोति। तथा प्रावः तद्वत्कारिध्वनिं कुर्वीत।

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

स्वाहा ॥ १५ ॥ इरावतीधेनुमतीहिभूतꣳसूयवसिनीमनवेदशस्या ।
व्व्यस्कभ्नारोदसीव्विष्णवेतेदाधर्त्थपृथिवीमभितोमयूखैःस्वाहा
॥१६॥ देवश्श्रुतौदेवेष्ष्वाघोषतम्प्राचीप्प्रेतमद्ध्वरङ्कल्प्पयन्तीऽऊर्द्ध्वं-
य्यज्ञन्नयतम्माजिह्व्वरतम् । स्वङ्गोष्ठमावदतन्देवीदुर्य्येऽआयुर्म्मा-
निर्व्वादिष्टम्प्रजाम्मानिर्व्वादिष्टमत्त्ररमेथांव्वर्ष्मन्पृथिव्व्याः ॥ १७ ॥
व्विष्णोर्न्नुकंव्वीर्य्याणिप्प्रवोचंय्यःपार्थिवानिव्विममेरजाꣳसि ।
योऽअस्कभायदुत्तरꣳसधस्त्थंव्विचक्रमाणस्त्रेधोरुगायोव्विष्णवे-
त्वा ॥ १८ ॥ दिवोवाव्विष्णऽउतवापृथिव्व्यामहोवाव्विष्णऽउरोर-
न्तरिक्षात् । उभाहिहस्ताव्वसुनापृणस्वाप्प्रयच्छदक्षिणादोतसव्व्या-

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

द्द्विष्ष्णवेत्त्वा ॥१९॥ प्रतद्विष्ष्णुस्तवतेव्वीर्य्येणमृगोनभीमःकुच-
रोगिरिष्ठाः । यस्योरुषुत्रिषुव्विक्क्रमणेष्वधिक्षियन्तिभुवनानिव्वि-
श्श्वा ॥२०॥ विष्ष्णोरराटमसिव्विष्ष्णोःश्नप्त्रेस्त्थोव्विष्ष्णोःस्यूर-
सिव्विष्ष्णोर्द्ध्रुवोसि । व्वैष्ष्णवमसिव्विष्ष्णवेत्त्वा ॥ २१ ॥ देवस्य-
त्त्वासवितुःप्प्रसवेश्श्विनोर्ब्बाहुब्भ्याम्पूष्ष्णोहस्त्ताब्भ्याम् । आददेना-
र्य्यसीदमहꣳरक्षसाङ्ग्रीवाऽअपिकृन्तामि । बृहन्नसिबृहद्द्रवाबृहती-
मिन्द्रायव्वाचंव्वद ॥ २२ ॥ रक्षोहणंव्वलगहनंव्वैष्ष्णवीमिदमहन्तंव्व-
लगमुत्त्किरामियम्मेनिष्ट्ट्योयममात्त्योनिचखानेदमहन्तंव्वलगमुत्त्किरा
मियम्मेसमानोयमसमानोनिचखानेदमहन्तंव्वलगमुत्त्किरामियम्मेस-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

बन्धुर्य्यंमसंबन्धुर्न्निचखानेदमहन्तंव्वंलगमुत्किरामियम्मेंसजातोयमसं-
जातोनिचखानोत्कृत्याङ्किरामि ॥२३॥ स्वराडंसिसपत्नहासंत्रराडं-
स्यभिमातिहाजंनराडंसिरक्षोहासंव्वंराडंस्यमित्रहा ॥२४॥ रक्षोहणंो
वोव्वलगहनंःप्प्रोक्षामिव्वैष्ष्णवान्रंक्षोहणोंवोव्वलगहनोवंनयामिव्वै-
ष्ष्णवान्रंक्षोहणोंवोव्वलगहनोवंस्तृणामिवैष्ष्णवान्रंक्षोहणौवांव्वलग-
हनाऽउपंदधामिव्वैष्ष्णवीरंक्षोहणौवांव्वलगहनौपर्य्यूंहामिव्वैष्ष्णवी-
व्वैष्ष्णवमंसिव्वैष्ष्णवास्त्थं ॥ २५ ॥ देवस्यंत्त्वासवितुःप्प्रंसवेशिव-
नोर्ब्बाहुभ्यांम्पूष्ष्णोहस्त्ताभ्याम् । आददेनार्य्यंसीदमहꣳरक्षंसा-
ङ्ग्रीवाऽअपिंकृन्तामि । यवोसियवयास्मद्द्वेषोयवयारातीर्द्दिवेत्त्वा-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

न्तरिक्षायत्त्वापृथिव्यैत्त्वाशुन्धन्ताँल्लोकाःपितृषदनाःपितृषदनमसि
॥ २६ ॥ उद्दिवंस्तभानान्तरिक्षम्पृणदृहस्वपृथिव्यान्द्युतानस्त्वा-
मारुतोमिनोतुमित्रावरुणौद्ध्रुवेणधर्म्मणा । ब्रह्मवनित्वाक्षत्रवनि-
रायस्पोषवनिपर्य्यूहामि । ब्रह्मदृहक्षत्रन्दृहायुर्दृहप्रजान्दृह
॥२७॥ ध्रुवासिध्रुवोयँय्यजमानोस्मिन्नायतनेप्प्रजयापशुभिर्भूयात् ।
घृतेनद्यावापृथिवीपूर्य्येथामिन्द्रस्यच्छदिरसिव्विश्वजनस्यच्छाया
॥२८॥ परित्वागिर्व्वणोगिरऽइमाभवन्तुव्विश्वतः । व्वृद्धायुमनुवृद्ध-
योजुष्टाभवन्तुजुष्टयः ॥२९॥ इन्द्रस्यस्यूरसीन्द्रस्यद्ध्रुवोसि। ऐन्द्रम-
सिव्वैश्वदेवमसि ॥३०॥ विभूरसि प्रवाहणो वह्निरसि हव्यवाहनः ।

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha
श्वात्रोसिप्प्रचेतास्तुथोसिव्विश्ववेदाऽउशिगसि ॥ ३१ ॥ उशिगसि
कविरङ्घारिरसिबम्भारिरवस्यूरसिदुवस्वाञ्छुन्ध्यूरसिमार्ज्जालीयः
सम्म्राडसिकृशानुः परिषद्द्योसिपवमानोनभोसिप्प्रतक्क्वामृष्टोसिहव्व-
व्यसूदनऽऋतधामासिस्वर्ज्योतिः समुद्रोसि ॥ ३२ ॥ समुद्रोसि
व्विश्वव्व्यचाऽअजोस्येकपादहिरसिबुध्न्योव्वागस्यैन्द्रमसिसदोस्यृत-
स्यद्वारौमामासन्ताप्प्तमद्ध्वनामद्ध्वपतेप्प्रमातिरस्वस्तिमेस्मिन्न्प-
थिदेवयानेभूयान्न्मित्रस्यमा ॥३३॥ मित्रस्यमा चक्षुषेक्षद्ध्वमग्ग्नयः
सगराः सगरास्त्थसगरेणनाम्म्नारौद्रेणानीकेनपातमाग्ग्नयःपिपृतमा-
ग्ग्नयोगोपायतमानमोवोस्तुमामाहिः सिष्ट ॥ ३४ ॥ ज्योतिरसि
CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

व्विश्श्वरूपंव्विश्श्वेषान्देवानाꣳसमित् । त्वꣳसोमतनूकृद्भ्योद्द्वेषो-
भ्योन्यकृतेभ्यऽउरुयन्तासिवरूथꣳस्वाहाजुषाणोऽअप्तुराज्ज्यस्यव्वे-
तुस्वाहा ॥ ३५ ॥ [शतम् २००] अग्ग्नेनयसुपथारायेऽअस्म्मान्व्वि-
श्श्वानिदेवव्वयुनानिव्विद्द्वान् । युयोद्ध्यस्म्मज्जुहुराणमेनोभूयि-
ष्ठान्तेनमऽउक्तिंव्विधेम ॥ ३६ ॥ अयन्नोऽअग्निर्व्वरिवस्कृणोत्त्वय-
म्मृधः पुरऽएतुप्रभिन्दन् । अयंव्वाजाञ्जयतुव्वाजसातावयꣳशत्रू-
ञ्जयतुजर्हृषाणꣳस्वाहा ॥ ३७ ॥ उरुव्विष्णोव्विक्क्रमस्वोरुक्षयायन-
स्कृधि । घृतङ्घृतयोनेपिबप्रप्रयज्ञपतिन्तिरस्वाहा ॥ ३८ ॥ देवस-
वितरेषतेसोमस्तꣳरक्षस्वमात्वादभन् । एतत्त्वन्देवसोमदेवोदेवाँ२ऽ-

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

उपांगाऽइदमहम्मनुष्यान्त्सहरायस्पोषेणस्वाहानिर्व्वरुणस्यपाशान्मु-
च्ये ॥ ३९ ॥ अग्नेव्व्रतपास्त्वेव्व्रतपावातवतनूर्म्मय्यभूदेषासा
त्वयियोममतनूस्त्वय्यभूदियꣳसामयि । यथायथन्नोव्व्रतपतेव्व्रतान्न्य-
नुमेदीक्षान्दीक्षापतिरमꣳस्तानुतपस्तपस्पतिः ॥ ४० ॥ उरुविष्णो-
व्विक्रमस्वोरुक्षयायनस्कृधि । घृतङ्घृतयोनेपिबप्प्रप्प्रयज्ञपतिन्तिर-
स्वाहा ॥४१॥ अत्त्यन्न्याँ२ऽअगान्नान्न्याँ२ऽउपांगामर्व्वाक्क्त्वापरे-
भ्योविदम्परोवरेभ्यः । तन्त्वाजुषामहेदेववनस्पतेदेवयज्ज्यायैदे-
वास्त्वादेवयज्ज्यायैजुषन्तांव्विष्णवेत्त्वा । ओषधेत्रायस्वस्वधितेमैनꣳ-
हिꣳसीः ॥ ४२ ॥ द्याम्मालेखीरन्तरिक्षम्माहिꣳसीःपृथिव्व्यासम्भव ।

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

अयꣳहित्त्वास्वधितिस्त्तेतिजानꣳप्प्रणिनायमहतेसौभगाय । अतस्त्व-
न्देवव्वनस्प्पतेशतवल्शोव्विरोहसहस्रवल्शाव्विवयꣳरुहेम ॥ ४३ ॥

इति पञ्चमोऽध्यायः ॥

# ❀ अथ षष्ठोऽध्यायः ❀

ॐ देवस्यंत्त्वासवितुःप्प्रसवेश्श्विनोर्ब्बाहुब्भ्यांम्पूष्ण्णोहस्त्ताब्भ्या-
म् । आददेनाय्र्यसीदमहꣳरक्षसाङ्ग्रीवाऽअपिकृन्तामि । यवोसियु-
वयास्म्मद्द्वेषोयवयारातीर्द्दिवेत्त्वान्तरिक्षायत्त्वापृथिव्यैत्त्वाशुन्धंताँल्लो-
काःपितृषदनाःपितृषदनमसि ॥ १ ॥ अग्ग्रेणीरसिस्वावेशऽउन्नेतृणा-

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

मेतस्यंव्विवत्तादधित्त्वास्त्थास्यतिदेवस्त्वासविताम‌द्ध्वानक्कुसुपिप्पला-
ब्भ्यस्त्वौषधीब्भ्यꣳ । द्यामग्ग्रेणास्पृक्षऽआन्तरिक्षम्मद्ध्येनाप्प्राꣳपृथि-
वीमुपरेणादृꣳहीꣳ ॥२ ॥ यातेधामान्न्युश्श्मसिगमद्ध्यैयत्रगावोभूरि-
शृङ्गाऽअयासः । अत्राहतदुरुगायस्यव्विष्ण्णोꣳपरमम्पदमवभारि-
भूरि । ब्रह्म्मवनिंत्त्वाक्षत्रवनिंरायस्प्पोषवनिपर्य्यूहामि । ब्रह्मंदृꣳह-
क्षत्रन्दृꣳहायुर्दृꣳहप्प्रजान्दृꣳह ॥ ३ ॥ व्विष्ण्णोꣳकर्म्माणिपश्श्यतयतो-
व्व्रतानिपस्प्पशे । इन्द्रस्ययुज्ज्यꣳसखा ॥४॥ तद्विष्ण्णोः परमम्पदꣳ
सदापश्श्यन्तिसूरयः । दिवीवचक्षुरातंतम् ॥ ५ ॥ परिवीरसिपरि-
त्वादैवीर्व्विशोव्ययन्तामपरीमँयजमानꣳरायोमनुष्याणाम् । दिवः

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

सूनुरस्येषतेपृथिव्याँल्लोकऽआरण्यस्तेपशुः ॥ ६ ॥ उपावीरस्युपदे-
वान्दैवीर्विशःप्रागुरुशिजोवह्निन्तमान् । देवत्त्वष्टर्वसुरमहव्यातें-
स्वदन्ताम् ॥७॥ रेवतीरमध्वम्बृहस्पतेधारयावसूनि । ऋतस्यत्त्वा-
देवहविःपाशेनप्रतिमुञ्चामिधर्षामानुषः ॥ ८ ॥ देवस्यत्त्वासवितुः
प्प्रसवेश्विनोर्ब्बाहुभ्याम्पूष्णोहस्ताभ्याम् । अग्नीषोमाभ्याञ्जु-
ष्टन्नियुनज्मि । अद्भ्यस्त्वौषधीभ्योनुत्त्वामातामन्यतामनुपितानु-
भ्रातासगर्भ्योनुसखासयूत्थ्यः । अग्नीषोमाभ्यान्त्वाजुष्टम्प्रोक्षा
मि ॥ ९ ॥ अपाम्पेरुरस्यापोदेवीःस्वदन्तुस्वात्तञ्चित्सद्देवहविः । स-
न्तेप्प्राणोव्वातेनगच्छताꣳसमङ्गानियजत्रैःसँय्यज्ञपतिराशिषा ॥१०॥

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

घृतेनाक्तौपशूँस्त्रायेथाᳪं रेवतियजमानेप्प्रियन्धाऽआविश । उरोर-
न्तरिक्षात्सजूर्द्देवेनव्वातेनास्यहविषस्त्मनायजसमस्यतन्न्वाभव । घ-
र्षोव्वर्षीयसियज्ञेयज्ञपतिन्धाᳪं स्वाहादेवेब्भ्योदेवेब्भ्यᳪं स्वाहा ॥ ११ ॥
माहिर्ब्भूर्म्मापृदाकुर्न्नमस्तऽआतानानर्व्वाप्प्रेहि । घृतस्यकुल्ल्याऽउपऽ-
ऋतस्यपत्थ्याऽअनु ॥ १२ ॥ देवीरापᳪं शुद्धाव्वोढ्वᳪं सुपरिविष्टा-
देवेषुसुपरिविष्टाव्वयम्परिवेष्टारोभूयास्म ॥ १३ ॥ व्वाचन्तेशुन्धा-
मिप्प्राणन्तेशुन्धामिचक्षुस्तेशुन्धामिश्श्रोत्रन्तेशुन्धामिनाभिन्तेशुन्धामि-
मेढ्ढ्रन्तेशुन्धामिपायुन्तेशुन्धामिचरित्राँस्तेशुन्धामि ॥ १४ ॥ मन-
स्तऽआप्प्यायताव्वाक्तऽआप्प्यायताम्प्राणस्तऽआप्प्यायताञ्चक्षु-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

स्तऽआप्यायताᳬंश्रोत्रन्तऽआप्यायताम् । यत्तेक्रूरँयदास्थित-
न्तत्तऽआप्यायतान्निष्ट्यायतान्तत्तेशुद्ध्यतुशमहोब्भ्यः । ओष-
धेत्रायस्वस्वधितेमैनᳬंहिᳬंसीः ॥ १५ ॥ रक्षसाम्भागोसिनिरस्तᳬं
रक्षऽइदमहᳬंरक्षोभितिष्ठामीदमहᳬंरक्षोवबाधऽइदमहᳬंरक्षोधमन्तमो-
नयामि । घृतेनद्यावापृथिवीप्प्रोर्णुवाथांव्वायोवेस्तोकानामग्नि-
राज्ज्यस्यवेतुस्वाहास्वाहाकृतेऽऊर्द्ध्वनभसम्मारुतङ्गच्छतम् ॥ १६॥
इदमापःप्प्रवहतावद्यञ्चमलञ्चयत् । यच्चाभिदुद्द्रोहानृतँय्यच्चशेपेऽ-
अभीरुणम् । आपोमातस्मादेनसःपवमानश्चमुञ्चतु ॥ १७ ॥ स-
न्तेमनोमनसासम्प्राणःप्प्राणेनगच्छताम् । रेडस्यग्ग्निष्ट्वाश्रीणात्त्वा-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

पँस्त्वासमरिणन्न्वातस्यत्त्वाद्ध्राज्ज्यैपूष्ष्णोरℳह्यासाऽऊष्ष्मणोव्व्यथिषत्प्रयुतन्द्वेषः ॥ १८ ॥ घृतङ्घृतपावानः पिबतव्वसाव्वसापावानः पिबतान्तरिक्षस्यहविरसिस्वाहा । दिशः प्रदिशऽआदिशोव्विदिशऽउद्दिशोदिग्भ्यः स्वाहा ॥ १९ ॥ ऐन्द्रः प्राणोऽअङ्गेऽअङ्गेनिदीद्ध्यदैन्द्रऽउदानोऽअङ्गेऽअङ्गेनिधीतः । देवत्त्वष्ट्टर्भूरितेसℳसमेतुसलक्ष्मायद्विषुरूपम्भवाति । देवत्राषन्तमवसेसखायोनुत्त्वामातापितरोमदन्तु ॥ २० ॥ समुद्द्रङ्गच्छस्वाहान्तरिक्षङ्गच्छस्वाहादेवℳसवितारङ्गच्छस्वाहामित्रावरुणौगच्छस्वाहाहोरात्रेगच्छस्वाहाच्छन्दाℳसिगच्छस्वाहाद्यावापृथिवीगच्छस्वाहायज्ञङ्गच्छस्वाहासोमङ्गच्छस्वाहा-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

दिव्यन्नभोगच्छस्वाहाग्निंवैश्वानरङ्गच्छस्वाहामनोमेहार्द्दियच्छदि
वन्तेधूमोगच्छतुस्वर्ज्ज्योतिः पृथिवीम्भस्मनापृणस्वाहा ॥ २१ ॥
मापोमौषधीर्हिंसीर्द्धाम्नोधाम्नोराजँस्ततोवरुणनोमुञ्च । यदाहु-
रघ्न्याऽइतिवरुणेतिशपामहेततोवरुणनोमुञ्च । सुमित्रियानऽआ-
पऽओषधयःसन्तुदुर्म्मित्रियास्तस्मैसन्तुयोस्मान्द्वेष्टियञ्चवयन्द्वि-
ष्मः ॥ २२ ॥ हविष्मतीरिमाऽआपोहविष्माँ२ऽआविवासति ।
हविष्मान्देवोऽअध्वरोहविष्माँ२ऽअस्तुसूर्य्यः ॥ १३ ॥ अग्ग्ने-
र्व्वोपन्नगृहस्यसदसिसादयामीन्द्राग्ग्न्योर्भागधेयीस्स्थमित्रावरुणयो-
र्भागधेयीस्स्थविश्वेषान्देवानाम्भागधेयीस्स्थ । अमूर्य्याऽउपसू-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

र्य्येयाभिर्व्वासूर्य्यःसह । तानोहिन्न्वन्त्वद्ध्वरम् ॥ २४ ॥ हृदेत्त्वा-
मनसेत्वादिवेत्त्वासूर्य्यायत्त्वा । ऊर्द्ध्वमिममद्ध्वरन्दिविदेवेषुहो-
त्त्रायच्छ ॥ २५ ॥ सोमराजन्न्विश्श्वास्त्वम्प्रजाऽउपावरोहव्विश्श्वा-
स्त्वाँम्प्रजाऽउपावरोहन्तु । श्शृणोत्त्वग्निःसमिधाहवम्मेश्शृण्ण्वन्त्त्वा-
पोधिषणाश्चदेवीः । श्रोताग्ग्रावाणोव्विदुषोनयज्ञहंश्शृणोतुदेवःस-
विताहवम्मेस्वाहा ॥ २६ ॥ देवीरापोऽअपान्नपाद्योवऽऊर्म्मिर्ह-
विष्यऽइन्द्रियावान्मदिन्तमः । तन्देवेब्भ्योदेवत्त्रादत्तशुक्क्रपेब्भ्यो-
येषाम्भागस्त्थस्वाहा ॥ २७ ॥ कार्षिरसिसमुद्द्रस्यत्त्वाक्षित्त्याऽउ-
न्नयामि । समापोऽअद्भिरग्ग्मतसमोषधीभिरोषधीः ॥ २८ ॥ यम-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

ग्नेपुत्रसुमत्त्यमवाद्वाजेषुयसुना॑ । सघन्ताशश्श्वतीरिषꣳस्वाहा
॥ २९ ॥ देवस्यत्त्वासवितुः प्प्रसवेऽश्विनोर्ब्बाहुब्भ्याम्पूष्णोहस्ता-
ब्भ्याम् । आददेरावासिगभीरमिममद्ध्वरङ्कृधीन्द्रायसुषूतमम् ।
उत्तमेनपविनोर्ज्जँस्वन्तम्मधुमन्तम्पयस्वन्तन्निग्ग्राब्भ्यास्त्थदेवश्रुतस्त-
र्प्पयतमामनोमे ॥ ३० ॥ मनोमेतर्प्पयतव्वाचम्मेतर्प्पयतप्प्राणम्मेतर्प्प-
यतचक्षुर्म्मेतर्प्पयतश्श्रोत्रम्मेतर्प्पयतात्त्मानम्मेतर्प्पयतप्प्रजाम्मेतर्प्पय- १
तपशून्मेतर्प्पयतगणान्मेतर्प्पयतगणामेमावितृषन् ॥ ३१ ॥ इन्द्रा
यत्त्वावसुमतेरुद्रवतऽइन्द्रायत्त्वादित्यवतऽइन्द्रायत्त्वाभिमातिघ्घ्ने ।
श्येनायत्त्वासोमभृतेग्नयेत्त्वारायस्पोषदे ॥ ३२ ॥ यत्तेसोमदिवि-

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

ज्ज्योतिर्र्यत्पृथिव्व्यांय्यदुरावन्तरिक्षे । तेनास्म्मैयजमानायोरुरायेकृद्ध्यधिदात्रेवोचः ॥ ३३ ॥ श्वात्रास्त्थव्वृत्रतुरोराधोगूर्ताऽअमृतस्यपत्नीः । तादेवीर्द्देवत्रेमँय्यज्ञन्नयतोपहूताःसोमस्यपिवत ॥३४॥ माभेर्म्मासंविक्कथाऽऊर्ज्जन्धत्स्वधिषणेव्वीड्वीसतीव्वीडयेथामूर्ज्जन्दधाथाम् । पाप्प्माहतोनसोमः ॥ ३५ ॥ प्रागपागुदगधराक्क्सर्व्वतस्त्वादिशऽआधावन्तु । अम्बनिष्प्परसमरीर्व्विदाम् ॥ ३६ ॥ त्वमङ्गप्रशꣳसिषोदेवःशविष्ठमर्त्त्यम् । नत्वदन्न्योमघवन्नस्तिमर्डितेन्द्रब्ब्रवीमितेव्वचः ॥ ३७ ॥

CC-0, Panini Kanya Maha Vidyalaya Collection.

इति षष्ठोऽध्यायः ॥ ६ ॥

Digitized By Siddhanta eGangotri Gyaan Kosha

# ❀ अथ सप्तमोऽध्यायः ❀

ओ३म् व्वाचस्पतयेपवस्वव्वृष्णोऽअꣳशुभ्याङ्गभस्तिपूतः । देवो-
देवेभ्यः पवस्वयेषाम्भागोसि ॥ १ ॥ मधुमतीर्न्नऽइषस्कृधियत्तेसो-
मादाभ्यन्नामजागृवितस्मैतेसोमसोमायस्वाहास्वाहोर्व्वन्तरिक्षम-
न्वेमिस्वाङ्कृतोसि ॥ २ ॥ स्वाङ्कृतोसिविश्वेभ्यऽइन्द्रियेभ्योदिव्ये-
भ्यः पार्थिवेभ्योमनस्त्वाष्टुस्वाहात्वासुभवसूर्य्यायदेवेभ्यस्त्वाम-
रीचिपेभ्योदेवाꣳशोयस्मैत्वेडेतत्सत्यमुपरिप्लुताभङ्गेनहतोसौफट्-
प्राणायत्वाव्यानायत्वा ॥ ३ ॥ उपयामगृहीतोस्यन्तर्य्यच्छमघव-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

न्पाहिसोमम् । उरुष्यरायऽएषोयजस्व ॥ ४ ॥ अन्तस्तेद्यावापृथि-
वीदधाम्म्यन्तर्द्दधाम्म्युर्व्वन्तरिक्षम् । सजूर्देवेभिरवरैः परैश्चान्त-
र्यामेमघवन्मादयस्व ॥ ५ ॥ स्वाङ्कृतोसिविश्श्वेब्भ्यऽइन्द्रियेब्भ्यो
दिव्व्येब्भ्यः पार्थिवेब्भ्योमनस्त्वाष्टु स्वाहात्वासुभवसूर्य्यायदेवेब्भ्य-
स्त्वामरीचिपेब्भ्यऽउदानायत्त्वा ॥ ६ ॥ आवायो भूषशुचिपाऽउपनः
सहस्रन्तेनियुतोविश्श्ववार । उपोतेऽअन्धोमद्यमयामियस्यदेवद-
धिषेपूर्व्वपेयंव्वायवेत्त्वा ॥ ७ ॥ इन्द्रवायुऽइमेसुताऽउपप्प्रयोभिरा-
गतम् । इन्दवोव्वामुशन्तिहि । उपयामगृहीतोसिव्वायवऽइन्द्रवा-
युब्भ्यान्त्वैषतेयोनिः सजोषोब्भ्यान्त्वा ॥ ८ ॥ अयंवाम्मित्रावरुणा-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

सुतः सोमऽऋतावृधा । ममेदिह श्रुतं हवम् । उपयामगृहीतोसि
मित्रावरुणाभ्यान्त्वा ॥ ९ ॥ रायाव्वयं ससवांसो मदेम हव्येन
देवा यवसेन गावः । तान्धेनुम्मित्रावरुणा युवन्नो विश्वाहा धत्तमनप-
स्फुरन्तीमेष ते योनिर्ऋतायुभ्यान्त्वा ॥ १० ॥ या वाङ्कशा मधुमत्य-
श्विना सूनृतावती । तया यज्ञम्मिमिक्षतम् । उपयामगृहीतोस्यश्वि-
भ्यान्त्वैष ते योनिर्म्माध्वीभ्यान्त्वा ॥ ११ ॥ तम्प्रत्नथा पूर्व्वथा विश्वथे-
मथा ज्येष्ठतातिम्बर्हिषदं स्वर्व्विदम् । प्रतीचीनं व्वृजनन्दोहसे धु-
निमाशुञ्जयन्तमनु यासु वर्द्धसे । उपयामगृहीतोसि शण्डाय त्वैष ते
योनिर्व्वीरताम्पाह्यपमृष्टः शण्डो देवास्त्वा शुक्रपाः प्रणयन्त्वनाधृ-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

ष्ट्वासि ॥ १२ ॥ सुवीरो॒व्वीरान्प्र॒ज॒नय॒न्परी॑ह्य॒भि रा॒यस्पोषे॑ण॒यज॑-
मानम् । स॒ञ्ज॒ग्मा॒नो दि॒वा पृ॑थि॒व्या शु॒क्रः शु॒क्रशो॑चिषा॒ निर॑स्त॒ꣳ शण्डः॑
शु॒क्रस्या॑धि॒ष्ठान॑मसि ॥ १३ ॥ अच्छि॑न्नस्य ते देव सोम सु॒वीर्य॑
स्य रा॒यस्पोष॑स्य ददि॒तारः॑ स्याम । सा प्र॑थ॒मा संस्कृ॑ति॒र्व्वि॒श्ववा॑रा॒-
स प्र॑थ॒मो व्वरु॑णो मि॒त्रो ऽअ॒ग्निः ॥ १४ ॥ स प्र॑थ॒मो बृह॒स्पति॑श्चिकि॒-
त्वाँस्तस्मा॒ ऽइन्द्रा॑य सु॒तमा जु॑होत॒ स्वाहा॑ । तृ॒म्पन्तु॒ होत्रा॒ मद्ध्वो॒ याः
स्वि॑ष्टा॒ याः सुप्री॑ताः॒ सुहु॑ता॒ यत्स्वाहा॒याडग्नी॑त् ॥ १५ ॥ अ॒यं व्वे॒न-
श्चो॑दय॒त्पृश्नि॑गर्भा॒ ज्ज्योति॑र्ज्जरायू॒ रज॑सो॒ व्वि॒माने॑ । इ॒मम॒पा॒ꣳ सङ्ग॒-
मे सूर्य॑स्य॒ शिशुं॒ न विप्रा॑ म॒तिभी॑ रिहन्ति । उ॒प॒या॒मगृ॑हीतोसि॒ मर्का॑य-

CC-0, Panini Kanya Maha Vidyalaya Collection

Digitized By Siddhanta eGangotri Gyaan Kosha

त्त्वा ॥ १६ ॥ मनोनयेषुहवनेषुतिग्ग्मंव्विपश्शच्च्याव्वनुथोद्रवन्ता ।
आयश्शरुर्य्याभिस्तुविनृम्म्णोऽअस्याश्श्रीणीतादिशङ्गभस्तावेषतेयो-
निं ÷ प्प्रजाः पाह्यपमृष्टोमर्क्कोदेवास्त्वामन्थिपाः प्प्रणयन्त्वनाधृष्टासि
॥ १७ ॥ सुप्प्रजाः प्प्रजाः प्प्रजनयन्न्परीह्यभिरायस्प्पोषेणयजमानम् ।
सञ्जग्ग्मानोदिवापृथिव्व्यामन्थीमन्थिशोचिषानिरस्तोमर्क्कोमन्थिनो-
धिष्ठानमसि ॥ १८ ॥ येदेवासोदिव्व्येकादशस्त्थपृथिव्व्यामद्ध्येका-
दशस्त्थ । अप्प्सुक्षितोमहिनैकादशस्त्थतेदेवासोयज्ञमिमञ्जुषद्ध्वम्
॥ १९ ॥ उपयामगृहीतोस्याग्ग्रयणोसिस्वाग्ग्रयणः । पाहियज्ञम्पाहि
यज्ञपतिंव्विष्णुस्त्वामिन्द्रियेणपातुविष्णुन्त्त्वम्पाह्यभिसवनानिपा-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

हि ॥ २० ॥ सोमः पवते सोमः पवतेऽस्मै ब्रह्मणेऽस्मै क्षत्रायास्मै सुन्वते यजमानाय पवतऽइषऽऊर्जे पवतेऽद्भ्यऽओषधीभ्यः पवते द्यावापृथिवीभ्याम्पवते सुभूताय पवते विश्वेभ्यस्त्वा देवेभ्यऽएष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः ॥ २१ ॥ उपयामगृहीतोसीन्द्राय त्वा बृहद्वते वयस्वतऽउक्थाव्यङ्गृह्णामि । यत्तऽइन्द्र बृहद्वयस्तस्मै त्वा विष्णवे त्वैष ते योनिरुक्थेभ्यस्त्वा देवेभ्यस्त्वा देवाव्यं यज्ञस्यायुषे गृह्णामि मित्रावरुणाभ्यान्त्वा ॥२२॥ मित्रावरुणाभ्यान्त्वा देवाव्यँ यज्ञस्यायुषे गृह्णामीन्द्राय त्वा देवाव्यँ यज्ञस्यायुषे गृह्णामीन्द्राग्निभ्यान्त्वा देवाव्यँ यज्ञस्यायुषे गृह्णामीन्द्रावरुणाभ्यान्त्वा देवा-

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

व्व्यँ स्वुज्ञस्यायुंषेगृह्णामीन्द्राबृहस्प्पतिब्भ्यान्त्वादेवाव्व्यँ स्वुज्ञस्यायुं-
षेगृह्णामीन्द्राविष्ष्णुब्भ्यान्त्वादेवाव्व्यँ स्वुज्ञस्यायुंषेगृह्णामि॥ २३ ॥
मूर्द्धानन्दिवोऽअरतिम्पृथिव्व्याव्वैश्श्वानरमृतऽआजातमग्निम्। कविꣳ-
सम्म्राजमतिथिञ्जनानामासन्नापात्त्रञ्जनयन्तदेवाः ॥ २४ ॥ उपयाम-
गृहीतोसिध्रुवोसिध्रुवक्षितिध्रुवाणान्ध्रुवतमोच्च्युतानामच्च्युत-
क्षित्तमऽएषतेयोनिर्व्वैश्श्वानरायत्त्वा । ध्रुवन्ध्रुवेणमनसाव्वाचासोम-
मवनयामि । अथानऽइन्द्रइद्विशोसपत्नाःसमनसस्करत् ॥ २५ ॥
यस्तेद्द्रप्प्सस्कन्दतियस्तेऽअꣳशुर्ग्रावच्च्युतोधिषणयोरुपस्त्थात् ।
अद्ध्वर्य्योर्व्वापरिवायः पवित्रात्तन्तेजुहोमिमनसाव्वषट्कृतꣳस्वाहा

Digitized By Siddhanta eGangotri Gyaan Kosha

देवानांमुत्क्रमणमसि ॥ २६ ॥ प्राणायमेव्वर्च्चोदाव्वर्च्चसेपवस्वव्व्याना-
यमेव्वर्च्चोदाव्वर्च्चसेपवस्वोदानायमेव्वर्च्चोदाव्वर्च्चसेपवस्वव्वाचेमे
व्वर्च्चोदाव्वर्च्चसेपवस्वक्रतूदक्षाब्भ्यामेव्वर्च्चोदाव्वर्च्चसेपवस्वश्श्रोत्रा-
यमेव्वर्च्चोदाव्वर्च्चसेपवस्वचक्षुर्ब्भ्यामेव्वर्च्चोदसौव्वर्च्चसेपव्वेथमात्मने-
मे ॥ २७ ॥ आत्मनेमेव्वर्च्चोदाव्वर्च्चसेपवस्वौजसेमेव्वर्च्चोदाव्वर्च्चसेपव-
स्वायुषेमेव्वर्च्चोदाव्वर्च्चसेपवस्वव्विश्श्वाब्भ्योमेप्प्रजाब्भ्योव्वर्च्चोदसौ
व्वर्च्चसेपवेथाम् ॥ २८ ॥ कोसिकतमोसिकस्यासिकोनामासि । यस्य
तेनामामन्महियन्त्वासोमेनातीतृपाम् । भूर्ब्भुवःस्वः सुप्प्रजाःप्प्रजा-
भिःस्याᳬंसुवीरोव्वीरैःसुपोषःपोषैः ॥ २९ ॥ उपयामगृहीतोसिम-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


ध्रुवेत्त्वोपयामगृहीतोसिमाधवायत्त्वोपयामगृहीतोसिशुक्क्रायत्त्वो-
पयामगृहीतोसिशुचयेत्त्वोपयामगृहीतोसिनभसेत्त्वोपयामगृहीतोसि-
नभस्यायत्त्वोपयामगृहीतोसीषेत्त्वोपयामगृहीतोस्यूर्ज्जेत्त्वोपयाम-
गृहीतोसिसहसेत्त्वोपयामगृहीतोसिसहस्यायत्त्वोपयामगृहीतोसि
तपसेत्त्वोपयामगृहीतोसितपस्यायत्त्वोपयामगृहीतोस्यꣳहसस्पतये-
त्त्वा ॥ ३० ॥ इन्द्राग्नीऽआगतꣳसुतङ्गीर्भिर्न्नभोवरेण्ण्यम् । अस्यपा-
तन्धियेषिता । उपयामगृहीतोसीन्द्राग्निभ्यान्त्वैषतेयोनिरिन्द्राग्नि-
भ्यान्त्वा ॥ ३१ ॥ आघायेऽअग्निमिन्धतेस्तृणन्तिबर्हिरानुषक् । ये-
षामिन्द्रोयुवासखा । उपयामगृहीतोस्यग्नीन्द्राभ्यान्त्वैषतेयोनिर-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha
ग्मीन्द्राभ्यान्त्वा ॥३२॥ ओमासश्चर्षणीधृतोविश्श्वेदेवासऽआगत। दाश्श्वाᳬसोदाशुषः सुतम्। उपयामगृहीतोसिविश्श्वेभ्यस्त्वादेवेभ्यऽएषतेयोनिर्विश्श्वेभ्यस्त्वादेवेभ्यः ॥ ३३ ॥ विश्श्वेदेवासऽआगतश्शृणुतामऽइमᳯहवम्। एदम्बर्हिर्न्निषीदत[1]। उपयामगृहीतोसिव्विश्श्वेभ्यस्त्वादेवेभ्यऽएषतेयोनिर्व्विश्श्वेभ्यस्त्वादेवेभ्यः ॥३४॥ इन्द्रमरुत्वऽइहपाहिसोमँय्यथाशार्य्यातेऽअपिबःसुतस्य। तवप्प्रणीतीतवशूरशर्म्मन्नाविवासन्तिकवयःसुयज्ञाः। उपयामगृहीतोसीन्द्रायत्वामरुत्वतऽएषतेयोनिरिन्द्रायत्वामरुत्वते ॥ ३५ ॥ मरुत्व-

१. इत्यत्र नेः सीदतेः (३।५९) इत्यनेन सकारस्य स्थाने षकार आपद्यते।

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

न्तव्वृषभंव्वावृधानमकवारिन्दिव्व्यꣳशासमिन्द्रम् । व्विश्श्वासाह[1]-
मवसेनूतनायोग्ग्रꣳसहोदामिहतꣳहुवेम । उपयामगृहीतोसीन्द्राय
त्वामरुत्वतऽएषतेयोनिरिन्द्रायत्त्वामरुत्वते । उपयामगृहीतोसिम-
रुतान्त्वौजसे ॥ ३६ ॥ सजोषाऽइन्द्रसगणोमरुद्भिꣳसोमम्पिबव्वृत्रहा·
शूरव्विद्वान् । जहिशत्रूँ१ रपमृधोनुदस्वाथाभयङ्कृणुहिव्विश्श्वतो
नꣳ । उपयामगृहीतोसीन्द्रायत्त्वामरुत्वतऽएषतेयोनिरिन्द्रायत्त्वाम-

---

१. 'विश्वसहभुवपुषवसुषु' (शु० य० प्रा० अ० ३ सू० १०२) विश्व इत्येतत्पदं सह इत्येतेषु प्रत्ययेषु दीर्घमापद्यते। एवम् भुव यथा—अर्चा विश्वा नराय विश्वाभुवे' (शु० य० सं० ३३।२३) पुष यथा—विश्वापुषꣳ रयिम् (शु० य० सं० २५।४५)

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

रुत्वंते ॥ ३७ ॥ मरुत्वाँ२ऽइन्द्रवृषभोरणायपिबासोमम्मनुष्ष्वधम्मदाय । आसिञ्चस्वजठरेमद्ध्वऽऊर्म्मिन्त्वᳬराजासिप्प्रतिपत्त्सुतानाम् । उपयामगृहीतोसीन्द्रायत्त्वामरुत्वंतऽएषतेयोनिरिन्द्रायत्त्वामरुत्वंते ॥३८॥ महाँ२ऽइन्द्रोनृवदाचर्षणिप्प्राऽउतद्विबर्हाऽअमिनᳬसहोभिः । अस्म्मद्र्य्यग्ग्वावृधेव्वीर्य्यायोरुᳬपृथुᳬसुकृतᳬकर्तृभिर्ब्भूत् । उपयामगृहीतोसिमहेन्द्रायत्त्वैषतेयोनिर्म्महेन्द्रायत्त्वा ॥ ३९ ॥ महाँ२इन्द्रोयऽओजसापर्ज्जन्न्योवृष्टिमाँ२ऽइव । स्तोमैर्व्वत्स्यस्यवावृधे । उपयामगृहीतोसिमहेन्द्रायत्त्वैषतेयोनिर्म्महेन्द्रायत्त्वा ॥ ४० ॥ उदुत्यञ्जातवेदसन्देवंव्वहन्तिकेतवः । दृशेविश्श्वायसूर्य्यᳬस्वाहा

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

॥ ४१ ॥ चित्रन्देवानामुदगादनीकञ्चक्षुर्म्मित्रस्यवरुणस्याग्नेः ।
आप्प्राद्यावापृथिवीऽअन्तरिक्षꣳसूर्य्यँऽआत्माजगतस्तस्थुषश्च-
स्वाहा ॥ ४२ ॥ अग्नेनयसुपथारायेऽअस्मान्विश्वानिदेववयुना-
निविद्वान् । युयोध्यस्मज्जुहुराणमेनोभूयिष्ठान्तेनमऽउक्तिंविधे-
धेमस्वाहा ॥ ४३ ॥ अयन्नोऽअग्निर्व्वरिवस्कृणोत्वयम्मृधः पुरऽए-
तुप्रभिन्दन् । अयंवाजाञ्जयतुवाजसातावयꣳशत्रूँञ्जयतुजर्हृषाणः-
स्वाहा ॥ ४४ ॥ रूपेणवोरूपमभ्यागान्तुथोवोविश्ववेदाविभजतु ।
ऋतस्यपथाप्रेतचन्द्रदक्षिणाविस्वः पश्यव्यन्तरिक्षंयतस्वसदस्यैः
॥ ४५ ॥ ब्राह्मणमद्यविदेयम्पितृमन्तम्पैतृमत्यमृषिमार्षेयꣳसुधा-

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

तुंदक्षिणम् । अस्म्मद्द्रांतादेवत्रागंच्छतप्प्रदातारमाविशत ॥ ४६ ॥
अग्ग्नयैंत्त्वामह्यंव्वरुंणोददातुसोम्मृतत्त्वमंशीयायुंद्दात्रऽएंधिमयोमह्यं-
म्प्रतिग्ग्रहीत्त्रेरुद्द्रायंत्त्वामह्यँव्वरुंणोददातुसोम्मृतत्त्वमंशीयप्प्राणोदा-
त्त्रऽएंधिव्वयोमह्यंम्प्रतिग्ग्रहीत्त्रेबृहस्प्पतंयेत्त्वामह्यंव्वरुंणोददातुसो-
म्मृतत्त्वमंशीयत्त्वग्ग्दात्त्रऽएंधिमयोमह्यंम्प्रतिग्ग्रहीत्त्रेयमायंत्त्वामह्यं
व्वरुंणोददातुसोम्मृतत्त्वमंशीयहयोदात्त्रऽएंधिव्वयोमह्यंम्प्रतिग्ग्रहीत्त्रे
॥४७॥ कोंदात्त्कस्म्मांऽअदात्त्कामोंदात्त्कामांयादात् । कामोंदाताकामंः
प्प्रतिग्ग्रहीताकामैतत्ते ॥ ४८ ॥

इति सप्तमोऽध्यायः ॥ ७ ॥




CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

# ॐ अथ अष्टमोऽध्यायः ॐ

ॐ उपयामगृहीतोस्यादित्त्येब्भ्यस्त्वा । व्विष्णऽउरुगायैषते-
सोमस्तꣳरक्षस्वमात्त्वादभन् ॥ १ ॥ कदाचनस्तरीरसिनेन्द्रसश्च-
सिदाशुषे । उपोपेन्नुमघवन्भूयऽइन्नुतेदानन्देवस्यपृच्च्यतऽआदित्त्ये-
ब्भ्यस्त्वा ॥२॥ कदाचनप्प्रयुच्छस्युभेनिपासिजन्म्मनी । तुरीयादित्त्य-
सवनन्तऽइन्द्रियमातस्त्थावमृतन्दिव्यादित्त्येब्भ्यस्त्वा ॥ ३ ॥ यज्ञो-
देवानाम्प्प्रत्त्येतिसुम्म्नमादित्त्यासोभवतामृडयन्तः । आवोर्व्वाचीसु-
मतिर्व्ववृत्त्यादꣳहोश्चिद्याव्वरिवोवित्तरासदादित्त्येब्भ्यस्त्वा ॥ ४ ॥

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

विवस्वन्नादित्यैष तेसोमपीथस्तस्मिन्मत्स्व । श्रदस्मैनरोवच-
सेदधातनयदाशीर्दादम्पतीव्वाममश्नुतः । पुमान्पुत्रोजायतेविन्व-
न्दतेवस्वधाव्विश्वाहारपऽएधतेगृहे ॥ ५ ॥ व्वाममद्यसवितर्व्वाम-
मुश्वोदिवेदिवेव्वाममस्मभ्यᳯसावीः । व्वामस्यहिक्षयस्यदेवभूरे-
र्याधियाव्वामभाजः स्याम ॥ ६ ॥ उपयामगृहीतोसिसावित्रोसि-
चनोधाश्चनोधाऽअसिचनोमयिधेहि । जिन्वयज्ञञ्जिन्वयज्ञपतिम्भ-
गायदेवायत्वासवित्रे ॥ ७ ॥ [ शतम् ३०० ] उपयामगृहीतोसिसु-
शर्म्मासिसुप्प्रतिष्ठानोबृहदुक्षायनमः । व्विश्वेभ्यस्त्वादेवेभ्यऽए-
षतेयोनिर्व्विश्वेभ्यस्त्वादेवेभ्यः ॥ ८ ॥ उपयामगृहीतोसिबृह-

CC-0. Panini Kanya Maha Vidyalaya Collection

Digitized By Siddhanta eGangotri Gyaan Kosha

स्प्पतिंसुतस्यदेवसोमतऽइन्द्रोरिन्द्रियावतꣳपत्नीवतोग्रहाँ२ऽऋद्ध्या-
सम् । अहम्परस्तादहमवस्ताद्यदन्तरिक्षन्तदुमेपिताभूत् । अहꣳ
सूर्य्यमुभयतोददर्शाहन्देवानाम्परमङ्गुहायत् ॥ ९ ॥ अग्नाँ२ऽइपत्नी-
वन्त्सजूर्द्देवेनत्त्वष्ट्रासोमम्पिबस्वाहा । प्रजापतिर्व्वृषासिरेतोधारेतो
मयिधेहिप्रजापतेस्तेव्वृष्णोरेतोधसोरेतोधामशीय ॥१०॥ उपयाम-
गृहीतोसिहरिरसिहारियोजनोहरिभ्यान्त्वा । हर्य्योर्द्धानास्त्थसह-
सोमाऽइन्द्राय ॥११॥ यस्तेऽअश्ववसनिर्भक्षोयोगोसनिस्तस्यतऽइ-
ष्टयजुषस्तुतस्तोमस्यशस्तोक्थस्योपहूतस्योपहूतोभक्षयामि ॥ १२ ॥
देवकृतस्यैनसोवयजनमसिमनुष्यकृतस्यैनसोवयजनमसिपितृकृतस्यै-

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


नसोवयजनमस्यात्मकृतस्यैनसोवयजनमस्येनसऽएनसोवयजनमसि ।
यच्चाहमेनोविद्वाँश्चकार यच्चाविद्वाँस्तस्य सर्वस्यैनसोवयजनम-
सि ॥ १३ ॥ संवर्चसा पयसा सन्तनूभिरगन्महि मनसा सꣳशिवेन ।
त्वष्टा सुदत्रो विदधातु रायोनुमाष्टु तन्वो यद्विलिष्टम् ॥ १४ ॥ स-
मिन्द्र णो मनसा नेषि गोभिः सꣳ सूरिभिर्मघवन्त्सꣳस्वस्त्या । सम्ब्र-
ह्मणा देवकृतं यदस्ति सन्देवानाꣳसुमतौ यज्ञियानाꣳस्वाहा ॥ १५ ॥
संवर्चसा पयसा सन्तनूभिरगन्महि मनसा सꣳशिवेन । त्वष्टा सुदत्रो
विदधातु रायोनुमाष्टु तन्वो यद्विलिष्टम् ॥ १६ ॥ धाता रातिः सवि-
तेदञ्जुषन्ताम्प्रजापतिर्निधिपा देवोऽअग्निः । त्वष्टा विष्णुः प्रजया-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

सᳬरराणावजमानायद्द्रविणन्दधातस्वाहा ॥ १७ ॥ सुगावो देवाः
सदनाऽअकर्म्मयऽआजग्मेदᳬसवनञ्जुषाणाः । भरमाणाव्वहमाना
हवीᳬष्यस्मेधत्तवसवोव्वसूनिस्वाहा ॥ १८ ॥ याँ२ऽआवहऽउश-
तोदेवदेवाँस्तान्प्रेरयस्वेऽअग्नेसधस्थे । जक्षिवाᳬसः पपिवाᳬस
श्चविश्वेसुंधर्म्मᳬस्वरातिष्ठतानुस्वाहा ॥ १९ ॥ व्वयᳬहित्वा-
प्रयतियज्ञेऽअस्मिन्नग्नेहोतारमवृणीमहीह । ऋधगयाऽऋधगुता-
शमिष्ठाःप्रजानन्यज्ञमुपयाहिव्विद्वान्स्वाहा ॥ २० ॥ देवागातु-
विदोगातुंव्वित्त्वागातुमित । मनसस्पतऽइमन्देवयज्ञᳬस्वाहाव्वाते-
धाः ॥ २१ ॥ यज्ञयज्ञङ्गच्छयज्ञपतिङ्गच्छस्वाँयोनिङ्गच्छस्वाहा । एष-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


तेंयज्ञोयंज्ञपतेसहसूंक्तवाकुःसव्वंवीरस्तञ्जुषस्वस्वाहां ॥ २२ ॥
माहिंर्भूर्म्मापृदांकुः । उरुꣳहिराजावरुंणश्चकारसूर्य्यायपन्थाम-
न्वेंतवाऽऊं । अपदेपादाप्प्रतिंधातवेकरुतापंवक्ताहृंदयाविधंश्चित् ।
नमोवरुंणायाभिष्ठितोवरुंणस्यपाशं ॥ २३ ॥ अग्नेरनींकमपऽ
आविवेशापान्नपात्प्रतिरक्षंन्नसुर्य्यम् । दमेंदमेसमिधँयक्ष्यग्नेप्प्रति
तेजिह्वाघृतमुच्चंरण्यत्स्वाहां ॥२४॥ समुद्रेतेहृदंयमप्प्स्वन्तःसन्त्वां-
विशन्त्वोषंधीरुतापंः । यज्ञस्यंत्वायज्ञपतेसूक्तोक्तौनमोवाकेविं-
धेमयत्स्वाहां ॥ २५ ॥ देवीरापऽएषवोगर्ब्भस्तꣳसुप्प्रीतꣳसुभृंतम्बिभृ-
भृत । देवंसोमैषतेलोकस्तस्मिञ्छञ्चवक्ष्वपरिंचवक्ष्व ॥२६॥ अवंभृ-

CC-0. Lal Bahadur Shastri Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha
थनिचुम्पुणनिचेरुरसिनिचुम्पुणः । अवदेवैर्दैवकृतमेनोयासिषमव-
मर्त्यैर्मर्त्त्यकृतम्पुरुराव्णोदेवरिषस्पाहिदेवानाᳬसमिदसि ॥ २७ ॥
एजतुदशमास्योगर्भोजरायुणासह । यथायंव्वायुरेजतियथासमुद्रऽ-
एजति । एवायन्दशमास्योऽअस्रज्जरायुणासह ॥ २८ ॥ यस्यैतेयज्ञि-
योगर्भोयस्यैयोनिर्हिरण्ययी । अङ्गान्यह्रुताघस्यतम्मात्रासमजीग-
मᳬस्वाहा ॥ २९ ॥ पुरुदस्मोविषुरूपऽइन्दुरन्तर्म्महिमानमानञ्ज-
धीरः । एकपदीन्द्विपदीन्त्रिपदीञ्चतुष्पदीमष्टापदीम्भुवनानुप्रथ-
न्ताᳬस्वाहा ॥ ३० ॥ मरुतोयस्यहिक्षयेपाथादिवोविमहसः । ससु-
गोपातमोजनः ॥ ३१ ॥ महीद्यौःपृथिवीचनऽइमंय्यज्ञम्मिमिक्षताम् ।
CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


पिपृताम्नोभरीममिहं ॥ ३२ ॥ आतिष्ठव्वृत्रहन्रथँय्युक्तातेब्रह्मणा-
हरी । अर्व्वाचीनहं सुतेमनोग्ग्रावाकृणोतुव्वग्नुना । उपयामगृहीतो-
सीन्द्रायत्त्वाषोडशिनऽएषतेयोनिरिन्द्रायत्त्वाषोडशिने ॥३३॥ युक्ष्वा-
हिकेशिनाहरीव्वृषणाकक्ष्यप्रा । अथानऽइन्द्रसोमपागिरामुपश्रुति-
ञ्चर । उपयाम गृहीतोसीन्द्रायत्त्वाषोडशिनऽएषतेयोनिरिन्द्रायत्त्वाषोड
शिने ॥३४॥ इन्द्रमिद्धरीवहतोप्रतिधृष्टशवसम् । ऋषीणाञ्चस्तुती-
रुपयज्ञञ्चमानुषाणाम् । उपयामगृहीतोसीन्द्रायत्त्वाषोडशिनऽएषतेयो-
निरिन्द्रायत्त्वाषोडशिने ॥ ३५ ॥ यस्म्मान्नजातःपरोऽअन्न्योऽअस्ति
यऽआविवेशभुवनानिविश्श्वा । प्रजापतिःप्रजयासहंरराणस्त्रीणि

CC-0, Panini Kanya Maha Vidyalaya Collection

Digitized By Siddhanta eGangotri Gyaan Kosha
ज्ज्योतीᳪंषिसचतेसषोडशी ॥२६॥ इन्द्रश्चसम्राड्वरुणश्चराजातौ-
तैभक्षञ्चक्क्रतुरग्ग्रऽएतम् । तयोरहमनुभक्षम्भक्षयामिवाग्ग्देवीजुषा-
णासोमस्यतृप्प्यतुसहप्प्राणेनस्वाहा ॥ २७ ॥ अग्ग्नेपवस्वस्वपाऽअ-
स्स्मेवर्च्चः सुवीर्य्यम् । दधद्रयिम्मयिपोषम् । उपयामगृहीतोस्य-
ग्ग्नयेत्त्वाव्वर्च्चसऽएषतेयोनिरग्ग्नयेत्त्वाव्वर्च्चसे । अग्ग्नेव्वर्च्चस्विन्व-
र्च्चस्वाँस्त्वन्देवेष्ष्वसिव्वर्च्चस्वानहम्मनुष्ष्येषुभूयासम् ॥ २८ ॥ उ-
त्तिष्ठन्नोजसासहपीत्वीशिप्प्रेऽअवेपयः । सोममिन्द्रचमूसुतम् । उप-
यामगृहीतोसीन्द्रायत्त्वौजसऽएषतेयोनिरिन्द्रायत्त्वौजसे । इन्द्रौजि-
ष्ठौजिष्ठस्त्वन्देवेष्ष्वस्योजिष्ठोहम्मनुष्ष्येषुभूयासम् ॥२९॥ अदश्श्र-
CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By SIddhanta eGangotri Gyaan Kosha



मस्यकेतवोविरश्मयोजनाँ२ऽअनु । भ्राजन्तोऽअग्नयोयथा । उपयाम-
गृहीतोसिसूर्य्यायत्वाभ्राजायैषतेयोनिःसूर्य्यायत्वाभ्राजाय । सू-
र्य्यभ्राजिष्ठभ्राजिष्ठस्त्वन्देवेष्वसिभ्राजिष्ठोहम्मनुष्ष्येषुभूयासम्
॥ ४० ॥ उदुत्यञ्जातवेदसन्देवंव्वहन्तिकेतवः । दृशेव्विश्वायसूर्य्य-
म् । उपयामगृहीतोसिसूर्य्यायत्वाभ्राजायैषतेयोनिःसूर्य्यायत्वाभ्रा
जाय ॥ ४१ ॥ आजिघ्रकलशम्मह्यात्वाव्विशन्त्विन्दवः । पुनरूर्जा
निवर्त्तस्वसानःसहस्रन्धुक्ष्वोरुधारापयस्वतीपुनर्म्माविशताद्रयिः
॥४२॥ इडेरन्तेहव्येकाम्येचन्द्रेज्ज्योतेदितिसरस्वतिमहिव्विश्श्रुति ।
एतातेऽअघ्न्येनामानिदेवेभ्योमासुकृतम्ब्रूतात् ॥ ४३ ॥ व्विनऽइन्द्रमृ-

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

ध्योजहिनीचाबच्छपृतन्न्यतः । योऽअस्म्माँ२ऽअभिदासत्यधरङ्गमयात-
मंः । उपयामगृहीतोसीन्द्रायत्वाव्विमृधऽएषतेयोनिरिन्द्रायत्वा
व्विमृधे ॥ ४४ ॥ व्वाचस्पतिंव्विश्श्वकर्म्माणमूतयेमनोजुवंव्वाजेऽअ-
द्याहुवेम । सनोव्विश्श्वानिहवनानिजोषद्विश्श्वशम्भूरवसेसाधु-
कर्म्मा । उपयामगृहीतोसीन्द्रायत्वाव्विश्श्वकर्म्मणऽएषतेयोनिरि-
न्द्रायत्वाव्विश्श्वकर्म्मणे ॥ ४५ ॥ व्विश्श्वकर्म्मन्हविषाव्वर्द्धनेनत्रा-
तारमिन्द्रमकृणोरवद्ध्यम् । तस्म्मैव्विशः समनमन्तपूर्व्वीरयमुग्ग्रोव्वि-
हव्व्योयथासत् । उपयामगृहीतोसीन्द्रायत्वाव्विश्श्वकर्म्मणऽएषते
योनिरिन्द्रायत्वाव्विश्श्वकर्म्मणे ॥४६॥ उपयामगृहीतोस्यग्ग्नये त्वागा-

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

यत्त्रच्छन्दसङ्गृह्णामीन्द्रायत्त्वात्त्रिष्टुप्प्छन्दसङ्गृह्णामिविश्वेब्भ्य-
स्त्वादेवेब्भ्योजगच्छन्दसङ्गृह्णाम्म्यनुष्ट्टुप्तेभिगरः॥४७॥व्व्रेशीनान्त्वा-
पत्क्मन्नाधूनोमिकुकूननानान्त्वापत्क्मन्नाधूनोमिभन्दनानान्त्वापत्क्म-
न्नाधूनोमिमदिन्तमानान्त्वापत्क्मन्नाधूनोमिमधुन्तमानान्त्वापत्क्मन्ना-
धूनोमिशुक्क्रन्त्वाशुक्क्रआधूनोम्म्यह्नोरूपेसूर्य्यस्यरश्मिषु ॥ ४८ ॥
ककुभꣳरूपंव्वृषभस्यरोचतेबृहच्छुक्क्रःशुक्क्रस्यपुरोगाःसोमꣳसोम-
स्यपुरोगाः । यत्तेसोमादाब्भ्यन्नामजागृवितस्मैत्त्वागृह्णामितस्मैते
सोमसोमायस्वाहा ॥ ४९ ॥ उशिक्त्वन्देवसोमाग्नेःप्प्रियम्पाथोपी-
हिव्वशीत्त्वन्देवसोमेन्द्रस्यप्प्रियम्पाथोपीह्यस्मत्सखात्त्वन्देवसोम-

Digitized By Siddhanta eGangotri Gyaan Kosha
व्विश्श्वेषान्देवानाम्प्प्रियम्पाथोपीहि ॥ ५० ॥ इह्वरतिरिहरमद्ध्वमिह-
धृतिरिहस्वधृतिः स्वाहा । उपसृजन्धरुणम्मात्रेधरुणोमातरन्धयन् ।
रायस्पोषमस्म्मासुदीधरत्स्वाहा ॥ ५१ ॥ सत्रस्यऽऋद्धिरस्यगन्म-
ज्ज्योतिरमृताऽअभूम । दिवम्पृथिव्व्याऽअद्ध्यारुहामाविदामदेवा-
न्त्स्वज्ज्योतिः ॥५२॥ युवन्तमिन्द्रापर्व्वतापुरोयुधायोनः पृतन्यादप त-
न्तमिद्धतंव्वज्रेणतन्तमिद्धतम् । दूरेचत्तायच्छन्त्सद्गहनंय्यदिनक्षत् ।
अस्म्माकꣳ शत्रून्नपरिशूरव्विश्श्वतोदर्म्मादर्षीष्टव्विश्श्वतः । भूर्भुवः
स्वः सुप्प्रजाः प्प्रजाभिः स्यामसुवीरा व्वीरैः सुपोषाः पोषैः ॥ ५३ ॥
परमेष्ठ्यभिधीतः प्प्रजापतिर्व्वाचिव्व्याहृतायामन्धोऽअच्छेतः सविता-
CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

सन्न्यांव्विश्श्वकर्म्मादीक्षायाम्पूषासोमक्क्रयण्यामिन्द्रश्श्च ॥ ५४ ॥
इन्द्रश्च्चमरुतश्च्चक्क्रयायोपोत्त्थितोसुरःपण्यमानोमित्त्रःक्क्रीतोव्वि-
ष्णुःशिपिविष्ट्टऽऊरावासन्नोव्विष्णुन्नरन्धिषःप्प्रोह्यमाणःसोमः
॥५५॥ प्प्रोह्यमाणःसोमऽआगतोव्वरुणऽआसन्द्यामासन्नोग्निराग्नी-
द्ध्रऽइन्द्रोहविर्द्धानेथर्व्वोपावह्रियमाणोव्विश्श्वेदेवाः ॥ ५६ ॥ व्वि-
श्श्वेदेवाऽअꣳशुषुन्न्युप्तोव्विष्णुराप्प्रीतपाऽआप्प्याय्यमानोयमःसू-
यमानोव्विष्णुःसम्भ्रियमाणोव्वायुःपूयमानःशुक्क्रःपूतःशुक्क्रःक्षी-
रश्श्रीर्म्मन्थीसक्क्तुश्श्रीर्विश्श्वेदेवाः ॥५७॥ व्विश्श्वेदेवाश्चमसेषून्नी-
तोसुर्होमायोद्यतोरुद्द्रोहूयमानोव्वातोभ्यावृत्तोनृचक्षाःप्प्रतिख्याता

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

तोभक्षोभक्ष्यमाणःपितरोनाराशꣳसाः ॥ ५८ ॥ सन्नःसिन्धुरवभृथा-
योद्यतःसमुद्रोऽभ्यवह्रियमाणःसलिलःप्रप्लुतोययोरोजसास्क-
भितारजाꣳसिवीर्य्येभिर्वीरतमाशविष्ठा । यापत्त्येतेऽअप्प्रतीता-
सहोभिर्विष्णूऽअगन्न्वरुणापूर्व्वहूतौ ॥५९॥ देवान्दिवमगन्न्यज्ञस्त-
तोमाद्द्रविणमष्टुमनुष्यानन्तरिक्षमगन्न्यज्ञस्ततोमाद्द्रविणमष्टुपितॄ-
न्पृथिवीमगन्न्यज्ञस्ततोमाद्द्रविणमष्टुयङ्कञ्चलोकमगन्न्यज्ञस्ततोमे-
भद्रमभूत् ॥६०॥ चतुस्त्रिꣳशत्तन्तवोयेव्वितत्निरेयऽइमँय्यज्ञꣳस्व-
धयाददन्ते । तेषाञ्छिन्नꣳसम्वेतद्दधामिस्वाहाघर्म्मोऽअप्प्येतुदेवान्
॥ ६१ ॥ यज्ञस्यदोहोविततःपुरुत्त्रासोऽअष्टधादिवमन्न्वाततान । स-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized by eGangotri Gyaan Kosha

यज्ञघुक्क्ष्वमर्हिमेप्प्रजायाᳬरायस्पोषंव्विश्श्वमायुरशीयस्वाहा ॥६२॥
आपवस्वहिरण्ण्यवदश्श्ववत्सोमव्वीरवत् । व्वाजङ्गोमन्तमाभरस्वाहा
॥ ६३ ॥ इति अष्टमोऽध्यायः ॥ ८ ॥

## ❀ अथ नवमोऽध्यायः ❀

ॐ देवसवितᳬप्प्रसुवयज्ञम्प्रसुवयज्ञपतिम्भगाय । दिव्व्यो-
गन्धर्व्वःकेतपूःकेतन्नᳬपुनातुव्वाचस्पतिर्व्वाजन्नᳬस्वदतुस्वाहा
॥ १ ॥ ध्रुवसदन्त्वानृषदम्मनᳬसदमुपयामगृहीतोसीन्द्रायत्त्वाजुष्टङ्गृ-
ह्णाम्म्येषतेयोनिरिन्द्रायत्त्वाजुष्टतमम् । अप्सुषदन्त्वाघृतसदंव्योम-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

सदमुपयामगृहीतोसीन्द्रायत्वाजुष्टङ्गृह्णाम्म्येषतेयोनिरिन्द्रायत्वाजुष्ट-
तमम् । पृथिवीसदन्त्वान्तरिक्षसदन्दिविसदन्देवसदन्नाकसदमुपया-
मगृहीतोसीन्द्रायत्वाजुष्टङ्गृह्णाम्म्येषतेयोनिरिन्द्रायत्वाजुष्टतमम् ॥२॥
अपाꣳरसमुद्वयसꣳसूर्य्येसन्तꣳसमाहितम् । अपाꣳरसस्ययोरस-
स्तंव्वोगृह्णाम्म्युत्तममुपयामगृहीतोसीन्द्रायत्वाजुष्टङ्गृह्णाम्म्येषतेयोनि
रिन्द्रायत्वाजुष्टतमम् ॥ ३ ॥ ग्रहाऽऊर्ज्जाहुतयोव्व्यन्तोविप्रायम
तिम् । तेषांविशिप्प्रियाणांव्वोहमिषमूर्ज्जꣳसमग्ग्रभमुपयामगृहीतो-
सीन्द्रायत्वाजुष्टङ्गृह्णाम्म्येषतेयोनिरिन्द्रायत्वाजुष्टतमम् । सम्पृचौ-
स्त्थꣳसम्माभद्द्रेणपृङ्क्तंव्विपृचौस्थोव्विमापाप्मनापृङ्क्तम् ॥ ४ ॥

CC-0, Panini Kanya Maha Vidyalaya Collection.

इन्द्रस्यव्वज्रोसिव्वाजसास्त्वयायंव्वाजᳪसेत् । व्वाजस्यनुप्प्रसवे-
मातरम्महीमदितिन्नामव्वचसाकरामहे । यस्यामिदंव्विश्वम्भुवन-
माविवेशतस्यान्नोदेवः सविताधर्म्मसाविषत् ॥ ४ ॥ अप्प्स्वन्तरमृत-
मप्प्सुभेषजमपामुतप्प्रशस्तिष्ष्वश्श्वाभवतव्वाजिनः ÷ । देवीरापो-
योवऽऊर्म्मिः प्रतूर्तिᳪककुन्मान्व्वाजसास्तेनायंव्वाजᳪसेत् ॥ ६ ॥
व्वातोवामनोवागन्धर्व्वाः सप्तविᳪशतिः । तेऽअग्रेश्श्वमयुञ्जँस्तेऽ-
अस्मिञ्जवमादधुः ॥ ७ ॥ व्वातरᳪहाभवव्वाजिन्युज्ज्यमानऽइन्द्र-
स्येवदक्षिणः श्रियैधि । युञ्जन्तुत्त्वामरुतोव्विश्श्ववेदसऽआतेत्त्वष्टा-
पत्सुजवन्दधातु ॥ ८ ॥ जवोयस्तेव्वाजिन्निहितोगुहायः श्येनेपरी-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

त्तोऽअर्वरञ्चधातै । तेनंनोवाजिन्बलवान्बलेनवाजजिच्चभवसम-
नेचपारयिष्णुः । वाजिनोवाजजितोवाजꣳसरिष्यन्तोबृहस्प
तेर्भागमवजिघ्रत ॥ ९ ॥ देवस्याहꣳसवितुःसवेसत्यसवसोबृह
स्पतेरुत्तमन्नाकꣳरुहेयम् । देवस्याहꣳसवितुःसवेसत्यसवसऽइन्द्र
स्योत्तमन्नाकꣳरुहेयम् । देवस्याहꣳसवितुःसवेसत्यप्रसवसोबृह
स्पतेरुत्तमन्नाकमरुहम् । देवस्याहꣳसवितुःसवेसत्यप्रसवसऽइन्द्र
स्योत्तमन्नाकमरुहम् ॥ १० ॥ बृहस्पतेवाजञ्जयबृहस्पतयेवाचंव
दतबृहस्पतिंवाजञ्जापयत । इन्द्रवाजञ्जयेन्द्रायवाचंवदतेन्द्रंवा
जञ्जापयत ॥ ११ ॥ एषावःसासत्यासंवागभूद्ययाबृहस्पतिंवाज

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

मजीजपताजीजपतबृहस्पतिंव्वाजंव्वनस्प्पतयोव्विमुच्च्यद्ध्वम् ।
एषावऽसासत्त्यासंव्वागभूद्द्ययेन्द्रंव्वाजमजीजपताजीजपतेन्द्रंव्वाजं-
व्वनस्प्पतयोव्विमुच्च्यद्ध्वम् १२ ॥ देवस्याहऽसवितुःसवेसत्त्य-
प्प्रसवसोबृहस्प्पतेंव्वाजजितोव्वाजंजेषम् । व्वाजिनोव्वाजजितो-
द्ध्वंनस्कभ्नुवन्तोयोजनामिमानाःकाष्ठांङ्गच्छत ॥ १३ ॥ एषस्य-
व्वाजीक्षिपणिन्तुरण्ण्यतिग्ग्रीवायांबद्धोऽअपिकक्षऽआसनि । क्रतुन्द-
धिक्क्राऽअनुसऽसनिष्ष्यदत्पथामङ्काऽंस्यन्न्वापनीफणत्स्वाहा ॥१४॥
उतस्म्मास्यद्द्रवतस्तुरण्ण्यतःपर्ण्णन्नवेरनुवातिप्प्रगर्द्धिनः । श्येनस्ये-
वद्ध्रजतोऽअङ्कसम्परिदधिक्क्राव्णःसहोर्ज्जातरित्रतऽस्वाहा ॥ १५ ॥

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

शन्नोभवन्तुव्वाजिनोहवेषुदेवतातामितद्रवऽस्वर्काः । जम्भयन्तो-
हिंन्वृकꣳरक्षाꣳसिसनेम्म्यस्म्मद्युयवन्नमीवाः ॥ १६ ॥ ते नोऽअर्व्वन्तो
हवनश्रुतोनवंव्विश्श्वे श्रृण्वन्तुव्वाजिनोमितद्रवः । सहस्रसामेध
सातासनिष्ष्यवोमहोयेधनꣳसमिथेषुजभ्भ्रिरे ॥ १७ ॥ वाजेवाजेवतव्वा-
जिनेनोधनेषुव्विप्प्राऽअमृताऽऋतज्ञाः । अस्यमद्ध्वः पिबतमादय-
द्ध्वन्तृप्प्तायातपथिभिर्देवयानैः ॥ १८ ॥ आमाव्वाजस्यप्प्रसवोजग-
म्म्यादेमेद्यावापृथिवीव्विश्श्वरूपे । आमागन्ताम्पितरामातराचामा
सोमोऽअमृतत्वेनगम्म्यात् । व्वाजिनोव्वाजजितोव्वाजꣳससृवाꣳ
सोबृहस्प्पतेर्भागमवजिग्घ्रतनिमृजानाः ॥ १९ ॥ आपयेस्वाहास्वाप-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

येस्वाहापिजायस्वाहाक्क्रतवेस्वाहाव्वसवेस्वाहाहर्प्पतयेस्वाहान्हे-
मुग्धायस्वाहामुग्धायव्वैनꣳशिनायस्वाहाव्विनꣳशिनऽआन्त्यायनाय
स्वाहान्त्यायभौवनायस्वाहाभुवनस्यपतयेस्वाहाधिपतयेस्वाहा ॥२०॥
आयुर्य्यज्ञेनकल्प्पताम्प्राणोयज्ञेनकल्प्पताञ्चक्षुर्य्यज्ञेनकल्प्पताꣳश्रो-
त्रंय्यज्ञेनकल्प्पताम्पृष्ठंय्यज्ञेनकल्प्पतांय्यज्ञोयज्ञेनकल्प्पताम् । प्रजाप-
तेᳵप्रजाऽअभूमस्वर्द्देवाऽअगन्मामृताऽअभूम ॥ २१ ॥ अस्म्मेवोऽअ-
स्त्विन्द्रियमस्म्मेनृम्म्णमुतक्क्रतुरस्म्मेव्वर्च्चाꣳसिसन्तुवः । नमोमा-
त्रेपृथिव्यैनमोमात्रेपृथिव्याऽइयन्तेराड्य्यन्तासियमनोद्ध्रुवोसिधरु-
णः । कृष्यैत्वाक्षेमायत्वारय्यैत्वापोषायत्वा ॥ २२ ॥ व्वाजस्येम-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

म्प्रसवऽसुषुवेग्ग्रेसोमꣳराजानमोषधीष्व्वप्प्सु । ताऽअस्म्मब्भ्यम्मधु-
मतीर्ब्भवन्तुव्वयꣳराष्ट्रेजागृयामपुरोहिताःस्वाहा ॥ २३ ॥ व्वाजस्ये-
माप्प्रसवःशिश्रियेदिवमिमाचव्विश्श्वाभुवनानिसम्म्राट् । अदित्स-
न्तन्दापयतिप्प्रजानन्त्सनोरयिꣳसर्व्ववीरन्नियच्छतुस्वाहा ॥ २४ ॥
व्वाजस्यनुप्प्रसवऽआबभूवेमाचव्विश्श्वाभुवनानिसर्व्वतः । सनेमि-
राजापरियातिव्विद्द्वान्प्रजांपुष्टिंव्वर्द्धयमानोऽअस्म्मेस्वाहा ॥ २५ ॥
सोमꣳराजानमवसेग्ग्निमन्न्वारभामहे । आदित्यान्व्विष्णुꣳसूर्य्यम्ब्र-
ह्माणञ्चबृहस्प्पतिꣳस्वाहा ॥ २६ ॥ अर्य्यमणम्बृहस्प्पतिमिन्द्रन्दाना-
यचोदय । व्वाचंव्विष्णुꣳसरस्वतीꣳसवितारञ्चव्वाजिनꣳस्वाहा

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

॥ २७ ॥ अग्ने॑ऽअच्छा॑वदे॒ह न॒ꣳ प्रति॑ नꣳ सु॒मना॑भव । प्रनो॑यच्छसहस्र-
जि॒त्त्वꣳ हि धन॒दाऽअसि॒स्वाहा॑ ॥ २८ ॥ प्रनो॑यच्छत्त्वर्य्यु॒माप्प्र पू॒षाप्प्र-
बृह॒स्प्पतिः॑ । प्रवाग्दे॒वीदं॑दातु न॒ꣳस्वाहा॑ ॥ २९ ॥ दे॒वस्यं॑त्त्वासवि॒तुः
प्प्र॑स॒वे॒ऽश्श्विनो॑र्ब्बा॒हुब्भ्यां॑म्पू॒ष्णोहस्ता॑ब्भ्याम् । सर॑स्वत्यै॒व्वा॒चोय॒न्तु-
र्य्यन्त्रि॑ये॑दधामि॒बृह॒स्प्पते॑ष्ट्वा॒साम्म्रा॑ज्ज्येना॒भिषिञ्चाम्म्यसौ ॥ ३० ॥
अ॒ग्निरेका॑क्षरेण॒प्प्राण॒मुदं॑जय॒त्तमुज्जेष॒मश्श्विनौ॒द्व्य॒क्षरेणद्वि॒पदो॑मनु॒-
ष्ष्या॒नुदं॑जय॒ता॒न्तानुज्जे॒षंव्विष्ष्णु॒स्त्र्य॒क्षरे॒णत्त्रीँल्लो॒कानुदं॑जय॒त्तानु॒ज्जे॒षꣳ
सोम॒श्च्चतु॑रक्षरे॒णचतु॑ष्ष्पदꣳप॒शूनु॒दं॑जय॒त्तानुज्जे॑षम्पू॒षापञ्चा॑क्षरेण
॥ ३१ ॥ पू॒षापञ्चा॑क्षरेणप॒ञ्चदि॒शऽउदं॑जय॒त्ताऽउज्जेषꣳसवि॒ताषडं॑क्षरे-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

णषड्डृतूनुदंजयत्तानुज्जैषम्मरुतः सप्ताक्षरेणसप्तग्राम्म्यान्पशूनुद-
जयँ स्तानुज्जैषम्बृहस्पतिरष्टाक्षरेणगायत्त्रीमुदंजयत्तामुज्जैषम्मित्रोन-
वाक्षरेण ॥ ३२ ॥ मित्रोनवाक्षरेणत्त्रिवृतँ स्तोममुदंजयत्तमुज्जैषंव-
रुणोदशाक्षरेणव्विराजमुदंजयत्तामुज्जैषमिन्द्रऽएकादशाक्षरेणत्त्रिष्टु-
भमुदंजयत्तामुज्जैषंव्विश्वेदेवाद्द्वादशाक्षरेणजगतीमुदंजयँ स्तामु-
ज्जैषंवसवस्त्रयोदशाक्षरेण ॥ ३३ ॥ वसवस्त्रयोदशाक्षरेणत्त्रयोदशँ
स्तोममुदंजयँ स्तमुज्जैषँ रुद्राश्चतुर्दशाक्षरेणचतुर्दशँ स्तोममुदंज-
यँ स्तमुज्जैषमादित्याःपञ्चदशाक्षरेणपञ्चदशँ स्तोममुदंजयँ स्तमुज्जै-
षमदितिःषोडशाक्षरेणषोडशँ स्तोममुदंजयत्तमुज्जैषम्प्रजापतिःस-

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

प्तदंशाक्षरेणसप्तदशᳬस्तोममुदंजयत्तमुज्जेषम् ॥ ३४ ॥ एषतेनिर्ऋ-
तेभागस्तञ्जुषस्वस्वाहाग्निनेत्रेभ्योदेवेभ्य÷ पुरःसद्भ्यᳬस्वाहायम-
नेत्रेभ्योदेवेभ्योदक्षिणासद्भ्यःस्वाहाविश्वदेवनेत्रेभ्योदेवेभ्य÷
पश्चात्सद्भ्यःस्वाहामित्रावरुणनेत्रेभ्योवामरुन्नेत्रेभ्योवादेवेभ्यऽ-
उत्तरासद्भ्यःस्वाहासोमनेत्रेभ्योदेवेभ्यऽउपरिसद्भ्योदुवस्वद्भ्यः
स्वाहा ॥ ३५ ॥ येदेवाऽअग्निनेत्राःपुरःसदस्तेभ्यःस्वाहायेदेवायम-
नेत्रादक्षिणासदस्तेभ्यःस्वाहायेदेवाविश्वदेवनेत्राःपश्चात्सदस्ते-
भ्यःस्वाहायेदेवामित्रावरुणनेत्रावामरुन्नेत्रावोत्तरासदस्तेभ्यःस्वा-
हायेदेवाःसोमनेत्राऽउपरिसदोदुवस्वन्तस्तेभ्यःस्वाहा ॥ ३६ ॥ अ-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

ग्न्नेसहंस्वपृतनाऽअभिमातीरपास्य । दुष्टरस्तरन्नरातीर्व्वर्च्चोधायज्ञ-
वाहसि ॥ ३७ ॥ देवस्यंत्त्वासवितुःप्प्रसवेशिश्वनोर्ब्बाहुब्भ्यांम्पूष्णो-
हस्ताब्भ्याम् । उपाᳬशोर्व्वीर्य्येणजुहोमिहतᳬरक्षःस्वाहारक्षंसान्त्वा-
व्वधायावधिष्म्मरक्षोवधिष्म्मामुमसौहतः ॥ ३८ ॥ सवितात्त्वासवा-
नाᳬसुवतामग्निर्ग्गृहपतीनाᳬसोमोवनस्पतीनाम् । बृहस्पतिर्व्वा-
चऽइन्द्रोज्ज्यैष्ठ्यायरुद्रःपशुब्भ्योमित्त्रःसत्योव्वरुणोधर्म्मपतीनाम्
॥३९॥इमन्देवाऽअसपत्नᳬसुवद्ध्वम्महतेक्षत्त्रायमहतेज्ज्यैष्ठ्यायमह-
तेजानराज्ज्यायेन्द्रस्येन्द्रियाय । इममुमुष्यपुत्त्रममुष्यैपुत्त्रमस्यैव्विशऽए-
षवोमीराजासोमोस्म्माकम्ब्राह्मणानाᳬराजा॥४०॥ इति नवमोऽध्यायः ॥

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

# ❀ अथ दशमोऽध्यायः ❀

ॐअपोदेवामधुमतीरगृभ्णन्नूर्जस्वतीराजस्वुश्चितानाः । याभि-
र्म्मित्रावरुणावब्भ्यषिञ्च्न्याभिरिन्द्रमनयन्नत्यरातीः ॥ १ ॥ व्वृ-
ष्णंऽऊर्म्मिरसिराष्ट्रदाराष्ट्रम्मेदेहिस्वाहाव्वृष्णंऽऊर्म्मिरसिराष्ट्र-
दाराष्ट्रममुष्म्मैदेहिव्वृषसेनोसिराष्ट्रदाराष्ट्रम्मेदेहिस्वाहाव्वृषसे-
नोसिराष्ट्रदाराष्ट्रममुष्म्मैदेह्यत्र्थेतस्त्थ ॥ २ ॥ अर्त्थेतस्त्थराष्ट्रदा-

---

१. इत्यत्र—अव्यवहितोऽपि (३।६६) संहितायां अकारव्यवहितोऽप्यभेरुत्तरः सिञ्चतेः सकारः षकारमापद्यते ।

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

राष्ट्रम्मे दत्त स्वाहार्त्थेतस्त्थ राष्ट्रदा राष्ट्रममुष्मै दत्तौजस्वतीस्त्थ रा-
ष्ट्रदा राष्ट्रम्मे दत्त स्वाहौजस्वतीस्त्थ राष्ट्रदा राष्ट्रममुष्मै दत्तापः
परिवाहिणीस्त्थ राष्ट्रदा राष्ट्रम्मे दत्त स्वाहापः परिवाहिणीस्त्थ राष्ट्र-
दा राष्ट्रममुष्मै दत्तापाम्पतिरसि राष्ट्रदा राष्ट्रम्मे देहि स्वाहापा-
म्पतिरसि राष्ट्रदा राष्ट्रममुष्मै देह्यपाङ्गर्भो सि राष्ट्रदा राष्ट्रम्मे देहि-
स्वाहापाङ्गर्भोसि राष्ट्रदा राष्ट्रममुष्मै देहि सूर्य्यत्वचसस्त्थ ॥ ३ ॥
सूर्य्यत्वचसस्त्थ राष्ट्रदा राष्ट्रम्मे दत्त स्वाहा सूर्य्यत्वचसस्त्थ राष्ट्र-
दा राष्ट्रममुष्मै दत्त सूर्य्यवर्च्चसस्त्थ राष्ट्रदा राष्ट्रम्मे दत्त स्वाहा सूर्य्य-
वर्च्चसस्त्थ राष्ट्रदा राष्ट्रममुष्मै दत्त मान्दास्त्थ राष्ट्रदा राष्ट्रम्मे द-

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

त्तस्वाहा॒मान्दा॑स्त्थरा॒ष्ट्रदा॒राष्ट्रम॒मुष्म्मै॑दत्त व्व्रज॒क्षित॑स्त्थरा॒ष्ट्रदा-
रा॒ष्ट्रम्मै॑द॒त्तस्वाहा॒व्व्रज॒क्षित॑स्त्थरा॒ष्ट्रदा॒रा॒ष्ट्रम॒मुष्म्मै॑द॒त्तव्वाशा॑स्त्थ-
रा॒ष्ट्रदा॒रा॒ष्ट्रम्मै॑द॒त्तस्वाहा॒व्वाशा॑स्त्थरा॒ष्ट्रदा॒रा॒ष्ट्रम॒मु॒ष्म्मै॑द॒त्तश-
विष्ट्टास्त्थरा॒ष्ट्रदा॒रा॒ष्ट्रम्मै॑द॒त्तस्वाहा॒शवि॑ष्ठास्त्थरा॒ष्ट्रदा॒रा॒ष्ट्र-
म॒मुष्म्मै॑द॒त्तशक्व॑रीस्त्थरा॒ष्ट्रदा॒रा॒ष्ट्रम्मै॑द॒त्तस्वाहा॒शक्व॑रीस्त्थरा-
ष्ट्रदा॒रा॒ष्ट्रम॒मुष्म्मै॑द॒त्तजन॒भृत॑स्त्थरा॒ष्ट्रदा॒रा॒ष्ट्रम्मै॑द॒त्तस्वाहा॒ज-
न॒भृत॑स्त्थरा॒ष्ट्रदा॒रा॒ष्ट्रम॒मुष्म्मै॑द॒त्तव्विश्श्व॒भृत॑स्त्थरा॒ष्ट्रदा॒रा॒ष्ट्र-
म्मै॑द॒त्तस्वाहा॒व्विश्श्व॒भृत॑स्त्थरा॒ष्ट्रदा॒रा॒ष्ट्रम॒मु॒ष्म्मै॑द॒त्तापः॒स्व॒रा-
जं॒स्त्थरा॒ष्ट्रदा॒रा॒ष्ट्रम॒मुष्म्मै॑दत्त । मधु॑मती॒र्म्मधु॑मतीभिः पृच्च्यन्ता॒-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

म्महिक्षत्रङ्क्षत्त्रियायव्वन्वानाऽअनाधृष्टाःसीदतसहौजसोमहिक्षत्र-
क्षत्त्रियायदधतीः ॥ ४ ॥ [ शतम् ४०० ] सोमस्यत्त्विषिर-
सितवेवमेत्त्विषिर्भूयात् । अग्ग्नयेस्वाहासोमायस्वाहासवित्रेस्वा-
हासरस्वत्यैस्वाहापूष्णेस्वाहाबृहस्पतयेस्वाहेन्द्रायस्वाहाघोषाय
स्वाहाश्श्लोकायस्वाहाऽशायस्वाहाभगायस्वाहार्य्यम्णेस्वाहा
॥ ५ ॥ पवित्रेस्त्थोव्वैष्णव्यौसवितुर्व्वः प्रसवऽउत्पुनाम्म्यच्छिद्द्रे-
णपवित्रेणसूर्य्यस्यरश्मिभिः । अनिभृष्टमसिव्वाचोबन्धुस्तपो-
जाःसोमस्यदात्रमसिस्वाहाराजस्वः ॥ ६ ॥ सधमादोद्द्युम्मिनी-
रापऽएताऽअनाधृष्टाऽअपस्योवसानाः । पस्त्यासुचक्रेवरुणःस-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

धस्त्थमपाᳬशिशुम्मातृतमास्वन्तः ॥ ७ ॥ क्षत्त्रस्योल्बमसिक्षत्त्र-
स्यंजराय्वसिक्षत्त्रस्ययोन्निरसिक्षत्त्रस्यनाभिरसीन्द्रस्यव्वात्त्रंग्घ्नमसि
मित्त्रस्यासिव्वरुणस्यासित्वयायंव्वृत्त्रंव्वधेत् । दृवासिरुजासिक्षुमा-
सि । पातैनम्प्राञ्चम्पातैनम्प्रत्यञ्चम्पातैनन्तिर्य्यञ्चन्दिग्भ्यःपात ॥८॥
आविर्म्मर्य्याऽआवित्तोऽअग्निर्गृहपतिरावित्तऽइन्द्रोव्वृद्धश्रवाऽआ-
वित्तौमित्त्रावरुणौधृतव्व्रतावावित्तᳬपूषाव्विश्श्ववेदाऽआवित्तेद्द्यावा-
पृथिवीव्विश्श्वशम्भुवावावित्तादितिरुरुशर्म्मा ॥ ९ ॥ अवेष्टा-
दन्दशूकाᳬप्राचीमारोहगायत्त्रीत्त्वावतुरथन्तरᳬसामत्त्रिवृत्स्तोमोव्व-
सन्तऽऋतुर्ब्रह्मद्द्रविणन्दक्षिणामारोह ॥ १० ॥ दक्षिणामारो-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha
द्वस्त्रिष्टुप्त्त्वांवतुबृहत्सामपञ्चदशस्तोमोग्ग्रीष्मऽऋतुःक्षत्रन्द्रवि-
णम्प्रतीचीमारोह ॥ ११ ॥ प्रतीचीमारोहजगतीत्त्वावतुव्वैरूपꣳ-
सामसप्तदशस्तोमोव्वर्षाऽऋतुर्व्विड्द्रविणमुदीचीमारोह ॥ १२ ॥
उदीचीमारोहानुष्टुप्त्त्वावतुव्वैराजꣳसामैकविꣳशस्तोम ÷ शरद्दतुः
फलन्द्रविणमूर्द्दध्र्वामारोह ॥ १३ ॥ ऊर्द्ध्वामारोहपङ्क्तिस्त्त्वावतु-
शाक्क्वररैवतेसामनीत्त्रिणवत्त्रयस्त्रिꣳशौस्तोमौहेमन्तशिशिरावृतूव्व-
र्च्चोद्द्रविणम्प्रत्यस्तन्नमुचेःशिर ÷ ॥ १४ ॥ सोमस्यत्त्विषिरसितवे-
वमेत्त्विषिर्भूयात् । मृत्योःपाहृषोजोसिसहोस्यमृतमसि ॥१५॥ हिर-
ण्यरूपाऽउषसोव्विरोकऽउभाविन्द्राऽउदिथःसूर्य्यश्च । आरोहतंव-
CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

रुणमित्रगर्तन्ततश्चक्षाथामदितिन्दितिञ्चमित्रोसिवरुणोसि ॥ १६ ॥
सोमस्यत्वाद्युम्नेनाभिषिञ्चाम्यग्नेर्भ्राजसासूर्य्यस्यव्वर्च्चसेन्द्रस्ये-
न्द्रियेण । क्षत्राणाङ्क्षत्रपतिरेद्ध्यतिदिद्यून्पाहि ॥१७॥ इमन्देवाऽअ-
सपत्नꣳसुवद्ध्वम्महतेक्षत्रायमहतेज्ज्यैष्ठ्यायमहतेजानराज्ज्याये-
न्द्रस्येन्द्रियाय । इमममुष्ष्यपुत्रममुष्ष्यैपुत्रमस्यैव्विशऽएषवोमीराजा
सोमोस्माकम्ब्राह्मणानाꣳराजा ॥ १८ ॥ प्रपर्व्वतस्यवृषभस्यपृष्ठा-
न्नावश्चरन्तिस्वसिचऽइयानाः । ताऽआववृत्रन्नधरागुदक्ताऽअहिं-
म्बुध्न्यमनुरीयमाणाः । व्विष्णोर्व्विक्रमणमसिव्विष्णोर्व्विक्रान्त-
मसिव्विष्णोःक्क्रान्तमसि ॥ १९ ॥ प्रजापतेनत्वदेतान्न्यन्न्योवि-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha
श्श्वारूपाणिपरिताबभूव । यत्कामास्तेजुहुमस्तन्नोऽअस्त्वयममुष्यं-
पितासावस्यपिताव्वयᳬस्यामपतयोरयीणाᳬस्वाहा । रुद्द्रयत्ते-
क्रिविपरन्नामतस्मिन्हुतमस्यमेष्टमसिस्वाहा ॥ २० ॥ इन्द्रस्यव्व-
ज्रोसिमित्रावरुणयोस्त्वाप्प्रशास्त्रोःप्प्रशिषायुनज्म्मि । अव्व्यथायै-
त्वास्वधायैत्त्वारिष्टोऽअर्ज्जुनोमरुताम्प्रसवेनजयापाममनसासमिन्द्रि-
येण ॥ २१ ॥ मातऽइन्द्रतेव्वयन्तुराषाडयुक्तासोऽअब्ब्रह्मताविद-
साम । तिष्ठारथमधियंव्वज्रहस्तारश्म्मीन्देवयमसेस्वश्श्वान् ॥२२॥
अग्नयेगृहपतयेस्वाहासोमायव्वनस्पतयेस्वाहामरुतामोजसेस्वाहेन्द्र-
स्येन्द्रियायस्वाहा । पृथिविमातर्म्मामाहिᳬसीर्म्मोऽअहन्त्वाम् ॥२३॥
CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

हꣳसः शुचिषद्वसुरन्तरिक्षसद्धोता व्वेदिषदतिथिर्दुरोणसत् । नृषद्व-
रसदृतसद्व्योमसदब्जा गोजाऽऋतजाऽअद्रिजाऽऋतम्बृहत् ॥ २४ ॥
इयदस्यायुरस्यायुर्म्मयिधेहि युङ्ङसि व्वर्च्चोसि व्वर्च्चोमयिधेह्यूर्गस्यू-
र्ज्जम्मयिधेहि । इन्द्रस्य वांवीर्य्यकृतो बाहूऽअभ्युपावहरामि ॥ २५ ॥
स्योनासि सुषदासि क्षत्रस्य योनिरसि । स्योनामासीद सुषदामासीद क्ष-
त्रस्य योनिमासीद ॥ २६ ॥ निषसाद धृतव्व्रतो व्वरुणः पस्त्यास्वा । सा-
म्म्राज्ज्याय सुक्रतुः ॥ २७ ॥ अभिभूरस्येतास्ते पञ्च दिशः कल्पन्ता-
म्ब्रह्मँस्त्वम्ब्रह्मासि सवितासि सत्यप्प्रसवो व्वरुणोसि सत्यौजाऽइन्द्रो-
सि व्विशौजा रुद्रोसि सुशेवः । बहुकार श्श्रेयस्कर भूयस्करेन्द्रस्य व्व-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

ज्ज्रोसितेनमेरद्धय ॥ २८ ॥ अग्निः पृथुर्द्धर्म्मणस्पतिर्ज्जुषाणोऽअग्निः पृ-
थुर्द्धर्म्मणस्पतिराज्ज्यस्यव्वेतुस्वाहास्वाहाकृताःसूर्य्यस्यरश्मिभि-
र्य्यतद्ध्वंसजातानाम्मद्ध्यमेष्ठ्याय ॥ २९ ॥ सवित्राप्प्रसवित्रा.
सरस्वत्याव्वाचात्वष्ट्राःरूपैःपूष्णापशुभिरिन्द्रेणास्म्मेबृहस्प्पतिना-
ब्रह्मणाव्वरुणेनौजसाग्निनातेजसासोमेनराज्ञाव्विष्णुनादशम्म्यादे-
वतयाप्प्रसूतःप्प्रसर्प्पामि ॥ ३० ॥ अश्श्विभ्याम्पच्च्यस्वसरस्वत्यैप-
च्च्यस्वेन्द्रायसुत्राम्म्णेपच्च्यस्व । व्वायुःपूतःपवित्रेणप्प्रत्यङ्क्सो-
मोऽअतिस्स्रुतः । इन्द्रस्ययुज्ज्यःसखा ॥ ३१ ॥ कुविदङ्गयवमन्तोयव-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

श्रिवृद्यथादान्त्यनुपूर्वंविगूय । इहेहैषाङ्कृणुहिभोजनानिये बर्हिषो-
नमऽउक्तिंकृख्यजन्तिः । उपयामगृहीतोस्यश्विभ्यान्त्वासरस्वत्यै
त्वेन्द्रायत्त्वासुत्राम्णे ॥ ३२ ॥ युवꣳसुराममश्विनानमुचावासुरे-
सचा । विपिपानाशुभस्पतीऽइन्द्रङ्कर्म्मस्वावतम् ॥ ३३ ॥ पुत्रमि-
वपितरावश्विनोभेन्द्रावथुःकाव्यैर्दꣳसनाभिः । यत्सुरामंव्यपिबः
शचीभिःसरस्वतीत्वामघवन्नभिष्णक् ॥ ३४ ॥ इति दशमोऽध्यायः ॥

---

१. शाखायां वानरा यद्वन्निपतन्त्युत्पतन्ति च । एवं वर्णाः प्रयोक्तव्याः 'इहेहैषां' निदर्शनम् ॥ ( याज्ञ० शि० श्लो० ६१ )

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

# ❀ अथ एकादशोऽध्यायः ❀

ॐयुञ्जानः प्प्रथमम्मनंस्तत्त्वायंसविताधियंः । अग्ग्नेर्ज्ज्योतिर्न्निचाय्यंपृथिव्व्याऽअध्याभंरत् ॥१॥ युक्तेनमनसाव्वयन्देवस्यंसवितुः सवे । स्वर्ग्ग्यायशक्त्त्या ॥२॥ युक्त्वायंसवितादेवान्त्स्वर्य्यतोधि-

१. 'यथा पुत्रवती स्नेहाच्चुम्बते निजमौरसम् । एवं वर्णाःप्रयोक्तव्या 'युञ्जान' इति निदर्शनम् ॥' (या. शि. श्लो. ६३) अर्थात्—यथा मातुः बालकमुखचुम्बने मुखाकृतिः वर्तुला भवति तथा चवर्गपञ्चमस्य ञकारस्योच्चारणेऽपि वर्तुल-विवृतमुखाऽऽकृत्या सुस्पष्टतया कर्तव्या इत्यर्थः ।

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

यादिवम् । बृहज्ज्योतिः करिष्यतः सविताप्रसुवातितान् ॥३॥ युञ्ज-
तेमनऽउतयुञ्जतेधियोविप्राविप्रस्यबृहतोविपश्चितः । विहो

१. "ज्योतिश्च्यवनः श्येनः श्यामᳬश्यामाकाः श्येतोज्ज्येष्ठोज्ज्योज्याच्छ्रूयति"
एते संयोगा एकयकारा भवन्ति । (शु० य० प्रा० सू० १५२ अ० ४) इति
एवं प्रचुराण्येवोदाहरणानि संहितायां द्रष्टव्यानि । यथा—दुश्च्च्यवनः (१७।३९)
इन्दुर्दक्षः (१८।५३) श्यामाकाश्चमे (१८।१२) श्यामंचमे (१८।१३) श्येतो-
मरुहविः ( परशाखीयोदाहरणम् ) 'यो ह वै ज्यैष्ठ्यं च श्रेष्ठ्यं च' ( इत्यपि
शाखान्तरीयम् ) 'ज्योक्तेसन्दृशिजीव्यासम्' ( ३६।१९ ) 'ज्याऽइयᳬ समने'
( २९।४० ) 'कस्त्वाऽऽच्छ्यति' ( २३।३९ ) इदमुदाहरणमिह विहितम् ।
एकमेव अन्यानुपलंभात् । संहितायान्तु प्रचुराणि कथितानि ।

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha
त्त्रांदधेद्ययुनाविदेकऽइन्न्महीदेवस्यसवितुःपरिष्टुतिः ॥४॥युजेवाम्ब्र-
ह्मपूर्व्यन्नमोभिर्विशश्लोकऽएतुपथ्येवसूरेः । शृण्वन्तुव्विश्श्वेऽअमृ
तस्यपुत्राऽआयेधामानिदिव्यानितस्थुः ॥ ५ ॥ यस्यप्प्रयाणमन्न्व
न्न्यऽइद्ययुर्देवादेवस्यमहिमानमोजसा । यःपार्थिवानिव्विममेसऽए
तशोरजाᳪसिदेवःसविताम्महित्वना ॥ ६ ॥ देवसवितःप्प्रसुवयज्ञम्प्र
सुवयज्ञपतिम्भगाय । दिव्योगन्धर्व्वःकेतपूःकेतन्नःपुनातुव्वाचस्प्प
तिर्वाचन्नःस्वदतु ॥ ७ ॥ इमन्नोदेवसवितर्य्यज्ञम्प्रणयदेवाव्यᳬसखि
विदᳬसत्राजितन्धनजितᳪस्वर्जितम् । ऋचास्तोमᳬसमर्द्धयगायत्त्रेणरथन्तरम्बृहद्गायत्त्रवर्तनिस्वाहा ॥ ८ ॥ देवस्यत्त्वासवितुः
CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

प्प्रसवेऽश्विनोर्ब्बाहुब्भ्याम्पूष्णोहस्ताब्भ्याम् । आददेगायत्त्रेणच्छन्द-
साङ्गिरस्वत्पृथिव्व्याःसधस्थादग्ग्निम्पुरीष्यमङ्गिरस्वदाभरत्त्रैष्टुभेन-
च्छन्दसाङ्गिरस्वत् ॥ ९ ॥ अब्भ्रिरसिनार्य्यसित्त्वयाव्वयमग्निंᳬ शं-
केमखनितुᳬसधस्थऽआ । जागतेनच्छन्दसाङ्गिरस्वत् ॥१०॥ हस्तऽ-
आधायसविताबिब्भ्रदब्भ्रिᳬहिरण्ण्ययीम् । अग्ग्नेर्ज्ज्योतिर्न्निचाय्य-
पृथिव्व्याऽअद्ध्याभरदानुष्टुभेनच्छन्दसाङ्गिरस्वत् ॥ ११ ॥ प्रतूर्त्तंव्वा
जिन्नाद्द्रवप्परिष्ठामनुसंव्वतम् । दिवितेजन्म्मपरममन्तरिक्षेतवना-
भिःपृथिव्व्यामधियोनिरित् ॥ १२ ॥ युञ्जाथाᳬरासभंय्युवम-
स्मिन्न्यामेव्वृषण्वसू । अग्ग्निम्भरन्तमस्म्मयुम् ॥ १३ ॥ योगे-

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

योगेतवस्तरंवाजेवाजेहवामहे । सखायऽइन्द्रमूतये ॥१४॥ प्रतूर्व्वन्ने-
ह्यवक्रामन्नशस्तीरुद्रस्यगाणपत्त्यम्मयोभूरेहि । उर्व्वन्तरिक्षंव्वीहि-
स्वस्तिगव्यूतिरभयानिकृण्वन्न्यूष्णासयुजासह ॥१५॥ पृथिव्याःस-
धस्त्थादग्निम्पुरीष्ष्यमङ्गिरस्वदाभराग्निम्पुरीष्ष्यमङ्गिरस्वदच्छेमो-
ग्निम्पुरीष्ष्यमङ्गिरस्वद्भरिष्ष्यामः ॥ १६ ॥ अन्वग्निरुषसामग्ग्रम
क्ख्यदन्वहानिप्प्रथमोजातवेदाः ॥ अनुसूर्य्यस्यपुरुत्राचरश्मीननु-
द्यावापृथिवीऽआततन्थ ॥१७॥ आगत्यव्वाज्यद्ध्वानःसर्व्वामृधो-
विधूनुते ॥ अग्निःसधस्त्थेमहतिचक्षुषानिचिकीषते ॥ १८ ॥ आ-
क्रम्यवाजिन्पृथिवीमग्निमिच्छरुचात्त्वम् । भूम्म्यावृत्त्वायनोब्रू-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

हिषतऽख्खनेमतंव्वयम् ॥ १९ ॥ द्यौस्तेपृष्ठम्पृथिवीसधस्थमात्मा-
न्तरिक्षᳪसमुद्द्रोयोनिः । व्विख्यायचक्षुषात्त्वमभितिष्ठपृतन्न्य-
तः ॥ २० ॥ उत्क्राममहतेसौभगायास्म्मादास्थानाद्द्रविणोदाव्वा-
जिन् । व्वयᳪस्यामसुमतौपृथिव्याऽअग्निङ्खनन्तऽउपस्थेअस्याः
॥ २१ ॥ उदक्रमीद्द्रविणोदाव्वाज्ज्यर्व्वाकःसुलोकᳪसुकृतम्पृथि-
व्याम् । ततःखनेमसुप्प्रतीकमग्निᳪस्वोरुहाणाऽअधिनाकमुत्तमम्
॥ २२ ॥ आत्त्वाजिघर्म्मिमनसाघृतेनप्रतिक्षियन्तम्भुवनानिव्विश्श्वा ।
पृथुन्तिरश्श्चाव्वयसाबृहन्तंव्व्यचिष्ठमन्नैरभसन्दृशानम् ॥ २३ ॥ आ-
विश्श्वतःप्प्रत्यञ्चञ्जिघर्म्म्यरक्षसामनसातज्जुषेत । मर्य्यश्रीस्पृह-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

सद्दूढ्णों॒ऽअ॒ग्निर्न्नो॑ भि॒मृ॒शा॑तन्न्पुा॒जन्भुराण॑ᳪ ॥ २४ ॥ परि॒वाज॑पति॑ᳪ
क॒विर॒ग्निर्ह॒व्यान्न्य॑क्रमीत् । द॒धद्र॒त्नानि॑ दा॒शुषे॑ ॥ २५ ॥ परि॑त्वा-
ग्ने॒पुर॑व्व॒यंव्विप्र॑ᳪ सहस्यधीमहि । धृ॒षद्व॑र्णन्दि॒वेदि॑वेह॒न्तार॑म्भङ्गु॒रा-
व॑ताम् ॥ २६ ॥ त्वम॑ग्ने॒द्युभि॒स्त्वमा॑शुशु॒क्षणि॒स्त्वम॒द्भ्यस्त्वमश्म॑न॒-
स्प्परि॑ । त्वंव्वने॑भ्य॒स्त्वमोष॑धीभ्य॒स्त्वन्नृ॒णान्नृ॑पतेजायसे॒शुचिः॑
॥ २७ ॥ दे॒वस्य॑त्त्वासवि॒तुः प्र॑स॒वे॒ऽश्विनो॑र्ब्बा॒हुभ्या॑म्पू॒ष्णोहस्ता॑भ्या-
म् । पृ॒थि॒व्याः स॒धस्था॑द॒ग्निम्पु॒री॒ष्य॒मङ्गि॒रस्वदाभ॑रा॒मि । ज्योति॑-
ष्मन्तन्त्वाग्नेसु॒प्रतीक॒मज॑स्रेण भा॒नुना॒दीद्य॑तम् । शि॒वम्प्र॒जाभ्यो॑-
हि॑ᳪसन्तम्पृ॒थि॒व्याः स॒धस्था॑द॒ग्निम्पु॒री॒ष्य॒मङ्गि॒रस्वदाभ॑रामः ॥२८॥

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

अपाम्पृष्ठमसियोनिरग्ग्नेः समुद्रमभितः पिन्न्वमानम् । व्वर्द्धमानो-
महाँ२ऽआचपुष्क्करेदिवोमात्र्रयाव्वरिम्म्णाप्प्रथस्व ॥२९॥ शर्म्मचस्त्थो
व्वर्म्मचस्त्थोच्छिद्रेबहुलेऽउभे । व्यचस्वतीसंव्वसाथाम्भृतमग्निम्पु-
रीष्ष्यम् ॥ ३० ॥ संव्वसाथाᳬस्वर्व्विदासमीचीऽउरसात्त्मना । अ-
ग्निमन्तर्ब्भरिष्ष्यन्तीज्ज्योतिष्मन्तमजस्रमित् ॥ ३१ ॥ पुरीष्ष्योसि
व्विश्श्वभराऽअथर्व्वात्वाप्प्रथमोनिरमन्थदग्ने ॥ त्वामग्नेपुष्क्करादि-
द्ध्यथर्व्वानिरमन्थत । मूर्ध्नोव्विश्श्वस्यव्वाघतः ॥ ३२ ॥ तमुत्त्वा-
दद्ध्यङ्ङृषिः पुत्रऽईधेऽअथर्व्वणः । व्वृत्रहणम्पुरन्दरम् ॥ ३३ ॥
तमुत्त्वापाथ्योव्वृषासमीधेदस्युहन्तमम् । धनञ्जयᳬरणेरणे ॥ ३४ ॥

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

सीदहोतःस्वऽउंल्लोकेचिकित्वान्त्सादयायज्ञꣳसुकृतस्ययोनौ । देवा-
वीर्देवान्हविषायजास्यग्नेबृहद्यजमानेवयोधाः ॥ ३५ ॥ निहोता-
होतृषदनेविदानस्त्वेषोदीदिवाँ२ऽअसदत्सुदक्षः । अदब्धव्रतप्र-
मतिर्वसिष्ठःसहस्रम्भरःशुचिजिह्वोऽअग्निः ॥ ३६ ॥ सꣳसीद-
स्वमहाँ२ऽअसिशोचस्वदेववीतमः । विधूममग्नेऽअरुषम्मियेध्यसृज-
प्रशस्तदर्शतम् ॥३७॥ अपोदेवीरुपसृजमधुमतीरयक्ष्मायप्रजाभ्यः ।
तासामास्थानादुज्जिहतामोषधयःसुपिप्पलाः ॥ ३८ ॥ सन्तेवायु-
र्म्मातरिश्वादधातूत्तानायाहृदयंयद्विकस्तम् । योदेवानाञ्चरसि-
प्राणथेनकस्मैदेववषडस्तुतुभ्यम् ॥ ३९ ॥ सुजातोज्ज्योतिषासह-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

शर्म्मंव्वरूथमासदत्स्वः । व्वासोऽअग्ग्नेव्विश्श्वरूपᳯसंव्व्ययस्वव्वि-
भावसो ॥ ४० ॥ उदुतिष्ठस्वद्ध्वरावानोदेव्व्याधिया । दृशेचभासा-
बृहतासुशुक्कनिराग्ग्नेयाहिसुशस्तिभिः ॥ ४१ ॥ ऊर्द्ध्वऽऊषुणऽऊ-
तयेतिष्ठादेवोनसविता । ऊर्द्ध्वोव्वाजस्यसनितायदञ्जिभिर्व्वाघद्भिर्-
व्विह्वयामहे ॥ ४२ ॥ सजातोगर्ब्भोऽअसिरोदस्योरग्ग्नेचारुर्व्विभृत-
ऽओषधीषु । चित्रः शिशुः परितमाᳯस्यक्तून्प्रमातृब्भ्योऽअधिकनि-
क्रदद्गाः ॥ ४३ ॥ स्थिरोभवव्वीड्वङ्गऽआशुर्भवव्वाज्ज्यर्व्वन् । पृ-
थुर्ब्भवसुषदस्त्वमग्ग्नेः पुरीषवाहणः ॥ ४४ ॥ शिवोभवप्प्रजाब्भ्योमा-
नुषीब्भ्यस्त्वमङ्गिरः । माद्यावापृथिवीऽअभिशोचीर्म्मान्तरिक्षम्मा-

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

व्वनस्पतीन् ॥ ४५ ॥ प्रैतुंव्वाजीकनिंक्क्रदन्नानंदद्द्रासंभ᳘ पत्वा ।
भरन्नग्निम्पुरीष्ष्यम्मापाद्यायुषᳬ पुरा । व्वृषाग्निम्व्वृषंणम्भरन्नपाङ्ग-
र्भᳬ समुद्द्रियंम् । अग्नऽआयाहिव्वीतयैं ॥४६॥ ऋतᳬ सत्त्यमृतᳬ स-
त्त्यमग्निम्पुरीष्ष्यमङ्गिरस्वद्भरामᳬ । ओषंधयᳬ प्प्रतिमोदद्ध्वमग्निमे-
तᳬ शिवमायन्तंमभ्भ्यत्र्रयुष्ष्माः । व्व्यस्यन्न्विश्श्वाऽअनिंराऽअमींवा
निषीदंन्नोऽअपंदुर्म्मतिञ्जहि ॥ ४७ ॥ ओषंधयᳬ प्प्रतिगृभ्णीतपुष्प्पंव-
तीᳬसुपिप्पलाः । अयंव्वोगर्ब्भऽऋत्त्वियंᳬ प्प्रत्नᳬ सधस्त्थमासंदत्
॥ ४८ ॥ व्विपाजंसापृथुनाशोशुंचानोबाधंस्वद्विषोरक्षसोऽअमींवाᳬ ।
सुशर्म्मणोबृहतᳬशर्म्मणिस्यामग्नेरहᳬ सुहवंस्यप्रणीतौ ॥४९॥ आपो

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

हिष्ठामयोभुवस्तानऽऊर्जेदधातन । महेरणायचक्षसे ॥ ५० ॥ योवः

शिवतमोरसस्तस्यभाजयतेहनः । उशतीरिवमातरः ॥ ५१ ॥

तस्म्माऽअरङ्गमामवोयस्यक्षयायजिन्न्वथ । आपोजनयथाचनः ॥ ५२॥

मित्त्रः सᳬसृज्ज्यपृथिवीम्भूमिञ्चज्ज्योतिषासह । सुजातञ्जातवेद-

समयक्ष्मायत्त्वासᳬसृजामिप्प्रजाब्भ्यः ॥ ५३ ॥ रुद्द्राः सᳬसृज्ज्य

पृथिवीम्बृहज्ज्योतिᳬसमीधिरे । तेषाम्भानुरजस्रऽइच्छुक्क्रोदेवेषु

रोचते ॥ ५४ ॥ सᳬसृष्टांवसुभीरुद्द्रैर्द्धीरैᳬकर्म्मण्ण्याम्मृदम् । हस्ता-

ब्भ्याम्मृद्वीङ्कृत्त्वासिनीवालीकृणोतुताम् ॥ ५५ ॥ सिनीवालीसुकप-

र्द्दासुकुरीरास्वौपशा । सातुब्भ्यमदितेमह्योखान्दधातुहस्तयोः ॥५६॥

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha
उषाङ्कृणोतुशक्त्क्त्याबाहुभ्यामदितिद्धिया । मातापुत्रंर्ष्यथोपस्थे
साग्निम्बिभर्त्तुगर्भऽआ । मखस्यशिरोसि ॥ ५७ ॥ व्वसंवस्त्वाकृ-
ण्वन्तुगायत्त्रेणच्छन्दसाङ्गिरस्वद्ध्रुवासिपृथिव्व्यसिधारयामयिप्प्र-
जाᳬरायस्प्पोषङ्गौपत्त्यᳬसुवीर्य्यᳬसजातान्न्यजमानायरुद्द्रास्त्वाकृ-
ण्वन्तुत्त्रैष्ट्टुभेनच्छन्दसाङ्गिरस्वद्ध्रुवास्यन्तरिक्षमसिधारयामयिप्प्र-
जाᳬरायस्प्पोषङ्गौपत्त्यᳬसुवीर्य्यᳬसजातान्न्यजमानायादित्त्यास्त्वा-
कृण्वन्तुजागतेनच्छन्दसाङ्गिरस्वद्ध्रुवासिद्द्यौरसिधारयामयिप्प्र-
जाᳬरायस्प्पोषङ्गौपत्त्यᳬसुवीर्य्यᳬसजातान्न्यजमानायव्विश्श्वेत्त्वा-
देवाव्वैश्श्वानराकृण्वन्त्वानुष्टुभेनच्छन्दसाङ्गिरस्वद्ध्रुवासिदिशो-
CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

सिधारयामयिप्रजाᳬरायस्पोषङ्गौपत्यᳬसुवीर्य्यᳬसजातान्यजमा-
नाय ॥ ५८ ॥ अदित्यैरास्नास्यदितिष्टेविलङ्गृभ्णातु । कृत्वायसाम-
हीमुखांमृन्मयींयोनिमग्नये । पुत्रेभ्यᳬप्रायच्छददितिᳬश्रपयानिति
॥ ५९ ॥ व्वसवस्त्वाधूपयन्तुगायत्रेणच्छन्दसाङ्गिरस्वद्रुद्रास्त्वाधू-
पयन्तुत्रैष्टुभेनच्छन्दसाङ्गिरस्वदादित्यास्त्वाधूपयन्तुजागतेनच्छन्द-
साङ्गिरस्वद्विश्वेत्वादेवाव्वैश्वानराधूपयन्त्वानुष्टुभेनच्छन्दसाङ्गि-
रस्वदिन्द्रस्त्वाधूपयतुव्वरुणस्त्वाधूपयतुविष्णुस्त्वाधूपयतु ॥ ६० ॥
अदितिष्ट्वादेवीव्विश्वदेव्यावतीपृथिव्याᳬसधस्थेऽअङ्गिरस्वत्खन-
त्ववटदेवानान्त्वापत्नीर्देवीर्व्विश्वदेव्यावतीᳬपृथिव्याᳬसधस्थेऽ-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

अङ्गिरस्वद्दधतूखेधिषणास्त्वादेवीर्व्विश्श्वदेव्यावतीःपृथिव्याःसध-
स्त्थेऽअङ्गिरस्वद्भीन्धतामुखेव्वरूत्रीष्ट्वादेवीर्व्विश्श्वदेव्यावतीःपृथि-
व्याःसधस्त्थेऽअङ्गिरस्वच्छ्रपयन्तूखेऽग्नास्त्वादेवीर्व्विश्श्वदेव्यावतीः
पृथिव्याःसधस्त्थेऽअङ्गिरस्वत्पचन्तूखेजनयस्त्वाच्छिन्नपत्राःदेवीर्व्वि-
श्श्वदेव्यावतीःपृथिव्याःसधस्त्थेऽअङ्गिरस्वत्पचन्तूखे ॥ ६१ ॥ मि-
त्रस्यचर्षणीधृतोवोदेवस्यसानसि । द्युम्मन्नश्चित्रश्श्रवस्तमम् ॥६२॥
देवस्त्वासवितोद्द्वपतुसुपाणिःस्वङ्गुरिःसुबाहुरुतशक्क्त्या । अव्व्य-
थमानापृथिव्यामाशादिशऽआपृण ॥ ६३ ॥ उत्थायबृहतीभवोदुति-
ष्ठद्ध्रुवात्वम् । मित्रैतान्तऽउखाम्परिददाम्म्यभित्त्याऽएषामाभेदि

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

॥ ६४ ॥ व्वसवस्त्वाच्छृन्दन्तुगायत्रेणच्छन्दसाङ्गिरस्वद्रुद्रास्त्वा-
च्छृन्दन्तुत्रैष्टुभेनच्छन्दसाङ्गिरस्वदादित्यास्त्वाच्छृन्दन्तुजागतेनच्छ-
न्दसाङ्गिरस्वद्विश्श्वेत्वादेवाव्वैश्श्वानराऽआच्छृन्दन्त्वानुष्टुभेनच्छन्द-
साङ्गिरस्वत् ॥ ६५ ॥ आकूतिमग्निम्प्रयुजꣳस्वाहामनोमेधामग्निम्प्र-
युजꣳस्वाहाचित्तंविज्ञातमग्निम्प्रयुजꣳस्वाहाव्वाचोव्विधृतिमग्नि-
म्प्रयुजꣳस्वाहाप्रजापतयेमनवेस्वाहाग्नयेव्वैश्श्वानरायस्वाहा ॥ ६६ ॥
व्विश्श्वोदेवस्यनेतुर्म्मर्त्तोव्वुरीतसक्ख्यम् । व्विश्श्वोरायऽइषुद्ध्यतिद्द्यु-
म्म्नंव्वृणीतपुष्ष्यसेस्वाहा ॥६७॥ मासुभित्थामासुरिषोम्बधृष्ष्णुव्वीर-
यस्वसु । अग्निश्श्चेदङ्करिष्ष्यथꣳ ॥६८॥ दृꣳहस्वदेविपृथिविस्वस्तयऽ-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

आसुरीमायास्वधयाकृतासि । जुष्टन्देवेब्भ्यऽइदमस्तुहव्व्यमरिष्टात्व-
मुदिहियज्ञेअस्मिन् ॥ ६९ ॥ दृव्वन्नःसर्प्पिरासुतिःप्प्रत्नोहोताबरे-
ण्यः । सहसस्पुत्त्रोऽअद्भुतः ॥७०॥ [शतम्५००] परस्याऽअधिसंब्ब
तोवराँ२ऽअब्भ्यातर । यत्राहमस्मितााँ२ऽअव ॥७१॥ परमस्याःपरा
वतोरोहिदश्श्वऽइहागहि । पुरीष्ष्यःपुरुप्प्रियोग्नेत्वन्तरामृधः
॥ ७२ ॥ यदग्ग्नेकानिकानिचिदातेदारूणिदध्मसि । सर्व्वन्तदस्तु-
तेघृतन्तज्जुषस्वयविष्ठ्य ॥ ७३ ॥ यदत्त्युपजिह्विकायद्वम्रोऽअति-
सर्प्पति । सर्व्वन्तदस्तुतेघृतन्तज्जुषस्वयविष्ठ्य ॥ ७४ ॥ अहरहर-
प्प्रयावम्भरन्तोश्श्वायेवतिष्ठतेघासमस्मै । रायस्प्पोषेणसमिषाम-

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By SIddhanta eGangotri Gyaan Kosha

दन्तोग्ग्नेमातेप्प्रतिवेशारिषाम ॥ ७५ ॥ नाभापृथिव्व्याःसमिधानेऽअ-
ग्नौरायस्पोषायबृहतेहवामहे । इरम्मदम्बृहदुक्क्थंय्यजत्रञ्जेता-
रमग्निम्पृतनासुसासहिम् ॥ ७६ ॥ याःसेनाऽअभीत्त्वरीराव्याधि-
नीरुगणाऽउत । येस्तेनायेचतस्करास्ताँस्तेऽअग्नेपिदधाम्म्यास्ये
॥ ७७ ॥ दꣳष्ट्राब्भ्याम्मलिम्म्लूञ्जम्भ्यैस्तस्कराँ२उत । हनुब्भ्याꣳ
स्तेनान्भगवस्ताँस्त्वङ्खादसुखादितान् ॥ ७८ ॥ येजनेषुमलिम्म्लव-
स्तेनासस्तस्करावने । येकक्षेष्वघायवस्ताँस्तेदधामिजम्भयोः ॥७९॥
योऽअस्म्मभ्यमरातीयाद्यश्चनोद्द्वेषतेजनः । निन्दाद्योऽअस्म्मा-
न्धिप्प्साच्चसर्व्वन्तम्मस्म्मसाकुरु ॥८०॥ सꣳशितम्मेब्रह्मसꣳशि-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

तंव्वीर्य्युँम्बलंम् । सꣳशितङ्क्षत्रञ्जिष्ष्णुयस्याहमस्म्मिपुरोहितः॥८१॥
उदेषाम्बाहूऽअतिरमुद्वर्च्चोऽअथोबलंम् । क्षिणोमिब्रह्मणामित्त्रानुन्नयामिस्वाँ२ऽअहम् ॥ ८२ ॥ अन्नपतेन्नस्यनोदेह्यनमीवस्यशुष्मिणः । प्रप्प्रदातारन्तारिषऽऊर्ज्जन्नोधेहिद्विपदेचतुष्प्पदे ॥ ८३ ॥
इति संहितायां एकादशोऽध्यायः ॥

## ❀ अथ द्वादशोऽध्यायः ❀

ॐ दृशानोरुक्क्मऽउर्व्याव्यद्यौद्दुर्म्मर्षमायुः श्रियेरुचानः ।
अग्निरमृतोऽअभवद्वयोभिर्य्यदेनन्द्यौरजनयत्सुरेताः ॥ १ ॥

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

नक्तोषासासमनसाविरूपेधापयेतेशिशुमेकꣳसमीची । द्यावा-
क्षामारुक्मोऽअन्तर्विभातिदेवाऽअग्निन्धारयन्द्रविणोदाः ॥ २ ॥
विश्वारूपाणिप्प्रतिमुञ्चतेकविःप्प्रासावीद्भद्रन्द्विपदेचतुष्पदे ॥
विनाकमक्ख्यत्सविताव्वरेण्योनुप्प्रयाणमुषसोव्विराजति ॥ ३ ॥
सुपर्णोसिगरुत्माँस्त्रिवृत्तेशिरोगायत्रञ्चक्षुर्बृहद्रथन्तरेपक्षौ । स्तोम-
ऽआत्माच्छन्दाꣳस्यङ्गानियजूꣳषिनाम । सामतेतनूर्व्वामदेव्व्यंय-
ज्ञायज्ञियम्पुच्छन्धिष्ण्याःशफाः । सुपर्णोसिगरुत्मान्दिवङ्गच्छस्वः
पत ॥ ४ ॥ विष्णोःक्रमोसिसपत्नहागायत्रञ्छन्दऽआरोहपृ-
थिवीमनुविक्क्रमस्वव्विष्णोःक्क्रमोस्यभिमातिहात्रैष्टुभञ्छन्दऽआ-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


रोहान्तरिक्षमनुविक्क्रमस्वविष्णोःक्क्रमोस्यरातीयतोहन्ताजागत-
च्छन्दऽआरोहदिवमनुविक्क्रमस्वविष्णोःक्क्रमोसिशत्त्रूयतोहन्ता-
नुष्टुभञ्छन्दऽआरोहदिशोनुविक्क्रमस्व ॥ ५ ॥ अक्क्रन्ददग्नि-
स्तनयन्निवद्यौःक्षामारेरिहद्वीरुधःसमञ्जन् । सद्योजज्ञानोवि-
हीमिद्धोऽअक्ख्यदारोदसीभानुनाभात्यन्तः ॥ ६ ॥ अग्नेब्भ्यावर्त्तिन्न-
भिमानिवर्तस्वायुषावर्च्चसाप्प्रजयाधनेन । सन्न्यामेधयारय्यापोषे-
ण ॥ ७ ॥ अग्नेऽअङ्गिरःशतन्तेसन्त्वावृतःसहस्रन्तऽउपावृतः ।
अधापोषस्यपोषेणपुनर्न्नोनष्टमाकृधिपुनर्नोरयिमाकृधि ॥ ८ ॥ पुन-
रूर्जानिवर्त्तस्वपुनरग्नऽइषायुषा । पुनर्न्नःपाह्यꣳहसः ॥ ९ ॥ सहर-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

रुषानिवर्त्तस्वाग्ग्नेपिन्न्वस्व धारया विश्श्वप्प्स्न्याविश्श्वतस्प्परि-
॥ १० ॥ आत्त्वाहार्षमन्तरभूर्द्ध्रुवस्तिष्ठाविचाचलिः । विशस्त्वा-
सर्व्वाव्वाञ्छन्तुमात्वद्द्राष्ट्रमधिब्भ्रशत् ॥ ११ ॥ उदुत्तमंव्वरुणपा-
शमस्म्मदवाधमंविमध्यमꣳ श्रथाय । अथाव्वयमादित्यव्व्रतेत-
वानागसोऽअदितयेस्याम ॥ १२ ॥ अग्ग्रेबृहन्नुषसामूर्द्ध्वोऽअ-
स्त्थान्निर्ज्जगन्न्वान्तमसोज्ज्योतिषागात् । अग्निर्ब्भानुनारुशा-
तास्वङ्गऽआजातोव्विश्श्वासद्मान्न्यप्प्राः ॥ १३ ॥ हꣳसः शुचिषद्वसु-
रन्तरिक्षसद्धोताव्वेदिषदतिथिर्द्दुरोणसत् । नृषद्वरसदृतसद्व्योमस-
दब्जागोजाऽऋतजाऽअद्रिजाऽऋतंबृहत् ॥ १४ ॥ सीदत्त्वम्मातुर-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

स्याऽउपस्त्थेव्विश्श्वान्न्यग्ग्नेव्वयुनानिव्विद्द्वान् । मैनान्तपसामार्चि-
षाभिशोचीरन्तरस्याᳫंशुक्कज्ज्योतिर्व्विभाहि ॥ १५ ॥ अन्तरग्ग्नेरु-
चात्त्वमुखायाऽसदनेस्वे । तस्यास्त्वᳪंहरसातपञ्जातवेदᳪंशिवोभव
॥ १६ ॥ शिवोभूत्त्वामह्यमग्ग्नेअथोसीदशिवस्त्वम् । शिवाᳫंकृत्त्वादिशᳪं
सर्व्वाᳪंस्वंय्योनिमिहासदᳪं ॥ १७ ॥ दिवस्प्परिप्प्रथमञ्जज्ञेऽअग्निर-
स्म्मद्द्वितीयम्परिजातवेदाᳪं । तृतीयमप्प्सुनृमणाऽअजस्त्रमिन्धानऽ-
एनञ्जरतेस्वाधीᳫं ॥ १८ ॥ [1]विद्मातेऽअग्ग्नेऽत्त्रेधात्त्रयाणिव्विद्मातेधाम-

---

१. इत्यत्र 'विद्मासौत्रामण्याम्' ( ३।१२६ ) सौत्रामणीमन्त्रमुक्त्वा विद्म इत्ययं ह्रस्वो दीर्घमापद्यते ।

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

विभृतापुरुत्रा । विद्माते नामपरमङ्गुहायद्विद्मातमुत्संय्यतऽआ-
जगन्थ ॥ १९ ॥ समुद्रेत्वानृमणाऽअप्स्वन्तर्न्नृचक्षाऽईधेदिवोऽअ-
ग्नऽऊधन् । तृतीयेत्वारजसितस्थिवाᳬसंमपामुपस्थेमहिषाऽअव-
र्द्धन् ॥ २० ॥ अक्रन्ददग्निस्तनयन्निवद्यौःक्षामारेरिहद्वीरुधः
समञ्जन् । सद्योजज्ञानोविहीमिद्धोऽअख्यदारोदसीभानुनाभा-
त्यन्तः ॥ २१ ॥ श्रीणामुदारोधरुणोरयीणाम्मनीषाणाम्प्रार्पणᳬसोम-
गोपाः । वसुः सूनुःसहसोऽअप्सुराजाविभात्यग्रऽउषसामिधा-
नः ॥ २२ ॥ विश्वस्यकेतुर्भुवनस्यगर्भऽआरोदसीऽअपृणाज्जाय-
मानः । वीडुञ्चिदद्रिमभिनत्परायञ्जनायदग्निमयजन्तपञ्च ॥ २३ ॥

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

उशिक्क्पावकोऽअरतिःसुमेधामर्त्तेष्ष्वग्निरमृतोनिधायि । इयर्त्तिधूम-
मरुषम्भरिब्भ्रदुच्छुक्रेणशोचिषाद्द्यामिनक्षन् ॥ २४ ॥ दृशानोरु-
क्क्मऽउर्व्याव्व्यद्द्यौद्दुर्म्मर्षमायुः श्रियेरुचानः । अग्निरमृतोऽअ-
भवद्वयोभिर्य्यदेनन्द्यौरजनयत्सुरेताः ॥ २५ ॥ यस्तेऽअद्यकृणवद्-
भद्रशोचेपूपन्देवघृतवन्तमग्ने । प्रतन्नयप्प्रतरंव्वस्योऽअच्छाभि-
सुम्म्नन्देवभक्तंय्यविष्ठ ॥२६॥ आतम्भजसौश्श्रवसेष्ष्वग्नऽउक्क्थऽ-
उक्क्थऽआभजशस्यमाने । प्प्रियःसूर्य्येप्प्रियोऽअग्नाभवात्युज्जाते-
नभिनदुज्जनित्त्वैः ॥ २७ ॥ त्वामग्नेयजमानाऽअनुद्यून्विश्श्वाव-
सुदधिरेव्वार्य्याणि । त्वयासहद्रविणमिच्छमानाव्व्रजङ्गोमन्तमुशि-

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

जोषिवंव्वुः ॥ २८ ॥ अस्ताव्यग्निन्नराᳯसुशेवोव्वैश्वानरऽऋषि-
भिःसोमगोपाः । अद्वेषेद्यावापृथिवीहुवेमदेवाधत्तरयिमस्मेसुवी-
रम् ॥ २९ ॥ समिधाग्निन्दुवस्यतघृतैर्बोधयतातिथिम् । आस्मिन्हव्व्या-
ज्जुहोतन ॥ ३० ॥ उदुत्त्वाव्विश्वेदेवाऽअग्नेभरन्तुचित्तिभिः ।
सनोभवशिवस्त्वᳪसुप्प्रतीकोव्विभावसुः ॥ ३१ ॥ प्रेदग्नेज्ज्योतिं-
ष्म्यान्याहिशिवेभिरर्चिभिष्ट्वम् । बृहद्भिर्ब्भानुभिर्ब्भासन्माहिᳪ-
सीस्तन्न्वाप्प्रजाः ॥ ३२ ॥ अक्क्रन्ददग्निस्तनयन्निवद्यौःक्षामारे-
रिहद्वीरुधः समञ्जन् । सद्योजज्ञानोव्विहीमिद्धोऽअक्ख्यदारोदसी-
भानुनाभात्यन्तः ॥ ३३ ॥ प्रप्प्रायमग्निर्भरतस्यशृण्वेव्वियत्सूर्य्योन-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

रोचंतेबृहद्भाः । अभियःपुरुपृतंनासुतस्त्थौदीदायदैव्योऽअतिथिः
शिवोनं÷ ॥ ३४ ॥ आपोदेवीःप्रतिगृभ्णीतमस्स्मैतत्स्योनेकृणुद्ध्वः
सुरभाऽउंलोके । तस्मैनमन्ताजनंयःसुपत्नीर्म्मातेवंपुत्रम्बिभृताप्स्वे-
नत् ॥ ३५ ॥ अप्स्वग्न्नेसधिष्ट्वंसौषंधीरनुंरुध्यसे । गर्भेसञ्जायसेपु-
नं÷ ॥३६॥ गर्भोऽअस्योषंधीनाङ्गर्भोंवनस्पतीनाम् । गर्भोविश्श्वं-
स्यभूतस्याग्न्नेगर्भोऽअपामंसि ॥३७॥ प्रसद्यभस्मंनायोनिंमपश्चपृ-

१. इत्यत्र 'सधिरठं० शुरदितिः' (३।७६) इत्यनेन सधिः, अंशुः, अदितिः एतेषां विसर्जनीयः सकारः षकारमापद्यते संहितायाम् । एवम्—अंशुष्टे (५।७) अदितिष्ट्वा (१।११) इत्यादिषु ज्ञेयम् ।

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

थिवीमग्ने । सᳪसृज्ज्यमातृभिष्ट्वञ्ज्योतिष्मान्पुनरासदः ॥३८॥ पुन-
रासद्द्यसदनमपश्चपृथिवीमग्ने । शेषेमातुर्यथोपस्थेन्तरस्याᳪशि-
वतमः ॥३९॥ पुनरूर्ज्जानिवर्त्तस्वपुनरग्नऽइषायुषा । पुनर्न्नःपाह्यᳪ-
हसः ॥४०॥ सहरय्यानिवर्त्तस्वाग्नेपिन्वस्वधारया । विश्श्वप्प्स्न्या-
विश्श्वतस्परि ॥४१॥ बोधामेऽअस्यवचसोयविष्ठमᳪहिष्ठस्यप्प्रभृ-
तस्यस्वधावः । पीयतित्वोऽअनुत्वोगृणातिवन्दारुष्टेतन्वंवन्देऽअ-
ग्ने ॥ ४२ ॥ सबोधिसूरिर्म्मघवावसुपतेवसुदावन् । युयोद्ध्यस्म्मद्द्वे-
षाᳪसिविश्श्वकर्म्मणेस्वाहा ॥ ४३ ॥ पुनस्त्वादित्यारुद्द्रावसवःसमि-
न्धताम्पुनर्ब्रह्माणोवसुनीथयज्ञैः । घृतेनत्वन्तन्वंवर्द्धयस्वसत्त्याः

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

सन्तुयजमानस्यकामाः ॥ ४४ ॥ अपेतव्वीतव्विचसर्प्पतातोयेत्रस्थपु-
राणायेचनूतनाः । अदाद्यमोवसानम्पृथिव्याऽअक्रन्निमम्पितरोलोक-
मस्मै ॥४५॥ सँज्ञानमसिकामधरणम्मयितेकामधरणम्भूयात् । अग्ने-
र्भस्मास्यग्नेः पुरीषमसिचितस्थपरिचितऽऊर्द्ध्वचितः श्रयद्ध्वम्

१. इत्यादावपि तथाविधमुखाकृत्या उच्चारणेन वैदिकानां सञ्ज्ञँज्ञानेति श्रुतिर्भ-वति । तथा च जिह्वाग्रेण अधोदन्तमूलं स्पृष्ट्वा जिह्वामध्येन च तालुं स्पृष्ट्वा ञकारे उच्चारिते मुखस्य वर्तुलत्विवर्तनं भवति । अत एव तत्र नकारञकाराभ्यां मिलितेव श्रुतिः श्रूयते इति भावः । एतेन य (ञ्ज) ज्ञ शब्दे यग्यँति यद्गेति वोच्चारणं निरस्तम् । केचन (यज्ञँ) इत्युच्चारयन्ति तेऽपि परास्ताः ।

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

॥४६॥अयᳬसोऽअग्निर्य्यस्मिन्त्सोममिन्द्र÷सुतन्दधेजठरेवावशानः। सहस्रियम्वाजमत्त्यन्नसप्तिᳬससवान्त्सन्स्तूयसेजातवेदः ॥ ४७ ॥ अग्नेयत्तेदिविवर्च्च÷पृथिव्यांयदोषधीष्वप्स्वायजत्र। येनान्तरिक्षमुर्व्वाततन्थत्वेषःसभानुरर्ण्णवोनृचक्षाः ॥ ४८ ॥ अग्नेदिवोऽअर्ण्णमच्छाजिगास्यच्छादेवाँ२॥ऽऊचिषेधिष्ण्ण्याये। याऽरोचनेपरस्तात्सूर्य्यस्ययाश्चावस्तादुपतिष्ठन्तऽआप÷ ॥४९॥ पुरीष्यासोऽअग्नय÷प्रावणेभि÷सजोषसᳬजुषन्ताँय्यज्ञमद्रुहोऽनमीवाऽइषोमहीः ॥ ५० ॥ इडामग्नेपुरुदᳬसᳬसनिङ्गोःशश्वत्तमᳬहवमानायसाध। स्यान्न÷सूनुस्तनयोव्विजावाग्नेसातेसुमतिर्भूत्वस्मे ॥ ५१ ॥ अयन्तेयोनिर्ऋत्त्वि-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

योयतोजातोऽअरोचथाः । तञ्जानन्नग्नऽआरोहाथानोवर्द्धयारयिम्
॥ ५२ ॥ चिदसितयादेवतयाङ्गिरस्वद्ध्रुवासीदपरिचिदसितयादेवत-
याङ्गिरस्वद्ध्रुवासीद ॥ ५३ ॥ लोकम्पृणच्छिद्रम्पृणाथोसीदद्ध्रुवात्त्व-
म् । इन्द्राग्नीत्त्वाबृहस्पतिरस्मिन्न्योनावसीषदन् ॥ ५४ ॥ ताऽअ-
स्यसूददोहसः सोमᳬश्रीणन्तिपृश्नयः । जन्मन्देवानांव्विशस्त्रिष्ष्वा-
रोचनेदिवः ॥ ५५ ॥ इन्द्रंव्विश्वाऽअवीवृधन्त्समुद्रव्यचसङ्गिरः ।
रथीतमᳬरथीनांव्वाजानाᳬसत्पतिम्पतिम् ॥ ५६ ॥ समितᳬसङ्कल्पे-
थाᳬसम्प्रियौरोचिष्ष्णूसुमनस्यमानौ । इषमूर्जमभिसंव्वसानौ ॥ ५७ ॥
संव्वाम्मनाᳬसिसंव्व्रतासमुचित्तान्याकरम् । अग्नेपुरीष्याधिपा-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

भवत्त्वन्नऽइषमूर्जँयजमानायधेहि ॥ ५८ ॥ अग्नेस्त्वम्पुरीष्योरयिमा-
न्पुष्टिमाँ२असि । शिवाःकृत्वादिशꣳसर्व्वाꣳस्वंयोनिमिहासदꣳ
॥ ५९ ॥ भवतन्नꣳसमनसौसचेतसावरेपसौ । मायज्ञꣳहिꣳसिष्टम्मा-
यज्ञपतिञ्जातवेदसौशिवौभवतमद्यनः ॥ ६० ॥ मातेवपुत्रम्पृथि-
वीपुरीष्यमग्निꣳस्वेयोनावभारुखा । तांविश्वैर्देवैर्ऋतुभिःसंविदा-
नःप्रजापतिर्विश्वकर्म्माविमुञ्चतु ॥ ६१ ॥ असुन्वन्तमयजमान-
मिच्छस्तेनस्येत्यामन्विहितस्करस्य । अन्यमस्मदिच्छसातऽइत्त्या-
नमोदेविनिर्ऋतेतुभ्यमस्तु ॥ ६२ ॥ नमꣳसुतेनिर्ऋतेतिग्मतेजोयस्म-
यंविचृताबन्धमेतम् । यमेनत्वंयम्यासंविदानोत्तमेनाकेऽअधिरो-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

हृयैनम् ॥ ६३ ॥ यस्यास्तेघोरऽआसञ्जुहोम्येषाम्बन्धानामवसर्ज्जं-
नाय । यान्त्वाजनोभूमिरितिप्रमन्दन्तेनिर्ऋतिन्त्वाहम्परिवेदविश्श्व
तः ॥ ६४ ॥ यन्तेदेवीनिर्ऋतिराबबन्धपाशङ्ग्रीवास्वविचृत्यम् ।
तन्तेविष्ष्याम्म्यायुषोनमद्ध्यादथैतम्पितुमद्धिप्प्रसूतः । नमोभूत्यै-
येदञ्चकार ॥ ६५ ॥ निवेशनःसङ्गमनोव्वसूनांव्विश्श्वारूपाभिचष्टे-
शचीभिः । देवऽइवसवितासत्त्यधर्म्मेन्द्रोनतस्त्थौसमरेपथीनाम्
॥ ६६ ॥ सीरायुञ्जन्तिकवयोयुगाव्वितन्न्वतेपृथक् । धीरादेवेषु-
सुम्म्नया ॥ ६७ ॥ युनक्तसीराव्वियुगातनुद्ध्वङ्कृतेयोनौव्वपतेहवी-
जम् ॥ गिराचश्श्रुष्टिःसभराऽअसन्नोनेदीयऽइत्सृण्यःपक्कमे

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

यात् ॥ ६८ ॥ शुनᳬसुफालाव्विकृषन्तुभूमिᳬशुनङ्कीनाशाऽअभियन्तुव्वाहैः । शुनासीराहविषातोशमानासुपिप्पलाऽओषधीᳬकर्त्तनास्म्मे ॥६९॥ घृतेनसीतामधुनासमज्ज्यताम्विश्श्वैर्द्देवैरनुमतामरुद्भिः । ऊर्ज्जस्वतीपयसापिन्न्वमानास्म्मान्त्सीतेपयसाभ्याववृत्स्व ॥ ७० ॥ लाङ्गलम्पवीरवत्सुशेवᳬसोमपित्सरु ॥ तदुद्वपतिगामविम्प्रफर्व्यञ्चपीवरीम्प्रस्त्थावद्रथवाहणम् ॥ ७१ ॥ कामङ्कामदुघेधुक्ष्वमित्राय्यवरुणायच । इन्द्रायाश्श्विभ्याम्पूष्णेप्प्रजाभ्यऽओषधीभ्यः ॥७२॥ व्विमुच्च्यध्वमग्घ्न्यादेवयानाऽअगन्न्मतमसस्पारमस्य । ज्ज्योतिरापाम ॥ ७३ ॥ सजूरब्दोऽअयवोभिᳬसजूरुषाऽअरुणीभिः । सजोष-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

सावशिश्वनावहˆसोभिᳪसजूः सूरऽएतशेनसजूर्व्वैश्वानरऽइडयाघृतेन-
स्वाहा ॥ ७४ ॥ याऽओषधीःपूर्व्वाजातादेवेब्भ्यस्त्रियुगम्पुरा । मनैनु-
वब्भ्रूणामहˆशतन्धामानिसप्तच ॥ ७५ ॥ शतंवोऽअम्बधामानिस-
हस्रमुतवोरुहः । अधाशतक्रत्त्वोयूयमिमम्मेऽअगदङ्कृत ॥ ७६ ॥
ओषधीःप्प्रतिमोदद्ध्वम्पुष्पवतीःप्प्रसूवरीः । अश्वाऽइवसजित्त्वरी-
र्व्वीरुधःपारयिष्ण्वः ॥ ७७ ॥ ओषधीरितिमातरस्तद्वोदेवीरुप-
ब्रुवे । सनेयमश्श्वङ्गांव्वासऽआत्मानन्तवपूरुष ॥ ७८ ॥ अश्श्वत्थे

१. 'अश्श्वात्स्थेतकारठं०सञ्ज्ञायाम्'।४।९९।अश्वशब्दादुत्तरःसकारःतकारमापद्यते संज्ञायां स्थे प्रत्यये इति। अश्श्वः—अशनव्यापारोऽग्निरस्मिंस्तिष्ठतीत्यश्श्वत्थो वृक्षः।

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

वोनिषदनम्पर्णेवोवसतिष्कृता । गोभाजऽइत्किलासथयत्सनवथपूरु-
षम् ॥ ७९ ॥ यत्रौषधीःसमग्मतराजानःसमिताविव । विप्रःसऽ-
उच्च्यतेभिषग्रक्षोहामीवचातनः ॥ ८० ॥ अश्वावतीᳪसोमावतीमु-
र्जयन्तीमुदोजसम् । आवित्सिसर्व्वाऽओषधीरस्माऽअरिष्टतातये
॥८१॥ उच्छुष्मा ऽओषधीनाङ्गावोगोष्ठादिवेरते । धनᳪसनिष्यन्तीना-
मात्मानन्तवपुरुष ॥८२॥ इष्कृतिर्नामवोमाताथोयूयᳪस्थनिष्कृतीः ।
सीराःपतत्रिणीस्थनयदामयतिनिष्कृथ ॥८३॥ अतिविश्वाःपरिष्ठा-
स्तेनऽइवव्व्रजमक्रमुः। ओषधीःप्राचुच्यवुर्यत्किञ्चतन्वोरपः ॥८४॥
यदिमावाजयन्नहमोषधीर्हस्तऽआदधे । आत्मायक्ष्मस्यनश्यतिपुरा-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

जीवगृभोषथा ॥८५॥ षस्यौषधीःप्रसर्प्पथाङ्गमङ्गम्परुष्परुः । ततोष
क्ष्मंव्विबाधद्ध्वऽउग्ग्रोमद्ध्यमशीरिव ॥ ८६ ॥ साकंष्षक्ष्मप्रपंतचाषे-
णकिकिदीविना । साकंव्वातस्यद्ध्राज्ज्यासाकन्नश्यनिहाकया ॥ ८७ ॥
अन्न्यावोऽअन्न्यामवत्त्वन्न्यान्न्यस्याऽउपावत । ताःसर्व्वाः संव्वि-
दानाऽइदम्मेप्प्रावताव्वचः ॥ ८८ ॥ षाःफलिनीर्षाऽअफलाऽअ-
पुष्पाषाश्चपुष्प्पिणीः । बृहस्प्पतिप्प्रसूतास्तानोमुञ्चन्त्वꣳहसः
॥ ८९ ॥ मुञ्चन्तुमाशपत्थ्यादथोव्वरुण्यादुत । अथोषमस्यपड्वीशात्स-
र्व्वस्म्माद्देवकिल्बिषात् ॥ ९० ॥ अवपतन्तीरवदन्दिवऽओषधयस्प्प-
रि । षञ्जीवमश्नवामहैनसरिष्ष्यातिपूरुषः ॥ ९१ ॥ षाऽओषधीःसो-

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

मराज्ञोर्बह्वीःशतविचक्षणाः । तासामसित्वमुत्तमारङ्कामायशꣳहृदे
॥ ९२ ॥ याऽओषधीःसोमराज्ञीर्व्विष्ठिताःपृथिवीमनु । बृहस्पति-
प्रसूताऽअस्यैसन्दत्तवीर्य्यम् ॥ ९३ ॥ याश्चेदमुपशृण्वन्तियाश्च-
दूरम्परागताः । सर्व्वाःसङ्गत्यवीरुधोस्यैसन्दत्तवीर्य्यम् ॥ ९४ ॥
मावोरिषत्खनितायस्मैचाहङ्खनामिवः ॥ द्विपाच्चतुष्पादस्माकꣳ
सर्व्वमस्त्वनातुरम् ॥ ९५ ॥ ओषधयःसमवदन्तसोमेनसहराज्ञा ।
यस्मैकृणोतिब्राह्मणस्तꣳराजन्पारयामसि ॥ ९६ ॥ नाशयित्रीब-
लासस्यार्शसऽउपचितामसि । अथोशतस्ययक्ष्माणाम्पाकारोरसिना-
शनी ॥ ९७ ॥ त्वाङ्गन्धर्व्वाऽअखनँस्त्वामिन्द्रस्त्वाम्बृहस्पतिः । त्वा-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

मोषधेसोमोराजाव्विद्वान्न्यक्ष्मादमुच्च्यत ॥ ९८ ॥ सहस्वमेऽअरा-
तोःसहस्वपृतनायतः । सहस्वसर्व्वैपाप्मानꣳसहमानास्योषधे
॥ ९९ ॥ दुर्ग्घायुस्तऽओषधेखनितायस्मैचत्त्वाखनाम्म्यहम् । अथो-
त्वन्दीर्ग्घायुर्भूत्वाशतवल्शाव्विरोहतात् ॥ १०० ॥ त्वमुत्तमा-
स्योषधेतवव्वृक्षाऽउपस्तयः । उपस्तिरस्तुसोस्माकंय्योऽअस्माँ२ऽ
अभिदासति ॥ १०१ ॥ मामाहिꣳसीज्जनितायःपृथिव्यायोवादिवꣳ
सत्यधर्म्माव्यानट् । यश्श्चापश्श्चन्द्राःप्प्रथमोजजानकस्मैदेवायहविषाविधेम ॥ १०२ ॥ अब्भ्यावर्त्तस्वपृथिवियज्ञेनपयसासह । व्वपा-
न्तेऽअग्निरिषितोऽअरोहत् ॥ १०३ ॥ अग्नेयत्तेशुक्रंय्यच्चन्द्रंय्य-

CC-0, Panini Kanya Maha Vidyalaya Collection

Digitized By Siddhanta eGangotri Gyaan Kosha

त्पूतंब्बच्चंय॒ज्ञियंम् । तद्देवेब्भ्योभरामसि ॥ १०४ ॥ इषमूर्ज्जमहमित-
ऽआदंमृतस्ययोनिम्महिषस्यधाराम् । आमागोषुंविशत्त्वातनूषुजहा-
मिसेदिमनिरामममीवाम् ॥ १०५ ॥ अग्नेतवश्रवोवयोमहिंब्भ्राजन्ते-
ऽअर्च्चयोविभावसो । बृहंद्भानोशवंसाव्वाजमुक्क्थ्युन्दधासिदा-
शुषेकवे ॥१०६॥ पावकवंर्चाःशुक्रवंर्चाऽअनूनवर्चाऽउदियर्षिभानु-
ना । पुत्रोमातराव्विचरन्नुपावसिपृणक्षिरोदसीऽउभे ॥१०७॥ ऊर्ज्जो-
नपाज्जातवेदःसुशस्तिभिर्म्मन्दस्वधीतिभिर्हितः । त्वेऽइषःसन्दंधु-
र्भूरिवर्पसश्चित्रोतयोव्वामजाताः ॥ १०८ ॥ इरज्ज्यन्नग्नेप्प्रथय-
स्वजन्तुभिरस्मेरायोऽअमर्त्य । सदर्शतस्यव्वपुषोव्विराजसिपृण-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha
क्षिसानसिङ्क्तुम् ॥१०९॥ इष्कर्त्तारमद्ध्वरस्यप्प्रचेतसङ्क्षयन्त६ँरा-
धसोमहः । रातिंव्वामस्यसुभगाम्महीमिषन्दधासिसानसि६ँरयिम्
॥ ११० ॥ ऋतावानम्महिषंव्विश्श्वदर्शतमग्निर्ठ सुम्म्नायदधिरेपुरोज-
नः । श्रुत्कर्ण६ँसप्प्रथस्तमन्त्वागिरादैव्यम्मानुषायुगा ॥ १११ ॥
आप्प्यायस्वसमेतुतेव्विश्श्वतः सोमव्वृष्ण्यम् । भवाव्वाजस्यसङ्गथे
॥ ११२ ॥ सन्तेपया६ँसिसमुयन्तुव्वाजाः संव्वृष्ण्यान्न्यभिमातिषा-
हः । आप्प्यायमानोऽअमृतायसोमदिविश्श्रवा६ँस्युत्तमानिधिष्व
॥ ११३ ॥ आप्प्यायस्वमदिन्तमसोमव्विश्श्वेभिर६ँशुभिः । भवानः
सप्प्रथस्तमः सखाव्वृधे ॥ ११४ ॥ आतेव्वत्सोमनोयमत्परमाच्चित्स
CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By SIddhanta eGangotri Gyaan Kosha


धस्त्थात् । अग्ग्नेत्त्वाङ्कामयागिरा ॥ ११५ ॥ तुब्भ्यन्ताऽअंङ्गिरस्तम-
व्विश्श्वाः सुक्षितयः पृथंक् । अग्ग्नेकामाययेमिरे ॥ ११६ ॥ अग्निः
प्प्रियेषुधामंसुकामोभूतस्यभव्व्यंस्यसम्म्राडेकोव्विराजति ॥ ११७ ॥
इति संहितायां द्वादशोऽध्यायः ॥

## ❀ अथ त्रयोदशोऽध्यायः ❀

ॐ मयिंगृह्णाम्म्यग्ग्रेऽअग्निꣳरायस्प्पोषांयसुप्प्रजास्त्वायंसुवी-
र्य्यांय । मामुंदेवताऽसचन्ताम् ॥ १ ॥ अपाम्पृष्ठमसिय़ोनिरग्ग्नेः सं-
मुद्द्रमभितऽपिन्न्वमानम् । वर्द्धमानोमहाꣳऽआचपुष्क्करेदिवोमात्र-

CC-0, Panini Kanya Maha Vidyalaya Collection

Digitized By Siddhanta eGangotri Gyaan Kosha

याद्यरिम्म्णापप्रथस्व ॥ २ ॥ ब्रह्म्मंयज्ञानम्प्रथमम्पुरस्ताद्विसीमतः
सुरुचोव्वेनऽआवः । सबुध्न्याऽउपमाऽअस्यविष्ठाःसतश्चयोनिम
सतश्चविवः ॥ ३ ॥ हिरण्यगर्भःसमवर्त्तताग्रेभूतस्यजातःपतिरे-
कऽआसीत् । सदाधारपृथिवीन्द्यामुतेमाङ्कस्मैदेवायहविषाविधे-
धेम ॥ ४ ॥ द्रप्सश्चस्कन्दपृथिवीमनुद्यामिमञ्चयोनिमनु
यश्चपूर्व्वः समानंय्योनिमनुसञ्चरन्तन्द्रप्सञ्जुहोम्यनुसप्तहोत्राः
॥५॥ नमोस्तुसर्प्पेभ्योयेकेचपृथिवीमनु । येऽअन्तरिक्षेयेदिवितेभ्यः
सर्प्पेभ्योनमः ॥ ६ ॥ याऽइषवोयातुधानानांय्येवावनस्पतीँ१
रनु । येवावटेषुशेरतेतेभ्यःसर्प्पेभ्योनमः ॥ ७ ॥ येवामीरोचने-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

दि॒वोये॑वा॒सूर्य॑स्यर॒श्मिषु॑ । येषाम॒प्सुसद॑स्कृतन्तेभ्यः॑ स॒र्प्पेभ्यो॒न-
मः॑ ॥ ८ ॥ कृ॒णु॒ष्वपाज॒ःप्रसि॑ति॒न्नपृ॒थ्वीय्या॒हिरा॒जेवाम॑वाँ२ऽइ-
भेन । तृ॒ष्वीमनु॒प्रसि॑तिन्द्रू॒णानोस्ता॑सि॒विद्ध्य॑र॒क्षस॒स्तपि॑ष्ठैः ॥ ९ ॥
तव॑भ्र॒मास॑ऽआशु॒याप॑त॒न्त्यनु॑स्पृशधृ॒षताशोशु॑चानः । तपू॑ᳪष्यग्ने॒जु-
ह्वापतङ्गानस॑न्दितो॒विसृ॑ज॒विष्व॑गु॒ल्काः ॥ १० ॥ प्रति॒स्पशो॒विसृ॑ज-
तूर्णि॑तमो॒भवा॑पा॒युर्वि॒शोऽअ॒स्याऽअद॑ब्धः । योनो॑दू॒रेऽअ॒घश॑ᳪसो॒यो-
ऽअ॒न्त्यग्ने॒माकि॑ष्टे॒व्यथि॒राद॑धर्षीत् ॥ ११ ॥ उद॑ग्ने॒तिष्ठ॒प्रत्यात॑नु-
ष्व॒न्न्यु॒मित्राँ॑२ऽओषतात्तिग्महेते । योनो॒ऽअरा॑तिᳪसमिधानच॒क्रे-
नीचातन्धक्ष्यतस॒न्नशुष्क॑म् ॥१२॥ ऊ॒र्ध्वोभ॑व॒प्रति॑विद्ध्याद्ध्य॒स्म-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

द्राविष्कृणुष्व दैव्यान्यग्ने । अवस्थिरा तनुहि यातुजूनाञ्जामिमजा-
मिम्प्रमृणीहि शत्रून् । अग्नेष्ट्वा तेजसा सादयामि ॥ १३ ॥ अग्निर्मूर्द्धा-
दिवः ककुत्पतिः पृथिव्याऽअयम् । अपाᳬं रेताᳬंसि जिन्वति ।
इन्द्रस्य त्वौजसा सादयामि ॥ १४ ॥ भुवो यज्ञस्य रजसश्च नेता यत्रा नि-
युद्भिः सचसे शिवाभिः । दिवि मूर्द्धानन्दधिषे स्वर्षाञ्जिह्वामग्ने-
चकृषे हव्यवाहम् ॥ १५ ॥ ध्रुवासि धरुणास्तृता विश्वकर्म्मणा । मा-
त्वा समुद्रऽउद्वधीन्मा सुपर्णो व्यथमाना पृथिवीन्दृᳬंह ॥ १६ ॥
प्रजापतिष्ट्वा सादयत्वपाम्पृष्ठे समुद्रस्येमन् । व्यचस्वतीम्प्रथस्वतीम्प्र-
थस्व पृथिव्यसि ॥ १७ ॥ भूरसि भूमिरस्यदितिरसि विश्वधाया वि-

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha
श्श्वंस्यभुवंनस्यधर्त्री । पृथिवीँय्यंच्छपृथिवीन्दृᳲहपृथिवीम्माहिᳲसीः
॥ १८ ॥ विश्श्वंस्मैप्प्राणायापानायंव्व्यानायोदानायंप्प्रतिष्ठायैचरि-
त्त्राय । अग्निष्ट्वाभिपातुमह्यास्वस्त्याच्छर्द्दिषाशन्तमेनतयादेवतंयाङ्गि-
रस्वद्ध्रुवासीद ॥१९॥ काण्डात्काण्डात्प्ररोहन्तीपरुषᳲपरुषस्प्परि ।
एवानोदूर्व्वेप्प्रतंनुसहस्रेणशतेनंच ॥ २० ॥ याशतेनंप्प्रतनोषिंसहस्रे-
णव्विरोहंसि । तस्यास्तेदेवीष्टकेव्विधेमंहविषांव्वयम् ॥२१॥ यास्तेऽ-
अग्नेसूर्य्येरुचोदिवंमातन्वन्तिरश्मिभिः । ताभिर्न्नोऽअद्यसर्व्वा-
भीरुचेजनांयनस्कृधि ॥ २२ ॥ यावोंदेवाःसूर्य्येरुचोगोष्ष्वश्श्वेषुया-
रुचंः । इन्द्राग्ग्नीताभिᳲसर्व्वाभीरुचंन्नोधत्तबृहस्पते ॥ २३ ॥ व्विरा-
CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

इ॒ज्योति॑रधारय॒त्स्व॒राड्ज्योति॑रधारयत् । प्र॒जाप॑तिष्ट्वासादयतु पृ॒ष्ठे पृ॑थि॒व्या ज्योति॑ष्मतीम् । विश्व॑स्मै प्रा॒णाया॑पा॒नाय॑ व्या॒नाय॒ विश्वं॒ ज्योति॑र्यच्छ । अ॒ग्निष्टेऽधि॑पति॒स्तया॑ दे॒वत॑याङ्गिर॒स्वद् ध्रु॒वा सी॑द ॥ २४ ॥ मधु॑श्च॒ माध॑वश्च॒ वास॑न्तिकावृ॒तूऽअ॒ग्नेर॑न्तःश्ले॒षो॒ऽसि॒ कल्पे॑तां॒ द्यावा॑पृथि॒वी कल्प॑न्ता॒माप॒ऽओष॑धयः॒ कल्प॑न्ताम॒ग्नयः॒ पृथ॒ङ्मम॒ ज्यैष्ठ्या॑य॒ सव्र॑ताः । ये॒ऽअ॒ग्नयः॒ सम॑नसोऽन्त॒रा द्यावा॑पृथि॒वीऽइ॒मे । वास॑न्तिकावृ॒तूऽअ॑भि॒कल्प॑माना॒ऽइन्द्र॑मिव दे॒वाऽअ॑भि॒संवि॑श॒न्तु तया॑ दे॒वत॑याङ्गिर॒स्वद् ध्रु॒वे सी॑दतम् ॥ २५ ॥ अषा॑ढासि॒ सह॑माना॒ सह॒स्वारा॑तीः॒ सह॑स्व पृतनाय॒तः । स॒हस्र॑वीर्यासि॒ सा मा॑ जिन्व ॥ २६ ॥

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

मधुव्वाताऽऋतायतेमधुक्षरन्तिसिन्धवः । माद्ध्वीर्न्नःसन्त्वोष-
धीः ॥ २७ ॥ मधुनक्तमुतोषसोमधुमत्पार्थिवँरजः । मधुद्यौर-
स्तुनःपिता ॥ २८ ॥ मधुमान्नोव्वनस्पतिर्म्मधुमाँ२ अस्तुसूर्य्यः ।
माद्ध्वीर्गावोभवन्तुनः ॥ २९ ॥ अपाङ्गम्भन्त्सीदमात्त्वासूर्य्योभिताप्सी-
न्माग्निर्व्वैश्वानरः । अच्छिन्नपत्राःप्रजाऽअनुवीक्षस्वानुत्त्वादि-
व्व्यावृष्टिः सचताम् ॥ ३० ॥ त्रीन्त्समुद्रान्त्समसृपत्स्वर्गानपा-
म्पतिर्वृषभऽइष्टकानाम् । पुरीषंव्वसानःसुकृतस्यलोकेतत्रगच्छयत्र-
पूर्वेपरेताः ॥ ३१ ॥ महीद्यौःपृथिवीचनऽइमंयज्ञम्मिमिक्षताम् ।
पिपृतान्नोभरीमभिः ॥ ३२ ॥ व्विष्णोःकर्म्माणिपश्यतयतोव्व्रतानि

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

पस्पशे । इन्द्रस्ययुज्ज्यःसखा ॥ ३३ ॥ ध्रुवासिधरुणेतोजज्ञेप्रथममे
भ्योयोनिभ्योऽअधिजातवेदाः । सगायत्र्यात्रिष्टुभानुष्टुभाचदेवे
भ्योहव्यंवहतुप्रजानन् ॥ ३४ ॥ इषेरायेरमस्वसहसेद्युम्नऽऊर्जेऽ-
अपत्याय । सम्राडसिस्वराडसिसारस्वतौत्वोत्सौप्रावताम् ॥ ३५ ॥
अग्नेयुक्ष्वाहियेतवाश्वासोदेवसाधवः । अरंवहन्तिमन्यवे ॥ ३६ ॥
युक्ष्वाहिदेवहूतमाँ२ऽअश्वाँ२ऽअग्नेरथीरिव । निहोतापूर्व्यःसद
॥ ३७ ॥ सम्यक्स्रवन्तिसरितोनधेनाऽअन्तर्हृदामनसापूयमानाः ।

---

१.–'असस्थानेमुदिं द्वितीयठं० शौनकस्य' (४।१२०) शौनकाचार्यमते असमान
स्थाने मुरसंज्ञके CC-0, Panini Kanya Maha Vidyalaya Collection भवन्ति । सम्यखस्रव-

Digitized By Siddhanta eGangotri Gyaan Kosha

घृतस्य धाराऽअभिचाकशीमि हिरण्ययो वेतसो मध्यऽअग्नेः ॥३८॥
ऋचे त्वा रुचे त्वा भासे त्वा ज्योतिषे त्वा । अभूदिदं विश्वस्य भुवनस्य
वाजिनमग्नेर्वैश्वानरस्य च ॥ ३९ ॥ अग्निर्ज्योतिषा ज्योतिष्मा-
न्रुक्मो वर्चसा वर्चस्वान् । सहस्रदाऽअसि सहस्राय त्वा ॥ ४० ॥
आदित्यं गर्भं पयसा समङ्ग्धि सहस्रस्य प्रतिमां विश्वरूपम् । परि-
वृङ्ग्धि हरसा माभि मंस्थाः शतायुषं कृणुहि चीयमानः ॥ ४१ ॥ वा-
तस्य जूतिं वरुणस्य नाभिमश्वं जज्ञानं सरिरस्य मध्ये । शिशुं नदीनां

---

न्ति । एवमनुष्टुप्शारदी अनुष्टुफशारदी (१३।५७) इत्यादि । केचिदत्र तृतीय-
'मवसानेचे'त्येतत्सूत्रं पठन्ति सोऽपपाठः ।

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

हरिमद्द्रिबुध्नमग्ग्नेमाहिꣳसीःपरमेव्व्योमन् ॥ ४२ ॥ अजस्रमिन्दु-
मरुषम्भुरण्युमग्ग्निमीडेपूर्व्वचित्तिन्नमोभिः । सपर्व्वभिर्ऋतुशःकल्प-
मानोगाम्माहिꣳसीरदितिंव्विराजम् ॥ ४३ ॥ वरूत्रीन्त्वष्टुर्व्वरुण-
स्यनाभिमविञ्जज्ञानाꣳरजसःपरस्मात् । महीꣳसाहस्रीमसुरस्य
मायामग्ग्नेमाहिꣳसीःपरमेव्व्योमन् ॥ ४४ ॥ योऽअग्ग्निरग्ग्नेरद्ध्य-
जायतशोकात्पृथिव्व्याऽउतवादिवस्परि । येनप्रजाव्विश्श्वकर्म्माज-
जानतमग्ग्नेहेडःपरितेव्वृणक्तु ॥ ४५ ॥ चित्रन्देवानामुदगादनीकञ्च-
क्षुर्म्मित्रस्यव्वरुणस्याग्ग्नेः । आप्प्राद्यावापृथिवीऽअन्तरिक्षꣳसू-
र्य्यऽआत्माजगतस्तस्थुषश्च ॥ ४६ ॥ इमम्माहिꣳसीर्द्विपादम्पशुꣳ

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

सहस्राक्षोमेधायचीयमानः । मयुम्पशुम्मेधमग्ग्नेजुषस्वतेनचिन्वान-
स्तन्न्वोनिषीद । मयुन्तेशुगृच्छतुयन्द्विष्ष्मस्तन्तेशुगृच्छतु ॥४७॥ इम-
म्माहिᳮसीरेकशफम्पशुङ्कनिक्क्रदंव्वाजिनंव्वाजिनेषु । गौरमारण्ण्य-
मनुतेदिशामितेनचिन्न्वानस्तन्न्वोनिषीद । गौरन्तेशुगृच्छतुयन्द्विष्ष्म-
स्तन्तेशुगृच्छतु ॥४८॥ इमᳮसाहस्रᳮशतधारमुत्त्संव्व्यच्यमानᳮसरिर-
स्यमध्ध्ये । घृतन्दुहानामदितिञ्जनायाग्ग्नेमाहिᳮसीःपरमेव्व्योमन् ॥
गवयमारण्ण्यमनुतेदिशामितेनचिन्न्वानस्तन्न्वोनिषीद । गवयन्तेशु-
गृच्छतुयन्द्विष्ष्मस्तन्तेशुगृच्छतु ॥ ४९ ॥ इममूर्णायुंव्वरुणस्यनाभि-
न्त्वचम्पशूनान्द्विपदाञ्चतुष्ष्पदाम् । त्वष्टुः प्रजानाम्प्रथमञ्जनित्रम-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

ग्नेमाहिꣳसीः परमेव्योमन् । उष्ट्रमारण्यमनु ते दिशामि तेन चिन्वा-
नस्तन्वो निषीद । उष्ट्रं ते शुगृच्छतु यन्द्विष्मस्तन्ते शुगृच्छतु ॥ ५० ॥
अजो ह्यग्नेरजनिष्ट शोकात्सो ऽअपश्यज्जनितारमग्ने । तेन देवा देवता-
मग्रमायँस्तेन रोहमायन्नुप मेध्यासः । शरभमारण्यमनु ते दिशामि
तेन चिन्वानस्तन्वो निषीद । शरभन्ते शुगृच्छतु यन्द्विष्मस्तन्ते शुगृ-

---

१. 'स्वरात्स्वरे समानपदे जोयश्च तु ऋकारे' ( शु. प्रा. सू. १६४ ) वा शब्दो विकल्पार्थः, 'स्फोटनं च ककारवर्गौ वा स्पर्शात्' (१६३) इति पूर्वसूत्रात् इहानुवर्तते । स्वपरात्परो जकारो वा यकारमापद्यते स्वरे परभूते समानपदे न तु ऋकारे परे । यथा 'अजोह्यग्नेरजनिष्ट' 'अजोह्यग्नेरजनिष्ट' ।

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

च्छतु ॥ ५१ ॥ त्वंम्वंविष्णुदाशुयोनॄँ॒ःपाहिश्शृणुधीगिरं॑ । रक्षातोक-
मुतत्क्मना ॥ ५२ ॥ अपान्त्वेमन्त्सादयाम्म्यपान्त्वोद्मन्त्सादया-
म्म्यपान्त्वाभस्स्मन्त्सादयाम्म्यपान्त्वाज्ज्योतिषिसादयाम्म्यपान्त्वाय-
नेसादयाम्म्यर्ण्णवेत्त्वासदनेसादयामिसमुद्रेत्त्वासदनेसादयामिसरि-
रेत्त्वासदनेसादयाम्म्यपान्त्वाक्षयेसादयाम्म्यपान्त्वासधिषिसादया-
म्म्यपान्त्वासदनेसादयाम्म्यपान्त्वासधस्त्थेसादयाम्म्यपान्त्वायोनौ-
सादयाम्म्यपान्त्वापुरीषेसादयाम्म्यपान्त्वापाथसिसादयामिगायत्रेण
त्वाच्छन्दसासादयामित्रैष्टुभेनत्त्वाच्छन्दसासादयामिजागतेनत्त्वाच्छ-
न्दसासादयाम्म्यानुष्टुभेनत्त्वाच्छन्दसासादयामिपाङ्क्तेनत्त्वाच्छन्द-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

त्वासादयामि ॥ ५३ ॥ अयम्पुरोभुवस्तस्यप्प्राणोभौवायनोव्वसन्तः
प्प्राणायनोगायत्त्रीव्वासन्तीगायत्त्र्यैगायत्त्रङ्गायत्त्रादुपा९ᳪशुरुपा९ᳪ-
शोस्त्रिवृत्त्रिवृतोरथन्तरंव्वसिष्ठ्ऽऋषिः प्प्रजापतिगृहीतयात्त्वयाप्प्रा-
णङ्गृह्णामिप्प्रजाब्भ्यः ॥ ५४ ॥ अयन्दक्षिणाव्विश्श्वकर्म्मातस्यम-
नोव्वैश्श्वकर्म्मणङ्ग्रीष्म्मोमानसस्त्रिष्टुब्ग्रैष्ष्मीत्त्रिष्टुभः स्वारᳪस्वारा-
दन्तर्य्यामोन्तर्य्यामात्पञ्चदशः पञ्चदशाद्बृहद्भरद्वाजऽऋषिः प्प्र-
जापतिगृहीतयात्त्वयामनोगृह्णामिप्प्रजाब्भ्यः ॥ ५५ ॥ अयम्पश्चाद्विि-
श्श्वव्यचास्तस्यचक्षुर्व्वैश्श्वव्यचसंव्वर्षाश्च्चाक्षुष्ष्योजगतीव्वार्षीज-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

गत्या ऽ ऋक्सममृक्समाच्छुक्रः शुक्रात्सप्तदशः सप्तदशाद्वैरू-
पञ्जमदग्निर्ऋषिः प्रजापतिगृहीतया त्वया चक्षुर्गृह्णामि प्रजाभ्यः
॥ ५६ ॥ इदमुत्तरात्स्वस्तस्य श्रोत्रंꣳ सौवꣳ शरच्छ्रौत्र्यनुष्टुप्शारद्य-
नुष्टुभ ऽ ऐडमैडान्मन्थी मन्थिन ऽ एकविꣳश ऽ एकविꣳशाद्वैराजं वि-
श्वामित्र ऋषिः प्रजापतिगृहीतया त्वया श्रोत्रं गृह्णामि प्रजाभ्यः
॥ ५७ ॥ इयमुपरि मतिस्तस्यै वाङ्मात्या हेमन्तो वाच्यः पङ्क्ति-
र्हैमन्ती पङ्क्त्यै निधनवन्निधनवत ऽ आग्रयण ऽ आग्रयणात्त्रिणवत्रय-
स्त्रिꣳशौ त्रिणवत्रयस्त्रिꣳशाभ्याꣳ शाक्वररैवते विश्वकर्म्म ऽ-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

ऋषि॑÷ प्र॒जाप॑तिगृहीतया॒त्त्वया॒ऽव्वाचं॑ङ्गृह्णामि॒प्रजा॒भ्यो॒लो॒कन्ताऽइन्द्रं॑म्
॥ ५८ ॥ इति संहितायां त्रयोदशोऽध्यायः ॥

# ❀ अथ चतुर्दशोऽध्यायः ❀

ॐ ध्रु॒वक्षि॑तिर्द्ध्रु॒वयो॑निर्द्ध्रु॒वासि॑द्ध्रु॒वंय्योनि॑मासी॒दसाधु॒या ।
उख्य॑स्यके॒तुम्प्र॑थ॒मञ्जु॒षा॒णाऽश्विना॑ध्वर्यूसा॑दयता॒मि॒हत्वा॑ ॥ १ ॥
कु॒ला॒यिनी॑घृ॒तव॑ती॒पुर॑न्धि॒ᳬस्यो॒नेसी॑द॒सद॑नेपृथि॒व्या॒ऽ । अ॒भित्वा॑रु॒द्-

१. लोकम्पृण० ताऽअस्य; इन्द्रं विश्वा० (अ० १२ म० ५४-५६) प्रतीकोक्ता मन्त्राः पठनीयाः ।

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

द्राव्वसवोगृणन्त्विमाब्ब्रह्मपीपिहिसौभगायाश्श्विनाद्ध्वर्य्यूसाद-
यतामिहत्त्वा ॥ २ ॥ स्वैर्द्दक्षैर्द्दक्षपितेहसीदद्देवानाꣳ सुम्म्नेबृहतेर-
णाय । पितेवैधिसूनवऽआसुशेवास्स्वावेशातन्न्वासंव्विशस्वाश्श्विना-
द्ध्वर्य्यूसादयतामिहत्त्वा ॥ ३ ॥ पृथिव्व्याःपुरीषमस्यप्प्सोनामतान्त्वा-
व्विश्श्वेऽअभिगृणन्तुदेवाः । स्तोमपृष्ठाघृतवतीहसीदप्प्रजावदस्म्मे-
द्द्रविणायजस्वाश्श्विनाद्ध्वर्य्यूसादयतामिहत्त्वा ॥ ४ ॥ आदित्यास्त्वा-
पृष्ठेसादयाम्म्यन्तरिक्षस्यधर्त्त्रीव्विष्टम्भनीन्दिशामधिपत्न्नीम्भुवना-
नाम् । ऊर्म्मिर्द्रप्प्सोऽअपामसिव्विश्श्वकर्म्मातऽऋषिरश्श्विनाद्ध्व-
र्य्यूसादयतामिहत्त्वा ॥ ५ ॥ शुक्रश्श्चशुचिश्श्चग्ग्रैष्म्मावृतूऽअग्ग्ने-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

रन्तᳪश्लेषोसिकल्पन्तान्द्यावापृथिवीकल्पन्तामापऽओषधयᳪकल्प-
न्तामग्नयᳪपृथङ्ममज्ज्यैष्ठ्यायसव्व्रताᳪ। येऽअग्नयᳪसमनसोन्तरा-
द्यावापृथिवीऽइमे। ग्रैष्मावृतूऽअभिकल्पमानाऽइन्द्रमिवदेवाऽअभि-
संव्विशन्तुतयादेवतयाङ्गिरस्वद्ध्रुवेसीदतम् ॥ ६ ॥ सजूर्ऋतुभिᳪ
सजूर्व्विधाभिᳪ सजूर्देवैᳪसजूर्देवैर्व्वयोनाधैरग्नयेत्वावैश्वानराया-
श्विनाध्ध्वर्य्यूसादयतामिहत्वासजूर्ऋतुभिᳪ सजूर्व्विधाभिᳪसजूर्व्व-
सुभिᳪसजूर्देवैर्व्वयोनाधैरग्नयेत्वाव्वैश्वानरायाश्विनाध्ध्वर्य्यूसाद-
यतामिहत्वासजूर्ऋतुभिᳪसजूर्व्विधाभिᳪसजूरुद्रैᳪसजूर्देवैर्व्वयोना-
धैरग्नयेत्वाव्वैश्वानरायाश्विनाध्ध्वर्य्यूसादयतामिहत्वासजूर्ऋतु-

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

भिं ÷ सजूर्व्विधाभिं ÷ सजूरादित्यैः सजूर्द्देवैर्व्वयोनाधैरग्नयेत्त्वा व्वै-
श्श्वानरायाश्श्विनाद्ध्वर्य्यू सादयतामिहत्वा सजूर्ऋतुभिं ÷ सजूर्व्विधा
भिं÷सजूर्व्विश्श्वैर्द्देवैः सजूर्द्देवैर्व्वयोनाधैरग्नयेत्त्वा व्वैश्श्वानरायश्श्वि-
नाद्ध्वर्य्यू सादयतामिहत्वा ॥ ७ ॥ प्प्राणम्मे पाह्यपानम्मे पाहि व्व्या-
नम्मे पाहि चक्षुर्म्म ऽउर्व्व्या विभाहि श्श्रोत्रम्मे श्श्लोकय । अपः पिन्न्वौष-
धीर्ज्जिन्न्व द्विपादव चतुष्प्पात्पाहि दिवो व्वृष्टिमेरय ॥ ८ ॥ मूर्द्धा व्व-
यं ÷ प्प्रजापतिश्छन्दं ÷ क्षत्त्रं व्वयो मयन्दं छन्दो व्विष्टम्भो व्वयोधिप-
तिश्छन्दो व्विश्श्वकर्म्मा व्वयं ÷ परमेष्ट्ठी छन्दो बस्तो व्वयो व्विवलं छन्दो
व्वृष्णिर्व्वयो व्विशालं छन्दः पुरुषो व्वयस्तन्द्रं छन्दो व्व्याग्घ्रो व्वयोना-

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

धृष्टूट्ट्छन्दं÷सिᳬहोव्वयश्छदिश्छन्दं÷पष्ठ्वाड्वयोबृहतीच्छन्दंऽउ-
क्षाव्वयं÷ककुप्छन्दंऽऋषभोव्वयं÷सतोबृहतीच्छन्दं÷ ॥ ९ ॥ अ-
नड्वान्व्वयं ÷ पङ्क्तिश्छन्दोधेनुर्व्वयोजगतीच्छन्दस्त्र्यविर्व्वयस्त्रिष्टुप्छ-
न्दोदित्यवाड्वयोव्विराट्छन्दᳬपञ्चाविर्व्वयोगायत्रीच्छन्दस्त्रिवत्सोव्व-
यंऽउष्णिकच्छन्दस्तुर्य्यवाड्वयोनुष्टुप्छन्दोलोकन्ताऽइन्द्रम्[1] ॥१०॥
इन्द्राग्नीऽअव्व्यथमानामिष्टकान्दᳬहतंयुवम् । पृष्ठेनद्यावापृथि-
वीऽअन्तरिक्षञ्चविबाधसे ॥ ११ ॥ व्विश्वकर्म्मात्वासादयत्वन्तरि-
क्षस्यपृष्ठेव्यचस्वतीम्प्रथस्वतीमन्तरिक्षंयच्छान्तरिक्षन्दᳬहान्तरि-

१. अ० १२ मं. ५४—५६, इत्यत्रापि पठनीयाः ।

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

क्षम्माद्दिंधसीद । विश्श्वंस्स्मै प्प्राणायापानायंव्व्यानायोदानायंप्प्रतिष्ठायैचरित्त्राय । व्वायुष्ट्वाभिपातुमह्यास्वस्त्याच्छर्दिषाशन्तमेनतयादेवतयाङ्गिरस्वद्ध्रुवासीद ॥ १२ ॥ [शतम् ७००] राज्यंसिप्प्राचीदिग्विराडसिदक्षिणादिक्सम्म्राडसिप्प्रतीचीदिक्स्वराडस्युदीचीदिगधिपत्न्यसिबृहतीदिक् ॥ १३ ॥ व्विश्श्वकर्म्मात्त्वासादयत्वन्तरिक्षस्यपृष्ठेज्ज्योतिष्म्मतीम् । व्विश्श्वंस्स्मैप्प्राणायापानायंव्व्यानायव्विश्श्वञ्ज्योतिर्य्यच्छ । व्वायुष्टेधिपतिस्तयादेवतयाङ्गिरस्वद्ध्रुवासीद ॥ १४ ॥ नभंश्चनभस्यश्श्चवार्षिकावृतूऽअग्ग्नेरन्तःश्लेषोसिकल्प्पेतान्द्यावापृथिवीकल्प्पन्तामापऽओषधयःकल्प्पन्तामग्ग्नयःपृथक्म-

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha
मज्ज्यैष्ठ्यायसव्व्रताः । येऽअग्नयः समनसोन्तराद्द्यावापृथिवीऽइ-
मे । व्वार्षिकावृतूऽअभिकल्प्पमानाऽइन्द्रमिवदेवाऽअभिसंविशन्तु-
तयादेवतयाङ्गिरस्वद्ध्रुवेसीदतम् ॥ १५ ॥ इषश्श्चोर्जश्चशारदावृतूऽ-
अग्नेरन्तःश्लेषोसिकल्प्पेतान्द्यावापृथिवीऽकल्प्पन्तामापऽओषधयः-
कल्प्पन्तामग्नयःपृथङ्ममज्ज्यैष्ठ्यायसव्व्रताः । येऽअग्नयःसमनसो-
न्तराद्द्यावापृथिवीऽइमे । शारदावृतूऽअभिकल्प्पमानाऽइन्द्रमिवदे-
वाऽअभिसंविशन्तुतयादेवतयाङ्गिरस्वद्ध्रुवेसीदतम् ॥ १६ ॥ आयुर्म्मे
पाहिप्प्राणम्मेपाह्यपानम्मेपाहिव्यानम्मेपाहिचक्षुर्म्मेपाहिश्श्रोत्रम्मेपा-
हिव्वाचम्मेपिन्न्वमनोमेजिन्न्वात्त्मानम्मेपाहिज्ज्योतिर्म्मेयच्छ ॥ १७ ॥
CC-0, Panini Kanya Maha Vidyalaya Collection

Digitized By Siddhanta eGangotri Gyaan Kosha

माच्छन्दः प्रमाच्छन्दः प्रतिमाच्छन्दोऽअस्त्रीवयश्छन्दः पङ्क्तिश्छन्दऽ-
उष्णिक्छन्दो बृहतीच्छन्दोनुष्टुप्छन्दो विराट्छन्दो गायत्रीच्छन्दस्त्रि-
ष्टुप्छन्दो जगतीच्छन्दः ॥ १८ ॥ पृथिवीच्छन्दोन्तरिक्षञ्छन्दो द्यौ-
श्छन्दः समाश्छन्दो नक्षत्राणिच्छन्दो व्वाक्छन्दो मनश्छन्दः कृषिश्छ-
न्दो हिरण्यञ्छन्दो गौश्छन्दो जाच्छन्दोऽश्वश्छन्दः ॥ १९ ॥ अग्निर्देवता-
व्वातो देवता सूर्यो देवता चन्द्रमा देवता व्वसवो देवता रुद्रा देवतादि-
त्या देवता मरुतो देवता व्विश्वेदेवा देवता बृहस्पतिर्देवतेन्द्रो देवता व्व-
रुणो देवता ॥२०॥ मूर्द्धासि राड् ध्रुवासि धरुणा धर्त्र्यसि धरणी । आयुषे-
त्वा वर्चसे त्वा कृष्यै त्वा क्षेमाय त्वा ॥ २१ ॥ यन्त्री राड्यन्त्र्यसि यमनी-

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

ध्रुवासिधरित्री। इषेत्वोर्ज्जेत्वारय्यैत्वापोषायत्वालोकन्ताऽइन्द्रम्॥२२॥

आशुस्त्रिवृद्भान्तः पञ्चदशोव्योमासप्तदशोधरुणऽएकविꣳशः प्रतू-
र्त्तिरष्टादशस्तपोनवदशोभीवर्त्तः सविꣳशोवर्च्चोद्वाविꣳशः सम्भर-
णस्त्रयोविꣳशोयोनिश्चतुर्विꣳशोगर्ब्भाः पञ्चविꣳशऽओजस्त्रिणवः
क्क्रतुरेकत्रिꣳशः प्रतिष्ठात्रयस्त्रिꣳशोब्रध्नस्यविष्टपञ्चतुस्त्रिꣳ-
शोनाकः षट्त्रिꣳशोविवर्त्तोऽष्टाचत्वारिꣳशोधर्त्रञ्चतुष्टोमः ॥ २३ ॥

अग्नेर्भागोसिदीक्षायाऽआधिपत्यम्ब्रह्मस्पृतन्त्रिवृत्स्तोमऽइन्द्रस्यभा-
गोसिविष्णोराधिपत्यङ्क्षत्रꣳस्पृतम्पञ्चदशस्तोमोनृचक्षसाम्भागो-

१. अ० १२ म० ५४—५६ अत्रापि प्रतीकोक्ताः पठनीयाः।

CC-0, Panini Kanya Maha Vidyalaya Collection

Digitized By Siddhanta eGangotri Gyaan Kosha
सिधातुराधिपत्यञ्जनित्रꣳस्पृतꣳसप्तदशस्तोमो मित्रस्यभागोसिव्व-
रुणस्याधिपत्यन्दिवोवृष्टिर्व्वातस्पृतऽएकविꣳशस्तोमः ॥ २४ ॥
व्वसूनाम्भागोसिरुद्राणामाधिपत्यञ्चतुष्पात्स्पृतञ्चतुर्विꣳशस्तोमऽ-
आदित्यानाम्भागोसिमरुतामाधिपत्यङ्गर्भास्पृताः पञ्चविꣳशस्तोमो-
दित्यैभागोसिपूष्णऽआधिपत्यमोजस्पृतन्त्रिणवस्तोमोदेवस्यसवितु-
र्भागोसिबृहस्पतेराधिपत्यꣳसमीचीर्दिशस्पृताश्चतुष्टोमस्तोमः
॥ २५ ॥ यवानाम्भागोस्ययवानामाधिपत्यम्प्रजास्पृताश्चतुश्चत्वा-
रिꣳशस्तोमऽऋभूणाम्भागोसिव्विश्वेषान्देवानामाधिपत्यम्भूतꣳस्पृ-
तन्त्रयस्त्रिꣳशस्तोमः ॥ २६ ॥ सहश्चसहस्यश्चहैमन्तिकावृतूऽअ-
CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

ग्नेरन्तःश्लेषोसिकल्प्पेतान्द्यावापृथिवीकल्प्पन्तामापऽओषधयःकल्प्प-
न्तामग्नयःपृथङ्ममज्ज्यैष्ठ्यायसव्व्रताः । येऽअग्नयःसमनसोन्तरा-
द्यावापृथिवीऽइमे । हैमन्तिकावृतूऽअभिकल्प्पमानाऽइन्द्रमिवदेवाऽ-
अभिसंविशन्तुतयादेवतयाङ्गिरस्वद्ध्रुवेसीदतम् ॥ २७ ॥ एकयास्तु-
वतप्प्रजाऽअधीयन्तप्प्रजापतिरधिपतिरासीत्तिसृभिरस्तुवतब्ब्रह्मा-
सृज्ज्यतब्ब्रह्मणस्प्पतिरधिपतिरासीत्पञ्चभिरस्तुवतभूतान्न्यसृज्ज्य-
न्तभूतानाम्पतिरधिपतिरासीत्सप्तभिरस्तुवतसप्तऽऋषयोसृज्ज्यन्त-
धाताधिपतिरासीत् ॥ २८ ॥ नवभिरस्तुवतपितरोसृज्ज्यन्तादि-
तिरधिपत्न्यासीदेकादशभिरस्तुवतऽऋतवोसृज्ज्यन्तार्त्तवाऽअधि-

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

पतयऽआसँस्त्रयोदशभिरस्तुवतमासाऽअसृज्ज्यन्तसंव्वत्सरोधिपति -
रासीत्पञ्चदशभिरस्तुवतक्षत्त्रमसृज्ज्यतेन्द्रोधिपतिरासीत्सप्तदश-
भिरस्तुवतग्राम्म्याः पशवोसृज्ज्यन्तबृहस्पतिरधिपतिरासीत् ॥ २९ ॥
नवदशभिरस्तुवतशूद्द्राऽर्य्यावसृज्ज्येतामहोरात्त्रेऽअधिपत्क्नीऽआस्ता-
मेकविꣳशत्यास्तुवतैकशफाः पशवोसृज्ज्यन्तव्वरुणोधिपतिरासीत्त्र-
योविꣳशत्यास्तुवतक्षुद्द्राः पशवोसृज्ज्यन्तपूषाधिपतिरासीत्पञ्चविꣳ-
शत्यास्तुवतारण्याः पशवोसृज्ज्यन्तव्वायुरधिपतिरासीत्सप्तविꣳश-
त्यास्तुवतद्द्यावापृथिवीव्व्यैतांव्वसवोरुद्द्राऽआदित्याऽअनुव्यायँ -
स्तऽएवाधिपतयऽआसन् ॥ ३० ॥ नवविꣳशत्यास्तुवतव्वनस्पतयो-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

सृज्ज्यन्तसोमोधिपतिरासीदेकत्त्रिᳬशतास्तुवतप्प्रजाऽअंसृज्ज्यन्तव-
वाश्च्चायंवाश्च्चाधिपतयऽआसँस्त्रयंस्त्रिᳬशतास्तुवतभूतान्न्यंशाम्म्य-
न्न्प्रजापतिᳬपरमेष्ठ्यधिपतिरासील्लोकन्ताऽइन्द्रम् ॥ ३१ ॥ इति
चतुर्दशोऽध्यायः ।

## ❀ अथ पञ्चदशोऽध्यायः ❀

ॐ अग्ग्नेजातान्न्प्रणुदानᳬसपत्क्नान्न्प्रत्त्यजातान्नुदजातवेदᳬ ।
अधिनोब्ब्रूहिसुमनाऽअहेडँस्तवंस्यामशर्म्मँस्त्रिवरूथऽउद्भौ ॥ १ ॥

१. श्लोकपृण० ताऽअस्य० इन्द्रं विश्वा० ( अ० १२ मन्त्र ५४—५६ )
सति सम्भवे पठनीयाः ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

सहसाजातान्प्रणुदानः सपत्नान्प्रत्यजाताञ्जातवेदोनुदस्व । अधिनोब्रूहिसुमनस्यमानोव्वयꣳस्यामप्रणुदानः सपत्नान् ॥ २ ॥ षोडशीस्तोमऽओजोद्द्रविणञ्चतुश्चत्वारिꣳशस्तोमोव्वर्च्चोद्द्रविणम् । अग्नेःपुरीषमस्यप्सोनामतान्त्वाव्विश्वेऽअभिगृणन्तुदेवाः । स्तोमपृष्ठाघृतवतीहसीदप्रजावदस्म्मेद्द्रविणायजस्व ॥ ३ ॥ एवश्छन्दोव्वरिवश्छन्दः शम्भूश्छन्दः परिभूश्छन्दऽआच्छच्छन्दोमनश्छन्दोव्यचश्छन्दः सिन्धुश्छन्दः समुद्द्रश्छन्दः सरिरञ्छन्दः ककुप्छन्दस्त्रिककुप्छन्दः काव्यञ्छन्दोऽअङ्कुपञ्छन्दोक्षरपङ्क्तिश्छन्दः पदपङ्क्तिश्छन्दोव्विष्टारपङ्क्तिश्छन्दः क्षुरोभ्भ्रजश्छन्दः ॥ ४ ॥ आच्छच्छन्दः प्र-

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

च्छच्छन्दः÷संय्यच्छन्दोव्वियच्छन्दोबृहच्छन्दोरथन्तरञ्छन्दोनिकाय-
श्छन्दोव्विवधश्छन्दोगिरश्छन्दोभ्रजश्छन्दः÷सꣳस्तुप्छन्दोनुष्टुप्छ-
न्दऽएवश्छन्दोव्वरिवश्छन्दोव्वयश्छन्दोव्वयस्कृच्छन्दोव्विष्पर्द्धाश्छन्दो
व्विशालञ्छन्दश्छदिश्छन्दोदूरोहणञ्छन्दस्तन्द्रञ्छन्दोऽअङ्काङ्कश्छन्दः ÷
॥ ५ ॥ रश्मिनासत्यायसत्यञ्जिन्वप्रेतिनाधर्म्मणाधर्म्मञ्जिन्वान्वि-
त्यादिवादिवञ्जिन्वसन्धिनान्तरिक्षेणान्तरिक्षञ्जिन्वप्रतिधिनापृथि-
व्यापृथिवीञ्जिन्वविष्टम्भेनवृष्ट्यावृष्टिञ्जिन्वप्रवयाह्नाहर्ज्जिन्वा-
नुयारात्र्यारात्रीञ्जिन्वोशिजाव्वसुभ्योव्वसूञ्जिन्वप्रकेतेनादित्ये-
भ्यऽआदित्याञ्जिन्व ॥ ६ ॥ तन्तुनारायस्पोषेणरायस्पोषञ्जि-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

न्वसᳪ सर्प्पेणश्श्रुतायश्श्रुतञ्जिन्न्वैडेनौषधीभिरोषधीर्ज्जिन्न्वोत्तमेन-
तनूभिस्तनूर्ज्जिन्न्वव्वयोधसाधीतेनाधीतञ्जिन्न्वाभिजितातेजसाते-
जोजिन्न्व ॥ ७ ॥ प्रतिपदसिप्प्रतिपदेत्वानुपदस्यनुपदेत्वासम्पदसि-
सम्पदेत्वातेजोसितेजसेत्वा ॥ ८ ॥ त्रिवृदसित्रिवृतेत्वाप्प्रवृदसिप्प्र-
वृतेत्वाव्विवृदसिव्विवृतेत्वासवृदसिसवृतेत्वाक्क्रमोस्याक्क्रमायत्वा-
सङ्क्रमोसिसङ्क्रमायत्वोत्क्क्रमोस्युत्क्क्रमायत्वोत्क्क्रान्तिरस्युत्क्क्रा-
न्त्यैत्वाधिपतिनोर्ज्जोर्ज्जञ्जिन्न्व ॥ ९ ॥ राज्ञ्यसिप्प्राचीदिग्ग्वसवस्ते
देवाऽअधिपतयोग्ग्निर्हेतीनाम्प्प्रतिधर्त्तात्त्रिवृत्त्वास्तोमः पृथिव्व्याᳪ
श्रयत्त्वाज्ज्यमुक्क्थमव्व्यथायैस्तब्भ्नातुरथन्तरᳪ सामप्प्रतिष्ठित्त्याऽ-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

अन्तरिक्षऽऋषयस्त्वाप्प्रथमजादेवेषुदिवोमात्त्रयाव्वरिम्मणाप्प्रथन्तु
व्विधर्त्ताचायमधिपतिश्चतेत्त्वासर्व्वेसंव्विदानानाकस्यपृष्ठेस्वर्गेलोके-
यजमानञ्चसादयन्तु ॥ १० ॥ व्विराडसिदक्षिणादिग्रुद्द्रास्तेदेवाऽ-
अधिपतयऽइन्द्रोहेतीनाम्प्रतिधर्त्तापञ्चदशस्त्वास्तोमः पृथिव्याᳬ-
श्रयतुप्प्रऽउगमुक्त्थमव्व्यथायैस्तब्भ्नातुबृहत्सामप्प्रतिष्ठित्याऽऽअन्त-
रिक्षऽऋषयस्त्वाप्प्रथमजादेवेषुदिवोमात्त्रयाव्वरिम्मणाप्प्रथन्तुव्विधर्त्ता
चायमधिपतिश्चतेत्त्वासर्वेसंव्विदानानाकस्यपृष्ठेस्वर्गेलोकेयजमा-
नञ्चसादयन्तु ॥ ११ ॥ सम्म्राडसिप्प्रतीचीदिगादित्यास्तेदेवाऽअ-
धिपतयोव्वरुणोहेतीनाम्प्रतिधर्त्तासप्तदशस्त्वास्तोमः पृथिव्याᳬ-

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

श्रयतुमरुत्त्वतीयमुक्क्थमव्व्यथायैस्तब्भ्नातुव्वैरूपꣳसामप्प्रतिष्ठि-
त्याऽअन्तरिक्षऽऋषयस्त्वाप्प्रथमजादेवेषुदिवोमात्त्रयाव्वरिम्म्णाप्प्र-
थन्तुव्विधर्त्ताचायमधिपतिश्च्चतेत्वासर्व्वेसंव्विदानानाकस्यपृष्ठेस्व-
र्ग्गेलोकेयजमानञ्चसादयन्तु ॥१२॥ स्वराडस्युदीचीदिङ्मरुतस्तेदेवाऽ-
अधिपतयःसोमोहेतीनाम्प्रतिधर्त्तैकव्विꣳशस्त्वास्तोमः पृथिव्याꣳ-
श्रयतुनिष्क्केवल्यमुक्क्थमव्व्यथायैस्तब्भ्नातुव्वैराजꣳसामप्प्रतिष्ठि-
त्याऽअन्तरिक्षऽऋषयस्त्वाप्प्रथमजादेवेषुदिवोमात्त्रयाव्वरिम्म्णाप्प्र-
थन्तुव्विधर्त्ताचायमधिपतिश्च्चतेत्वासर्व्वेसंव्विदानानाकस्यपृष्ठेस्व-
र्ग्गेलोकेयजमानञ्चसादयन्तु ॥ १३ ॥ अधिपत्न्यसिबृहतीदि-

Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

ग्विश्श्वेतेदेवाऽअधिपतयोबृहस्प्पतिर्हेतीनाम्प्रतिधर्त्तात्त्रिणवत्त्रय-
स्त्रिᳬंशौत्त्वास्तोमौपृथिव्व्याᳬंश्रयतांव्वैश्श्वदेवाग्ग्निमारुतेऽउक्थेऽअ-
व्व्यथायैस्तभ्नीताᳬंशाक्वररैवतेसामनीप्प्रतिष्ठित्याऽअन्तरिक्षऽऋष-
यस्त्वाप्प्रथमजादेवेषुदिवोमात्त्रयाव्वरिम्णाप्प्रथन्तुव्विधर्त्ताचायमधि-
पतिश्चतेत्त्वासर्व्वेसंव्विदानानाकस्यपृष्ठेस्वर्ग्गेलोकेयजमानञ्चसाद-
यन्तु ॥ १४ ॥ अयम्पुरोहरिकेशᳬंसूर्य्यरश्मिस्तस्यरथगृत्सश्चरथौ-
जाश्चसेनानीग्ग्रामण्यौ । पुञ्जिकस्त्थलाचक्क्रतुस्त्थलाचाप्प्सरसौ-
दङ्क्ष्णवः पशवोहेतिः पौरुषेयोव्वधःप्प्रहेतिस्तेभ्भ्योनमोऽअस्तुतेनो-
वन्तुतेनोमृडयन्तुतेयन्द्विष्म्मोयश्चनोद्वेष्टितमेषाञ्जम्भेदध्मः ॥ १५ ॥

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

अयन्दक्षिणाव्विश्श्वकर्म्मातस्यरथस्वनश्चरथेचित्रश्चसेनानीग्ग्राम-
ण्ण्यौ । मेनकाचसहजन्याचाप्प्सरसौयातुधानाहेतीरक्षाꣳसिप्प्रहे-
तिस्तेब्भ्योनमोऽअस्तुतेनोवन्तुतेनोमृडयन्तुतेयन्द्विष्ष्मोयश्चनोद्वेष्टि-
ष्टितमेषाञ्जम्भेदध्मः ॥ १६ ॥ अयम्पश्चाद्विश्श्वव्यचास्तस्यरथप्प्रोत-
श्चासमरथश्चसेनानीग्ग्रामण्ण्यौ । प्रम्लोचन्तीचानुम्लोचन्तीचा-
प्प्सरसौव्याग्घ्राहेतिꣳसर्प्पाःप्प्रहेतिस्तेब्भ्योनमोऽअस्तुतेनोवन्तुतेनो-
मृडयन्तुतेयन्द्विष्ष्मोयश्चनोद्वेष्टितमेषाञ्जम्भेदध्मः ॥ १७ ॥ अ-
यमुत्तरात्संयद्वसुस्तस्यताक्षर्यश्चारिष्टनेमिश्चसेनानीग्ग्रामण्ण्यौ ।
व्विश्वाचीचघृताचीचाप्प्सरसावापोहेतिर्व्वातःप्प्रहेतिस्तेब्भ्योनमोऽ-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

अस्तुतेनोवन्तुतेनोमृडयन्तुतेयन्द्विष्मोयश्चनोद्वेष्टितमेषाञ्जम्भे
दध्मः ॥१८॥ अयमुपर्य्यर्व्वाग्वसुस्तस्यसेनजिच्चसुषेणश्चसेनानी-
ग्ग्रामण्यौ । उर्व्वशीचपूर्व्वचित्तिश्चाप्सरसाववस्फूर्जन्हेतिर्व्वि-
द्युत्प्रहेतिस्तेभ्योनमोऽअस्तुतेनोवन्तुतेनोमृडयन्तुतेयन्द्विष्मोय-
श्चनोद्वेष्टितमेषाञ्जम्भेदध्मः ॥ १९ ॥ अग्निर्म्मूर्द्धादिवःककु-
त्पतिः पृथिव्याऽअयम् । अपाᳬरेताᳬसिजिन्वति ॥ २० ॥ अयम-
ग्निःसहस्रिणोव्वाजस्यशतिनस्पतिः । मूर्द्धाकवीरयीणाम् ॥ २१ ॥
त्वामग्नेपुष्करादद्ध्यथर्व्वानिरमन्थत । मूर्ध्नोव्विश्वस्यव्वा-
घतः ॥ २२ ॥ भुवोयज्ञस्यरजसश्चनेतायत्रानियुद्भिःसचसेशि-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

वाभिः । दिविमूर्द्धानन्दधिषेस्वर्षाञ्जिह्वामग्ग्नेचकृषेहव्व्यवाहम् ॥ २३ ॥ अबोद्ध्यग्ग्निः समिधाजनानाम्प्रतिधेनुमिवायतीमुषासम् । यह्वाऽइवप्प्रवयामुज्जिहानाःप्रभानवःसिस्रतेनाकमच्छ ॥ २४ ॥ अवोचामकवयेमेद्ध्यायव्वचोव्वन्दारुव्वृषभायव्वृष्ष्णे । गविष्ठिरोनमसास्तोममग्ग्नौदिवीवरुक्ममुरुव्व्यञ्चमश्श्रेत् ॥ २५ ॥ अयमिहप्प्रथमोधायिधातृभिर्होतायजिष्ठोऽअद्ध्वरेष्ष्वीड्यः । यमप्नवानोभृगवोव्विरुरुचुर्व्वनेषुचित्रव्विभ्ध्वव्विशेविशे ॥ २६ ॥ जनस्यगोपाऽअजनिष्टजागृविरग्ग्निःसुदक्षःसुवितायनव्व्यसे । घृतप्प्रतीकोबृहतादिविस्पृशाद्द्युमद्विभातिभरतेब्भ्यःशुचिः ॥ २७ ॥ त्वामग्ग्नेऽअङ्गि-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

रक्षोगुहाहितमन्वविन्दञ्छिश्रियाणंवनेवने । सजायसेमथ्यमानः
सहोमहत्त्वामाहुःसहसस्पुत्रमङ्गिरः ॥ २८ ॥ सखायःसंव्वः सम्य-
ञ्चमिषःस्तोमञ्चाग्नये । व्वर्षिष्ठायक्षितीनामूर्ज्जोनप्त्रेसहस्वते
॥ २९ ॥ सꣳसमिद्युवसेव्वृषन्नग्नेव्विश्वान्न्यर्य्यऽआ । इडस्पदेस-
मिद्ध्यसेसनोवसून्याभर ॥३०॥ त्वाञ्चित्रश्रवस्तमहवन्तेव्विक्षुजः-
न्तवः । शोचिष्केशम्पुरुप्प्रियाग्नेहव्व्यायव्वोढवे ॥३१॥ एनावोऽ-
अग्निन्नमसोर्ज्जोनपातमाहुवे । प्प्रियञ्चेतिष्ठमरतिꣳस्वद्ध्वरंव्विश्वस्य
दूतममृतम् ॥३२॥ व्विश्वस्यदूतममृतंव्विश्वस्यदूतममृतम् । सयोजतेऽ
अरुषाव्विश्वभोजसासदुद्द्रवत्स्वाहुतः ॥३३॥ सदुद्द्रवत्स्वाहुतःसदु-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

द्द्रवत्स्वाहुतं॑ । सुब्र॒ह्मा॒यज्ञ॑ सु॒शमी॒व्वसू॑नान्दे॒वꣳ राधो॒जना॑नाम् ॥ ३४ ॥ अग्ने॒व्वाज॑स्य॒गोम॑त॒ऽईशा॑नꣳसहसोयहो । अ॒स्मेधे॑हिजातवे- दो॒महि॒श्रव॑ ॥ ३५ ॥ सऽइ॑धा॒नोव्वसु॑ष्क॒विर॒ग्निरी॒डेन्यो॑गि॒रा । रे॒वद॒स्मभ्य॑म्पुर्व्वणीकदीदिहि ॥ ३६ ॥ क्षपोरा॑जन्नु॒तत्मनाग्ने॒व्व- स्तो॑रु॒तोषस॑ । सति॑ग्मजम्भर॒क्षसो॑दह॒प्रति॑ ॥ ३७ ॥ भ॒द्द्रोनो॑ऽअ॒- ग्निराहु॑तोभ॒द्द्रारा॒तिः सु॑भगभ॒द्द्रोऽअ॑ध्व॒रः । भ॒द्द्राऽउ॒तप्रश॑स्तयꣳ ॥ ३८ ॥ भ॒द्द्राऽउ॒तप्रश॑स्तयोभ॒द्द्रम्मन॑ कृणुष्व्वव्वृत्रतूर्य्ये॑ । येना॑- स॒मत्सु॑सा॒सहः॑ ॥ ३९ ॥ येना॑स॒मत्सु॑सा॒सहोव॑स्थि॒रात॑नुहि॒भूरि॒शा- र्द्ध॑ताम् । व्वनेमा॑तेऽअभि॑ष्टिभिः ॥ ४० ॥ अ॒ग्निन्तम्म॑न्न्ये॒योव्वसुर-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

स्तऽयंय्यन्तिधेनवः॑ । अस्तमर्वन्तऽआशवोस्तन्नित्यासोव्वाजिनऽ-
इषंᳬस्तोतृभ्यऽआभर ॥४१॥ सोअग्निर्य्योव्वसुर्गृणेसंय्यमायन्तिधे-
नवः॑ । समर्वन्तोरघुद्द्रुवᳬसᳬसुजातासः॑सूरयऽइषंᳬस्तोतृभ्यऽ-
आभर ॥ ४२ ॥ उभेसुश्चन्द्रसर्प्पिषोदर्व्वीश्रीणीषऽआसनि । उतो-
नऽउत्पुपूर्य्याऽउक्क्थेषुशवसस्पतऽइषंᳬस्तोतृभ्यऽआभर ॥ ४३ ॥
अग्नेतमद्द्याश्श्वन्नस्तोमैᳬक्क्रतुन्नभद्द्रᳬहृदिस्पृशम्। ऋद्ध्यामात-
ऽओहैᳬ ॥ ४४ ॥ अधाह्यग्नेक्क्रतोर्ब्भद्द्रस्यदक्षस्यसाधोः । रथी-
ऽऋतस्यबृहतोबभूथ ॥ ४५ ॥ एभिर्न्नोऽअर्क्कैर्ब्भवानोऽअर्व्वाङ्स्व-
र्ण्णज्ज्योतिः॑ । अग्नेव्विश्वेभिᳬसुमनाऽअनीकैᳬ ॥ ४६ ॥ अग्निᳬ

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

होतारम्मन्न्येदास्वन्तंव्वसुंᳬसूनुंᳬसहसोजातवेदसंव्विप्पन्नजातवेदसम् । यऽऊर्द्ध्वयास्वद्ध्वरोदेवोदेवाच्च्याकृपा । घृतस्यव्विब्भ्राष्ट्रिमनुवष्ट्टिशोचिषाजुह्वानस्यसर्प्पिषः ॥४७॥ अग्नेत्वन्नोऽअन्तमऽउतत्राताशिवोभवाव्वरूत्थ्यः । व्वसुरग्निर्व्वसुश्श्रवाऽअच्छानक्षिद्युमत्तमᳬरयिन्दाः । तन्त्वाशोचिष्ठदीदिवᳬसुम्म्नायनूनमीमहेसखिब्भ्यः ॥ ४८ ॥ येनऽऋषयस्तपसासत्रमायन्निन्धानाऽअग्निᳬस्वराभरन्तः । तस्मिन्नहन्निदधेनाकेऽअग्निंय्यमाहुर्म्मनवस्तीर्णबर्हिषम् ॥४९॥ तम्पत्नीभिरनुगच्छेमदेवाःपुत्त्रैर्भ्रातृभिरुतवाहिरण्ण्यैः । नाकङ्गृब्भ्णानाःसुकृतस्यलोकेतृतीयेपृष्ठेऽअधिरोचनेदिवः ॥ ५० ॥ आवाचो-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

मद्धर्यंमरुहद्भुरण्युरयमग्निःसत्पतिश्चेकितानः । पृष्ठेपृथिव्या-
निहितोदविद्युतदधस्पदङ्कृणुतांय्येपृतन्यवः ॥ ५१ ॥ अयमग्नि-
र्व्वीरतमोव्वयोधाःसहस्रियोद्द्योततामप्प्रयुच्छन् । व्विभ्राजमानः
सरिरस्यमद्ध्यऽउपप्प्रयाहिदिव्यानिधाम ॥५२॥ सम्प्रच्यवद्ध्व-
मुपसम्प्रयाताग्नेपथोदेवयानाङ्कृणुद्ध्वम् । पुनःकृण्वानापितरा-
युवानान्वाताꣳसीत्त्वयितन्तुमेतम् ॥ ५३ ॥ उद्बुद्ध्यस्वाग्नेप्प्रति-
जागृहित्वमिष्टापूर्त्तेसꣳसृजेथामयञ्च । अस्मिन्त्सधस्थेऽअद्ध्युत्त-
रस्मिन्न्विश्वेदेवायजमानश्चसीदत ॥ ५४ ॥ येनवहसिसहस्रंय्ये-
नाग्नेसर्व्ववेदसम् । तेनेमंय्यज्ञन्नोनयस्वर्द्देवेषुगन्तवे ॥ ५५ ॥ अयन्ते

CC-0. Panini Kanya Maha Vidyalaya Collection

Digitized By Siddhanta eGangotri Gyaan Kosha

र्योनिऽर्ऋत्वियोयतोजातोऽअरोचथाः । तञ्जानन्नग्नआरोहाथानोव-
र्द्धयारयिम् ॥ ५६ ॥ तपश्चतपस्यश्चशैशिरावृतूऽअग्नेरन्तःश्लेषो-
सिकल्पेतान्द्यावापृथिवीकल्पन्तामापऽओषधयःकल्पन्तामग्नयः
पृथङ्ममज्यैष्ठ्यायसव्रताः । येऽअग्नयःसमनसोन्तराद्यावापृ-
थिवीऽइमे । शैशिरावृतूऽअभिकल्पमानाऽइन्द्रमिवदेवाऽअभिसंवि-
शन्तुतयादेवतयाङ्गिरस्वद्ध्रुवेसीदतम् ॥ ५७ ॥ परमेष्ठीत्वासादयतु
दिवस्पृष्ठेज्ज्योतिष्मतीम् । विश्वस्मैप्राणायापानायव्यानाय-
विश्वञ्ज्योतिर्यच्छ । सूर्यस्तेधिपतिस्तयादेवतयाङ्गिरस्वद्ध्रुवा-
सीद ॥ ५८ ॥ लोकम्पृणछिद्रम्पृणाथोसीदध्रुवात्वम् । इन्द्राग्नी-

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

त्वाबृहस्पतिरस्मिन्न्योनावसीषदन् ॥ ५९ ॥ ताऽअस्यसूददोहसः॑
सोमꣳश्रीणन्तिपृश्न्नयः॑ । जन्मन्देवानांव्विशस्त्रिष्ष्वारोचनेदिवः॑
॥ ६० ॥ इन्द्रंव्विश्श्वाऽअवीवृधन्त्समुद्रव्व्यचसङ्गिरः॑ । रथीतमꣳर-
थीनांव्वाजानाꣳसत्पतिम्पतिम् ॥ ६१ ॥ प्रोथदश्श्वोनयवसेविष्ष्य-
न्न्यदामहः॑संव्वरणाद्व्यस्त्थात् । आदस्यव्वातोऽअनुवातिशोचिर-
धस्स्मतेव्व्रजनङ्कृष्ष्णमस्ति ॥ ६२ ॥ आयोष्ट्वासदनेसादयाम्म्यवत-
श्छायायाꣳसमुद्द्रस्यहृदये । रश्म्मीवतीम्भास्वतीमायाद्द्याम्भास्या-
पृथिवीमोर्व्वन्तरिक्षम् ॥ ६३ ॥ परमेष्ठ्ठीत्वासादयतुदिवस्पृष्ठ्ठेव्व्यच-
स्वतीम्प्रथस्वतीन्दिवंय्यच्छदिवन्दिवꣳहदिवम्माहिꣳसीः॑ । व्विश्श्व-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

स्मै प्राणायापानाय व्यानायोदानाय प्रतिष्ठायै चरित्राय । सूर्य्य-
स्त्वाभिपातु मह्या स्वस्त्या छर्दिषा शन्तमेन तया देवतयाङ्गिरस्वद् ध्रुवे-
सीदतम् ॥ ६४ ॥ सहस्रस्य प्रमासि सहस्रस्य प्रतिमासि सहस्रस्यो-
न्मासि साहस्रोसि सहस्राय त्त्वा ॥ ६५ ॥ इति पञ्चदशोऽध्यायः ।

## ❀ अथ षोडशोऽध्यायः ❀

ॐ नमस्ते रुद्र मन्यव उतो त इषवे नमः । बाहुभ्यामुत ते नमः
॥ १ ॥ या ते रुद्र शिवा तनूरघोरापापकाशिनी । तया नस्तन्वा शन्त-
मया गिरिशन्ताभि चाकशीहि ॥ २ ॥ यामिषुङ्गिरिशन्त हस्ते बिभर्ष्य-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

स्तंवे । शिवाङ्गिरित्रातांङ्कु रुमाहिंꣳसीःपुरुषञ्जगंत् ॥ ३ ॥ शिवेनव्व-
चंसात्त्वागिरिशाच्छांवदामसि । यथानःसर्व्वमिज्जगंदयक्ष्मꣳसुम-
नाऽअसंत् ॥४॥ अद्ध्यंवोचदधिवक्ताप्प्रंथमोदैव्योभिषंक् । अहींश्च

---

१. 'ककारान्ते टकारान्ते ङणे तर्जनिकां नमेत् । पश्चाङ्गुल्यग्रपकारे च तकारे कुण्डलाकृतिः । ( या० शि० श्लो० ६२ ) 'अध्यवोच० षक्' ( शु० य० सं० १६।५ ) इत्यादिस्थले । टकारे—'सु१/सुवव्वाट्' (२।१८) इत्यादौ । ङणयोस्तूदाहरणे पदपाठवती ज्ञेये । तथाहि-ङकारे-'दध्यङ्' (११।३०) इत्यादौ । णकारे-'वृषण्वसू इति' वृषण् (११।११) इत्यादौ । पकारे—'गायत्री त्रिष्टुप्' (२३।३३ ) इति प्रतीकोदाहरणम् । तकारे–'सह० पात्' (३।११) इत्यादिस्थले ।

२. 'अहींश्च' अत्र 'चछयोः शम' इत्यनेन चकारछकारयोः प्रत्यययोः (परयोः)

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

सर्वाञ्जम्भयन्त्सर्वाश्च यातुधान्योऽधराचीः परासुव ॥ ५ ॥ असौ-
यस्ताम्रोऽअरुणऽउत बभ्रुः सुमङ्गलः । ये चैनꣳ रुद्राऽअभितो दि-
क्षु श्रिताः सहस्रशोऽवैषाꣳ हेडऽईमहे ॥ ६ ॥ असौ योऽवसर्पति नीलग्री-
वो विलोहितः । उतैनं गोपाऽअदृश्रन्नदृश्रन्नुदहार्यः स दृष्टो मृड-
याति नः ॥ ७ ॥ नमोऽस्तु नीलग्रीवाय सहस्राक्षाय मीढुषे । अथो येऽअ-
स्य सत्वानोऽहं तेभ्योऽकरन्नमः ॥ ८ ॥ प्रमुञ्च धन्वनस्त्वमुभयोरा-
र्त्न्योर्ज्याम् । याश्च ते हस्तऽइषवः परा ता भगवो वप ॥ ९ ॥ वि-

---

नकारमापद्यते उपधा चानुस्वारेण व्यवधीयते । छकारोदाहरणे तु मूलं मृग्यम् ।
किन्तु रूपोदाहरणं विद्यते विद्वान् छकारः, विद्वाँश्छकारः ।

CC-0, Panini Kanya Maha Vidyalaya Collection

Digitized By Siddhanta eGangotri Gyaan Kosha

ज्ज्यन्धनुः कपर्द्दिनोविशल्ल्योबाणवाँ २ उत । अनेशन्नस्ययाऽइषवऽ-
आभुरस्यनिषङ्गधिः ॥ १० ॥ यातेहेतिर्म्मीढुष्टमहस्तेबभूवतेधनुः ।
तयास्म्मान्न्विश्श्वतस्त्वमयक्ष्मयापरिभुज ॥ ११ ॥ परितेधन्न्वनो-
हेतिरस्म्मान्न्वृणक्तुविश्श्वतः । अथोयऽइषुधिस्तवारेऽअस्म्मन्नि-
धेहितम् ॥१२॥ अवतत्यधनुष्ट्वꣳसहस्राक्षशतेषुधे । निशीर्य्यशल्ल्या-
नाम्मुखाशिवोनः सुमनाभव ॥ १३ ॥ नमस्तऽआयुधायानाततायधृ-
ष्ष्णवे । उभाब्भ्यामुततेनमोबाहुब्भ्यान्तवधन्न्वने ॥१४॥ मानोमहा-
न्तमुतमानोऽअर्ब्भकम्मानऽउक्षन्तमुतमानऽउक्षितम् । मानोवधीः-
पितरम्मोतमातरम्मानः प्प्रियास्तन्न्वोरुद्ररीरिषः ॥ १५ ॥ मान-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

स्तोकेतनयेमानऽआयुषिमानोगोषुमानोऽअश्वेषुरीरिषः । मानो-
व्वीरान्रुद्रभामिनोवधीर्हविष्मन्तःसदमित्त्वाहवामहे ॥ १६ ॥
[ शतम् ८०० ] नमोहिरण्यबाहवेसेनान्न्येदिशाञ्चपतयेनमोनमो-
वृक्षेभ्योहरिकेशेभ्यःपशूनाम्पतयेनमोनमः शष्पिञ्जरायत्त्विषीमते-
पथीनाम्पतयेनमोनमोहरिकेशायोपवीतिनेपुष्टानाम्पतयेनमः ॥१७॥
नमोबभ्लुशायव्व्याधिनेन्नानाम्पतयेनमोनमोभवस्यहेत्यैजगताम्पत-
येनमोनमोरुद्रायाततायिनेक्षेत्राणाम्पतयेनमोनमः सूतायाहन्त्यैव्व-
नानाम्पतयेनमः ॥ १८ ॥ नमोरोहितायस्थपतयेव्वृक्षाणाम्पतयेन-
मोनमोभुवन्तयेव्वारिवस्कृतायौषधीनाम्पतयेनमोनमोमन्त्रिणेव्वाणि-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

जायकक्षाणाम्पतयेनमोनमऽउच्चैर्घोषायाक्क्रन्दयतेपत्तीनाम्पतये-
नमः ॥ १९ ॥ नमःकृत्स्नायतयाधावतेसत्त्वनाम्पतयेनमोनमः सह-
मानायनिव्याधिनऽआव्याधिनीनाम्पतयेनमोनमोनिषङ्गिणेककुभाय-
स्तेनानाम्पतयेनमोनमोनिचेरवेपरिचरायारण्यानाम्पतयेनमः॥२०॥
नमोव्वञ्चतेपरिव्वञ्चतेस्तायूनाम्पतयेनमोनमोनिषङ्गिणऽइषुधिमतेत-
स्कराणाम्पतयेनमोनमःसृकायिभ्योजिघाꣳसद्भ्योमुष्णताम्पतये-
नमोनमोसिमद्भ्योनक्तञ्चरद्भ्योविकृन्तानाम्पतयेनमः ॥ २१ ॥
नमऽउष्णीषिणेगिरिचरायकुलुञ्चानाम्पतयेनमोनमऽइषुमद्भ्योधन्वा
यिभ्यश्चवोनमोनमऽआतन्वानेभ्यःप्रतिदधानेभ्यश्चवोनमोन-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

मंऽआयच्छद्भ्योऽस्यद्भ्यश्च वो नमो नमः ॥ २२ ॥ नमो विसृजद्भ्यो विध्यद्भ्यश्च वो नमो नमः स्वपद्भ्यो जाग्रद्भ्यश्च वो नमो नमः शयानेभ्यऽआसीनेभ्यश्च वो नमो नमस्तिष्ठद्भ्यो धावद्भ्यश्च वो नमः ॥ २३ ॥ नमः सभाभ्यः सभापतिभ्यश्च वो नमो नमोऽश्वेभ्योऽश्वपतिभ्यश्च वो नमो नमऽआव्याधिनीभ्यो विविध्यन्तीभ्यश्च वो नमो नमऽउगणाभ्यस्तृꣳहतीभ्यश्च वो नमः ॥ २४ ॥ नमो गणेभ्यो गणपतिभ्यश्च वो नमो नमो व्रातेभ्यो व्रातपतिभ्यश्च वो नमो नमो गृत्सेभ्यो गृत्सपतिभ्यश्च वो नमो नमो विरूपेभ्यो विश्वरूपेभ्यश्च वो नमः ॥ २५ ॥ नमः सेनाभ्यः सेनानिभ्यश्च वो नमो नमो रथिभ्यो-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

ऽअरथेभ्यश्च वो नमो नमः क्षत्तृभ्यः सङ्ग्रहीतृभ्यश्च वो नमो नमो म-
हद्भ्यो ऽअर्भकेभ्यश्च वो नमः ॥ २६ ॥ नमस्तक्षभ्यो रथकारेभ्य-
श्च वो नमो नमः कुलालेभ्यः कर्मारेभ्यश्च वो नमो नमो निषादेभ्यः पु-
ञ्जिष्ठेभ्यश्च वो नमो नमः श्वनिभ्यो मृगयुभ्यश्च वो नमः ॥२७॥
नमः श्वभ्यः श्वपतिभ्यश्च वो नमो नमो भवाय च रुद्राय च नमः शर्वा-
य च पशुपतये च नमो नीलग्रीवाय च शितिकण्ठाय च ॥ २८ ॥ नमः क-
पर्दिने च व्युप्तकेशाय च नमः सहस्राक्षाय च शतधन्वने च नमो गिरिश-
याय च शिपिविष्टाय च नमो मीढुष्टमाय चेषुमते च ॥ २९ ॥ नमो ह्र-
स्वाय च वामनाय च नमो बृहते च वर्षीयसे च नमो वृद्धाय च सवृधे च न-

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

मोग्ग्यायचप्रथमायच ॥ ३० ॥ नमऽआशवेचाजिरायचनमःशी-
ग्घ्र्यायचशीब्भ्यायचनमऽऊर्म्म्यायचावस्वन्न्यायचनमोनादेयायच-
द्वीप्प्यायच ॥ ३१ ॥ नमोज्ज्येष्ठायचकनिष्ठायचनमःपूर्व्वजाय-
चापरजायचनमोमद्ध्यमायचापगल्भायचनमोजघन्न्यायचबुध्न्या-
यच ॥ ३२ ॥ नमःसोभ्यायचप्रतिसर्य्यायचनमोयाम्म्यायचक्षे-
म्म्यायचनमःश्लोक्क्यायचावसान्न्यायचनमऽउर्व्वर्य्यायचखल्ल्यायच
॥ ३३ ॥ नमोवन्न्यायचकक्ष्यायचनमःश्रवायचप्रतिश्रवायचनमऽ-
आशुषेणायचाशुरथायचनमःशूरायचावभेदिनेच ॥ ३४ ॥ नमोबि-
ल्मिनेचकवचिनेचनमोवर्म्मिणेचवरूथिनेचनमःश्रुतायचश्रुतसे-

CC-0. Jangamwadi Math Collection

Digitized By Siddhanta eGangotri Gyaan Kosha

नायंचनमोदुन्दुब्भ्यायचाहनन्न्यायच ॥ ३५ ॥ नमोधृष्णवेचप्रमृशा-
यंचनमोनिषङ्गिणेचेषुधिमतेचनमस्तीक्ष्णेषवेचायुधिनेचनमः स्वायु-
धायंचसुधन्वनेच ॥३६॥ नमःस्रुत्यायचपथ्यायचनमःकाट्यायचनी-
प्यायचनमःकुल्यायचसरस्यायचनमोनादेयायंचव्वैशन्तायंच ॥३७॥
नमःकूप्यायचावट्यायचनमोव्वीध्र्यायचातप्यायचनमोमेघ्यायं[1]
चव्विद्युत्यायचनमोव्वर्ष्यायचावर्ष्यायंच ॥ ३८ ॥ नमोव्वात्याय-
चरेष्म्यायचनमोव्वास्तव्यायचव्वास्तुपायंचनमःसोमायचरुद्रा-

१. 'भवे छन्दसि' ४।४।११० । इति सूत्रेण यत्प्रत्यये ।

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

यंचनमस्ताम्म्रायचारुणायच ॥ ३९ ॥ नमःशङ्गवेचपशुपतयेचनमऽ-
उग्ग्रायचभीमायचनमोऽग्ग्रेवधायचदूरेवधायचनमोहन्त्रेचहनीयसेच-
नमोव्वृक्षेब्भ्योहरिकेशेब्भ्योनमस्ताराय ॥४०॥ नमःशम्भवायचमयोभ-
वायचनमःशङ्करायचमयस्करायचनमःशिवायचशिवतरायच ॥४१॥
नमᳪपार्य्यायचावार्य्यायचनमःप्प्रतरणायचोत्तरणायचनमस्तीर्त्थ्या-
यचकूल्ल्यायचनमᳪशष्प्यायचफेन्न्यायच ॥४२॥ नमःसिकत्यायचप्र-
वाह्यायचनमःकिᳪशिलायचक्षयणायचनमःकपर्द्दिनेचपुलस्तयेचन-
मऽइरिण्यायचप्रपत्थ्यायच ॥४३॥ नमोव्व्रज्ज्यायचगोष्ठ्यायचनम-
स्तल्प्यायचगेह्यायचनमोहृदय्यायचनिवेष्प्यायचनमᳪकाट्यायच-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

गह्व्वरेष्ठायच ॥४४॥ नमः शुष्क्क्याय च हरित्याय च नमः पाᳪसव्या-
यच रजस्याय च नमो लोप्प्याय चोलप्प्याय च नम ऽऊर्व्याय च सूर्व्याय च
॥४५॥ नमः पर्ण्णाय च पर्ण्णशदाय च नम ऽउद्गुरमाणाय चाभिघ्नते च न-
म ऽआखिदते च प्प्रखिदते च नम ऽइषुकृद्भ्यो धनुष्कृद्भ्यश्च वो नमो नमो
वः किरिकेभ्यो देवानाᳬ हृदयेभ्यो नमो व्विचिन्न्वत्केभ्यो नमो व्विक्षि-
णत्केभ्यो नम आनिर्हतेभ्यः ॥४६॥ द्रापे ऽअन्धसस्प्पते दरिद्र नीललो-
हित । आसाम्प्रजानामेषाम्पशूनाम्मा भेर्म्मा रोङ्मो च नः किञ्चनाममत्
॥४७॥ इमा रुद्राय तवसे कपर्द्दिने क्षयद्वीराय प्प्रभरामहे मतीः । यथा-
शमसद्द्विपदे चतुष्प्पदे व्विश्श्वं पुष्टङ्ग्रामे ऽअस्मिन्ननातुरम् ॥४८॥

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

याते॑रुद्र॒शि॒वात॒नूःशि॒वाव्वि॒श्श्वाहा॑भे॒षजी । शि॒वारु॒तस्य॑भे॒षजी॒त-
या॑नोमृडजी॒वसे॑ ॥४९॥ परि॑नोरु॒द्रस्य॑हे॒तिर्वृ॑णक्तुपरि॑त्त्वे॒षस्य॑दुर्म्म॒-
तिर॑घा॒योः । अव॑स्थि॒रामघव॑द्भ्यस्तनुष्व॒मीढ्व॑स्तो॒काय॒तन॑याय मृ-
ड ॥ ५० ॥ मीढु॑ष्ट॒मशि॒व॑तमशि॒वोनः॑सु॒मना॑भव । प॒र॒मेवृ॒क्षऽआ-
यु॑धन्नि॒धाय॒कृत्ति॒व्वसा॑न॒ऽआच॑र॒पिना॑क॒म्बिभ्र॒दाग॑हि ॥ ५१ ॥ वि-
कि॑रिद्र॒व्विलो॑हित॒नम॑स्तेऽअस्तुभगवः । यास्ते॑स॒हस्र॑ꣳहे॒तयो॒न्यम॒-

१. इत्यत्र शाकटायनमते 'परिणऽइति शाकटायनः' (३।८८) इत्यनेन परिण इति निपात्यते। सोऽपि व्यवस्थितः काण्वादेर्भवति न माध्यन्दिनीयानाम्। वाजसनेयिनां तु णत्वरहितः पाठः।

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

स्म्मान्निवपन्तुताः ॥ ५२ ॥ सहस्राणिसहस्रशोबाह्वोस्तवहेतयः । तासामीशानोभगवःपराचीनामुखाकृधि ॥ ५३ ॥ असंङ्ख्यातासहस्राणियेरुद्द्राऽअधिभूम्म्याम् । तेषाᳬसहस्रयोजनेवधन्न्वानितन्म्मसि ॥५४॥ अस्मिन्न्महत्यर्ण्णवेन्तरिक्षेभवाऽअधि । तेषाᳬसहस्रयोजनेवधन्न्वानितन्म्मसि ॥ ५५ ॥ नीलग्ग्रीवाःशितिकण्ठादिवᳬरुद्द्राऽउपश्श्रिताः । तेषाᳬसहस्रयोजनेवधन्न्वानितन्म्मसि ॥ ५६ ॥ नीलग्ग्रीवाःशितिकण्ठाःशर्व्वाऽअधःक्क्षमाचराः । तेषाᳬसहस्रयोजनेवधन्न्वानितन्म्मसि ॥ ५७ ॥ येव्वृक्षेषुशष्पिपञ्जरानीलग्ग्रीवाव्विलोहिताः । तेषाᳬसहस्रयोजनेवधन्न्वानितन्म्मसि ॥ ५८ ॥ येभूतानाम-

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


धिपतयोव्विशिखासः कपर्दिनः । तेषाꣳसहस्रयोजनेवधन्वानि-
तन्मसि ॥५९॥ येपथाम्पथिरक्षयऽऐलबृदाऽआयुर्युधः । तेषाꣳ
सहस्रयोजनेवधन्वानितन्मसि ॥ ६० ॥ येतीर्थानिप्प्रचरन्तिसृका-
हस्तानिषङ्गिणः । तेषाꣳसहस्रयोजनेवधन्वानितन्मसि ॥६१॥ ये-
न्नेषुव्विविध्यन्तिपात्रेषुपिबतोजनान् । तेषाꣳसहस्रयोजनेवधन्वानि-
तन्मसि ॥६२॥ यऽएतावन्तश्चभूयाꣳसश्चदिशोरुद्राव्वितस्थिरे ।
तेषाꣳसहस्रयोजनेवधन्वानितन्मसि ॥ ६३ ॥ नमोस्तुरुद्रेभ्यो
येदिवियेषांव्वर्षमिषवः । तेभ्योदशप्प्राचीर्दशदक्षिणादशप्प्रतीचीर्द-
शोदीचीर्दशोर्ध्वाः । तेभ्योनमोऽअस्तुतेनोवन्तुतेनोमृडयन्तुतेय-

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha
न्द्विष्मोयश्चनोद्वेष्टितमेषाञ्जम्भेदध्मः ॥ ६४ ॥ नमोस्तुरुद्द्रेभ्यो
येन्तरिक्षेयेषांवातऽइषवः । तेभ्योदशप्प्राचीर्दशदक्षिणादशप्प्रती-
चीर्दशोदीचीर्दशोद्ध्र्वाः । तेभ्योनमोऽअस्तुतेनोवन्तुतेनोम्मृडयन्तुते-
यन्द्विष्मोयश्चनोद्वेष्टितमेषाञ्जम्भेदध्मः ॥ ६५ ॥ नमोस्तुरुद्द्रे-
भ्योयेपृथिव्व्यांयेषामन्नमिषवः । तेभ्योदशप्प्राचीर्दशदक्षिणादश
प्प्रतीचीर्दशोदीचीर्दशोद्ध्र्वाः । तेभ्योनमोऽअस्तुतेनोवन्तुतेनोम्मृड-
यन्तुतेयन्द्विष्मोयश्चनोद्वेष्टितमेषाञ्जम्भेदध्मः ॥ ६६ ॥

इति संहितायां षोडशोऽध्यायः ।

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

# ❀ अथ सप्तदशोऽध्यायः ❀

ॐ अश्म॑न्नूर्ज्जं॒पर्व॑ते शिश्रिया॒णाम॒द्भ्यऽओष॑धीभ्यो॒ वन॒स्प-
ति॑भ्यो॒ अधि॒ सम्भृ॑त॒म्पयः॑ । तान्न॒ऽइष॒मूर्ज्ज॑न्धत्त मरुतः सꣳररा॒णाऽअ-
श्मँ॑स्ते॒ क्षुन्मयि॑ त॒ऽऊर्ग्यं द्वि॒ष्मस्तन्ते॒ शुगृ॑च्छन्तु ॥ १ ॥ इ॒मा मे॑ऽअ-
ग्न॒ऽइष्ट॑का धे॒नवः॑ सन्त्वेका॑ च॒ दश॑ च॒ दश॑ च श॒तञ्च॑ श॒तञ्च॑ स॒हस्र॑ञ्च स॒हस्र-
ञ्चा॒युत॑ञ्चा॒युत॑ञ्च नि॒युत॑ञ्च नि॒युत॑ञ्च प्र॒युत॑ञ्चार्बु॑दञ्च॒ न्य॒र्बुदञ्च समु॒द्र-
श्च॒ मध्य॑ञ्चा॒न्त॑श्च परा॒र्द्धश्चै॒ता मे॑ऽअग्न॒ऽइष्ट॑का धे॒नवः॑ सन्त्व॒मुत्रा॒मु-
ष्मिँ॑ल्लो॒के ॥ २ ॥ ऋ॒त॒वः॑ स्थऽऋता॒वृध॑ऽऋतु॒ष्ठाः स्थ॑ऽऋता॒वृधः॑ ।

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

घृतश्च्चुतोमधुश्च्चुतोव्विराजोनामकामदुघाऽअक्षीयमाणाः ॥ ३ ॥
समुद्रस्यत्वावकयाग्नेपरिव्व्ययामसि । पावकोऽअस्म्मब्भ्यᳬशिवो-
भव ॥ ४ ॥ हिमस्यत्वाजरायुणाग्नेपरिव्व्ययामसि । पावकोऽअस्म्म-
ब्भ्यᳬशिवोभव ॥ ५ ॥ उपज्ज्मन्नुपवेतसेवतरन्नदीष्ष्वा । अग्नेपित्त-
मपामसिमण्डूकिताभिरागहिसेमन्नोयज्ञम्पावकवर्णᳬशिवङ्कृधि
॥ ६ ॥ अपामिदन्न्ययनᳬसमुद्रस्यनिवेशनम् । अन्न्याँस्तेऽअस्म्मत्त-
पन्तुहेतयः पावकोऽअस्म्मब्भ्यᳬशिवोभव ॥ ७ ॥ अग्नेपावकरोचि-
षामन्द्रयादेवजिह्व्वया । आदेवान्न्वक्षियक्षिच ॥ ८ ॥ सनः पावक-
दीदिवोग्नेदेवाँ२ऽइहावह । उपयज्ञᳬहविश्चनः ॥ ९ ॥ पावकयास-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

शिश्वुतयन्त्याकुपाक्षामंत्रुरुचऽउषसोनभानुना । तूर्व्वन्नयामन्नेतशस्य-
नूरणऽआयोघृणेनततृषाणोऽअजरः ॥ १० ॥ नमस्तेहरसेशोचिषेन-
मस्तेऽअस्त्वर्च्चिषे । अन्न्याँस्तेऽअस्मत्तपन्तुहेतयःपावकोऽअस्म-
भ्यᳪशिवोभव ॥ ११ ॥ नृषदेव्वेडप्सुषदेव्वेड्बर्हिषदेव्वेड्वनसदे-
व्वेट्स्वर्व्विदेव्वेट् ॥ १२ ॥ येदेवादेवानांय्यज्ञियायज्ञियानाᳪसंव्वत्स-
रीणमुपभागमासते । अहुतादोहविषोयज्ञेऽअस्मिन्त्स्वयम्पिबन्तुम-
धुनोघृतस्य ॥ १३ ॥ येदेवादेवेष्वधिदेवत्त्वमायन्येब्ब्रह्मणःपुरऽएतारोऽ-
अस्य । येभ्योनऽऋतेपवतेधामकिञ्चननतेदिवोनपृथिव्व्याऽअधिस्नु-
षु ॥ १४ ॥ प्राणदाऽअपानदाव्यानदाव्वर्च्चोदाव्वरिवोदाः । अन्न्याँ

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

स्तेऽअस्मत्तपन्तुहेतयः पावकोऽअस्मभ्यꣳशिवोभव ॥ १५ ॥ अ-
ग्निस्तिग्ग्मेनशोचिषायासद्विश्श्वन्न्युत्रिणम् । अग्निर्न्नोव्वनतेरयिम्
॥ १६ ॥ यऽइमाव्विश्श्वाभुवनानिजुह्वदृषिर्होतान्न्यसीदत्पितानः ।
सऽआशिषाद्द्रविणमिच्छमानःप्रथमच्छदवराँ२ऽआविवेश ॥ १७ ॥
किꣳस्विदासीदधिष्ठानमारम्भणङ्कतमत्स्वित्कथासीत् । यतोभूमिं-
ञ्जनयन्न्विश्श्वकर्म्माव्विद्यामौर्णोन्महिनाव्विश्श्वचक्षाः ॥ १८ ॥
व्विश्श्वतश्चक्षुरुतव्विश्श्वतोमुखोव्विश्श्वतोबाहुरुतव्विश्श्वतस्पात् ।
सम्बाहुब्भ्यान्धमतिसम्पतत्रैर्द्यावाभूमीजनयन्देवऽएकः ॥ १९ ॥
किꣳस्विद्वनङ्कऽउसव्वृक्षऽआसयतोद्यावापृथिवीनिष्टतक्षुः । मनी-

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

षिणोमनंसापृच्छतेदुतद्यदुद्ध्यतिंष्ठुद्भुवंनानिधारयंन् ॥ २० ॥ या-
तेधामानिपरमाणियावमायामंद्ध्यमाव्विश्श्वकर्म्मन्नुतेमा । शि-
क्षासखिंब्भ्योहुविषिंस्वधावःस्वयंय्यंजस्वतन्न्वंव्वृधानः ॥ २१ ॥
व्विश्श्वंकर्म्मन्न्हविषांव्वाव्वृधानःस्वयंय्यंजस्वपृथिवीमुतद्याम् ।
मुह्यंन्त्वन्न्येऽअभितं÷सपत्नांऽइहास्म्माकंम्मघवांसूरिंरंस्तु ॥ २२ ॥
व्वाचस्प्पतिंव्विश्श्वकंर्म्माणमूतयेंमनोजुवंव्वाजेंऽअद्याहुवेम । स-
नोव्विश्श्वांनिहवंनानिजोषद्विश्श्वशंम्भूरवंसेसाधुकंर्म्मा ॥ २३ ॥ व्वि-
श्श्वंकर्म्मन्न्हविषाव्वर्द्धनेनत्रातारमिन्द्रंमकृणोरवध्यम् । तस्म्मैव्विशःं-
समंनमन्तपूर्व्वीरयमुग्रोविहव्व्योयथासंत् ॥ २४ ॥ चक्षुंषःपिता

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

मनसाहिधीरोघृतमेनेऽअजनन्नम्नमाने । यदेदन्ताऽअददृहन्तपूर्व्वऽ-
आदिद्द्यावापृथिवीऽअप्रथेताम् ॥ २५ ॥ विश्वकर्म्माविमनाऽआ-
द्विहायाधाताविधातापरमोतसन्दृक् । तेषामिष्टानिसमिषामदन्तिय-
त्रासप्तऽऋषीन्परऽएकमाहुः ॥ २६ ॥ योनःपिताजनितायोविधा-
ताधामानिवेदभुवनानिविश्वा । योदेवानान्नामधाऽएकऽएवतꣳ-
सम्प्रश्नम्भुवनायन्त्यन्न्या ॥ २७ ॥ तऽआयजन्तद्द्रविणꣳसमस्म्माऽ-
ऋषयःपूर्व्वेजरितारोनभूना । असूर्त्तेसूर्त्तेरजसिनिषत्तेयेभूतानिसम-
कृण्वन्निमानि ॥२८॥ परोदिवापरऽएनापृथिव्यापरोदेवेभिरसुरैर्य-
दस्ति । कꣳस्विद्गर्भम्प्रथमन्दध्रऽआपोयत्रदेवाःसमपश्यन्तपूर्व्वे

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

॥ २९ ॥ तमिद्गर्भम्प्रथमन्दध्रऽआपोयत्रदेवाःसमगच्छन्तविव-
श्वे । अजस्यनाभावध्येकमर्पितंयस्मिन्विश्वानिभुवनानित-
स्थुः ॥ ३० ॥ नतंविदाथयऽइमाजजानान्यद्युष्माकमन्तरम्ब-
भूव । नीहारेणप्रावृताजल्प्याचासुतृपऽउक्थशासश्चरन्ति ॥ ३१ ॥
विश्वकर्माह्यजनिष्टदेवऽआदिद्गन्धर्वोऽअभवद्द्वितीयः । तृ-
तीयःपिताजनितौषधीनामपाङ्गर्भंव्यदधात्पुरुत्रा ॥ ३२ ॥ आ-
शुःशिशानोवृषभोनभीमोघनाघनःक्षोभणश्चर्षणीनाम् । सङ्क्रन्दनो-

१—आशुः शिशानो २-अदितिः षोडशाक्षरेण ९।३४। देवोवः सविता ११। )
इत्यादिस्थलेषु शाकटायनमते—'प्रत्ययसवर्णम्मुदिशाकटायनः' ( ३।९ ) इति सूत्रेण

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

निमिषऽएकवीरः शतꣳसेनाऽअजयत्साकमिन्द्रः ॥ ३३ ॥ सङ्क्रन्द
नेनानिमिषेण । जिष्णुनायुत्कारेणदुश्च्यवनेनधृष्णुना । तदिन्द्रेण-
जयततत्सहद्ध्वंयुधोनरऽइषुहस्तेनवृष्णा ॥ ३४ ॥ सऽइषुहस्तैः
सनिषङ्गिभिर्व्वशीसꣳस्रष्टासयुधऽइन्द्रोगणेन । सꣳसृष्टजित्सोमपा-
बाहुशर्द्ध्युग्रधन्न्वाप्रतिहिताभिरस्ता ॥ ३५ ॥ बृहस्पतेपरिदीया-

---

शषसामुत्संज्ञकेषु परभूतेषु विसर्जनीयः परसवर्णमापद्यते' इत्यनेन विकल्पमेव स्पष्टयति। 'अविकारꣳ० शाकल्यः शषसेषु' (३।१०) शषसेषु परभूतेषु विसर्जनीयस्य विकारन्न मन्यते। अर्थात्—विसर्जनीयो नान्य इत्यर्थः। तथापि अत्र यथासंप्रदायं पाठव्यवस्था। अत्रैकैकप्रयोगलेखनं शुक्तम्।

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

रथैनरक्षोहामित्राँ२ऽअपबाधमानः । प्रभञ्जन्त्सेनाःप्रमृणोयुधाज-
यंन्नस्माकमेदुध्यविताराथानाम् ॥ ३६ ॥ बलविज्ञायस्स्थविरःप्रवी-
रःसहस्वान्वाजीसहमानऽउग्रः । अभिवीरोऽअभिसत्त्वासहोजाजै-
त्रमिन्द्ररथमातिष्ठगोवित् ॥ ३७ ॥ गोत्रभिदङ्गोविदंव्वज्रबाहुञ्जयं-
न्तमज्ममप्रमृणन्तमोजसा । इमःसजाताऽअनुवीरयदुध्वमिन्द्रःस-
खायोऽअनुसःरभदुध्वम् ॥ ३८ ॥ अभिगोत्राणिसहसागाहमानोदयो-
व्वीरःशतमन्युरिन्द्रः । दुश्च्यवनःपृतनाषाडयुदुध्योस्माकःसे-
नाऽअवतुप्रयुत्सु ॥ ३९ ॥ इन्द्रऽआसान्नेताबृहस्पतिर्दक्षिणायज्ञःपु-
रऽएतुसोमः । देवसेनानामभिभञ्जतीनाञ्जयन्तीनाम्मरुतोयन्त्व-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

ग्रम् ॥ ४० ॥ इन्द्रस्य वृष्णो वरुणस्य राज्ञऽआदित्यानाम्मरुताꣳ-
शर्द्धऽउग्रम् । महामनसाम्भुवनच्च्यवानाङ्घोषो देवानाञ्जयतामुद-
स्थात् ॥ ४१ ॥ उद्धर्षय मघवन्नायुधान्युत्सत्त्वनाम्मामकानाम्म-
नाꣳसि । उद्वृत्रहन्वाजिनाँव्वाजिनान्युद्रथानाञ्जयताँय्यन्तु घो
षाः ॥ ४२ ॥ अस्माकमिन्द्रः समृतेषु ध्वजेष्वस्माकँय्याऽइषवस्ता
जयन्तु । अस्माकँव्वीराऽउत्तरे भवन्त्वस्माँ२ऽउ देवाऽअवता हवेषु
॥ ४३ ॥ अमीषाञ्चित्तम्प्रतिलोभयन्ती गृहाणाङ्गान्यप्वे परेहि । अभि
प्रेहि निर्दह हृत्सु शोकैरन्धेनामित्रास्तमसा सचन्ताम् ॥ ४४ ॥ अवसृ-
ष्टा परा पत शरव्ये ब्रह्मसꣳशिते । गच्छामित्रान्प्रपद्यस्व मामी-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

षाङ्क्ष्वनोच्छिषः ॥ ४५ ॥ प्रेताजयतानर ऽइन्द्रोवःशर्म्मयच्छतु । उग्राव॑ःसन्तुबाहवोनाधृष्ष्यायथासंथ ॥ ४६ ॥ असौयासेनामरुतःपरेषामभ्येतिनऽओजसास्प्पर्द्धमाना । ताङ्गूहततमसापंव्रतेनयथामीऽअन्न्योऽअन्न्यन्नजानन् ॥ ४७ ॥ यत्रबाणाःसम्पतन्तिकुमाराविशिखाऽइव । तन्नऽइन्द्रोबृहस्प्पतिरदितिःशर्म्मयच्छतुविश्वाहाशर्म्मयच्छतु ॥४८॥ मर्म्माणितेव्वर्म्मणाच्छादयामिसोमस्त्वाराजामृते-

---

१—'शकारे च' (४।९६) इत्यनेन शकारे च प्रत्यये परे तकारवर्गश्चकारवर्गमापद्यते । एवम्—तच्छ्केयम् (१।५) स्वधावाञ्छुक्रः (३३।५) आदित्याञ्श्मश्रुभिः (२५।१) इत्यादौ।

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

नानुवस्ताम् । उरोर्व्वरीयोव्वरुणस्तेकृणोतुजयन्तन्त्वानुदेवामदन्तु
॥४९॥ उदेनमुत्तरान्नयाग्ग्नेघृतेनाहुत । रायस्प्पोषेणसꣳसृजप्प्रजयाच-
बहुङ्कृधि ॥५०॥ [ शतम् ९०० ] इन्द्रेमम्प्रतरान्नयसजातानामसद्द्व-
शी । समेनंव्वर्च्चसासृजदेवानाम्भागदाऽअसत् ॥ ५१ ॥ यस्य-
कुर्म्मोगृहेहविस्तमग्ग्नेव्वर्द्धयात्वम् । तस्मैदेवाऽअधिब्ब्रुवन्नयञ्च-
ब्ब्रह्मणस्प्पतिः ॥ ५२ ॥ उदुत्वाव्विश्श्वेदेवाऽअग्ग्नेभरन्तुचित्ति-
भिः । सनोभवशिवस्त्वꣳसुप्प्रतीकोव्विभावसुः ॥ ५३ ॥ पञ्चदिशो-
दैवीर्य्यज्ञमवन्तुदेवीरपामतिन्दुर्म्मतिम्बाधमानाः । रायस्प्पोषेयज्ञ-
पतिमाभजन्तीरायस्प्पोषेऽअधियज्ञोऽअस्त्थात् ॥ ५४ ॥ समिद्धेऽअ-

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha
ग्रावधिमामहानऽउक्थपत्रऽईड्यो॑गृभीतः । तप्सङ्घर्म्मम्परिगृह्यायज-
न्तोर्जायद्यज्ञमयंजन्तदेवाः ॥ ५५ ॥ दैव्व्यायधर्त्रेजोष्ट्रेदेवश्रीः-
श्रीमनाःशतपयाः । परिगृह्यदेवायज्ञमायन्देवादेवेभ्योऽअद्ध्वर्य-
न्तोऽअस्थुः ॥ ५६ ॥ व्वीतःहविः । शमितःशमितायजद्ध्यैतुरी-
योयज्ञोयत्रहव्यमेति । ततोव्वाकाऽआशिषोनोजुषन्ताम् ॥ ५७ ॥
सूर्यरश्मिर्हरिकेशःपुरस्तात्सविताज्ज्योतिरुदयाँ२अजस्रम् । तस्य-

१ इत्यत्र 'श्रीमनाऽइत्येके' (३।९२) एकेषामाचार्याणां मतेन अयं च नकारः प्रकृत्या भवति । अयं भावः—चरणानां पाठव्यवस्था काण्वशाखायां णत्वं, माध्यन्दिन-शाखायां नत्वं, इति ।

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By SIddhanta eGangotri Gyaan Kosha

पूषाप्प्रसवेयातिव्विद्वान्त्सम्पश्यन्विश्श्वाभुवनानिगोपाः ॥ ५८ ॥
व्विमानऽएषदिवोमद्ध्यऽआस्तऽआपप्प्रिवान्त्रोदसीऽअन्तरिक्षम् ।
सव्विश्श्वाचीरभिचष्ट्टेघृताचीरन्तरापूर्व्वमपरञ्चकेतुम् ॥ ५९ ॥ उक्षा-
समुद्रोऽअरुणःसुपर्ण्णः पूर्व्वस्ययोनिम्पितुराविवेश । मद्ध्येदिवो-
निहितःपृश्निरश्म्माव्विचक्क्रमेरजसस्प्पात्यन्तौ ॥ ६० ॥ इन्द्रं-
व्विश्श्वाऽअवीवृधन्त्समुद्रव्व्यचसङ्गिरः । रथीतमःरथीनांव्वाजा-
नाᳬसत्पतिम्पतिम् ॥ ६१ ॥ देवहूर्यज्ञऽआचव्वक्षत्सुम्नहूर्य्यज्ञऽ-
आचव्वक्षत् । यक्षदग्निर्देवोदेवाँ२आचव्वक्षत् ॥ ६२ ॥ व्वाजस्यमा-
प्प्रसवऽउद्ग्राभेणोदग्ग्रभीत् । अधासपत्नानिन्द्रोमेनिग्ग्राभेणाध-

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

राँ२अकꣳ ॥ ६३ ॥ उद्ग्राभञ्चनिग्ग्राभञ्चब्ब्रह्मदेवाऽअवीवृधन् ।
अधासपत्नान्निन्द्राग्नीमेव्विषूचीनान्व्यस्यताम् ॥ ६४ ॥ क्रम-
द्ध्वमग्निनानाकमुक्ख्यꣳहस्तेषुबिब्भ्रतꣳ । दिवस्पृष्ठꣳस्वर्ग्गत्वामि-
श्श्रादेवेभिराद्ध्वम् ॥ ६५ ॥ प्राचीमनुप्रदिशम्प्रेहिव्विद्वानग्नेरग्नेपुरोऽ-
अग्निर्भवेह । व्विश्श्वाऽआशादीद्यानोव्विभाह्यूर्ज्जन्नोधेहिद्विपदे-
चतुष्प्पदे ॥ ६६ ॥ पृथिव्व्याऽअहमुदन्तरिक्षमारुहमन्तरिक्षाद्दिवमा-
रुहम् । दिवोनाकस्यपृष्ठात्स्वर्ज्ज्योतिरगामहम् ॥ ६७ ॥ स्वर्य्यन्तो-
नापेक्षन्तऽआद्द्याꣳरोहन्तिरोदसी । यज्ञंय्येव्विश्श्वतोधारꣳसुवि-
द्वाꣳसोव्वितेनिरे ॥ ६८ ॥ अग्नेप्रेहिप्रथमोदेवयताञ्चक्षुर्देवानामुतम-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

त्यीनाम्। इयंक्षमाणाभृगुभिःसजोषाःस्वरुषन्तुयजमानाःस्वस्ति ॥६९॥
नक्तोषासासमनसाविरूपेधापयेतेशिशुमेकꣳसमीची । द्यावाक्षा-
मारुक्मोऽअन्तर्विभातिदेवाऽअग्निन्धारयन्द्रविणोदाः ॥ ७० ॥ अ-
ग्नेसहस्राक्षशतमूर्द्धञ्छतन्तेप्राणाः सहस्रंव्यानाः । त्वꣳसाहस्रस्य-
रायऽईशिषेतस्मैतेविधेमवाजायस्वाहा ॥ ७१ ॥ सुपर्णोसिगरु-
त्मान्पृष्ठेपृथिव्याःसीद । भासान्तरिक्षमापृणज्ज्योतिषादिवमुत्त-
भानतेजसादिशऽउद्दꣳह ॥ ७२ ॥ आजुह्वानःसुप्रतीकःपुरस्ताद-
ग्नेस्वंयोनिमासीदसाधुया । अस्मिन्त्सधस्थेऽअध्युत्तरस्मिन्वि-

१. 'उदस्तभाने लोपम्' (४।१८) उद उपसर्गात्परस्तभाने प्रत्यये सकारो लोपमापद्यते।

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

श्श्वैदेवायजमानश्चसीदत ॥ ७३ ॥ ताᳬसवितुर्व्वरेण्यस्यचित्रामाहं-
व्वृणेसुमतींव्विश्श्वजन्न्याम् । यामस्यकण्ण्वोऽअदुहत्प्रपीनाᳬसहस्र-
धाराम्पयसामहीङ्गाम् ॥ ७४ ॥ व्विधेमतेपरमेजन्न्मन्नग्ग्नेव्विधेमस्तो-
मैरवरेसधस्थे । यस्म्माद्योनेरुदारिथायजेतम्प्रत्त्वेहवीᳬषिजुहुरेस-
मिद्धे ॥ ७५ ॥ प्रेद्धोऽअग्ग्नेदीदिहिपुरोनोजस्रयासूर्म्म्यायविष्ठ । त्वाᳬ
शश्श्वन्तऽउपयन्तिव्वाजाः ॥ ७६ ॥ अग्ग्नेतमद्याश्श्वन्नस्तोमैः क्क्र-
तुन्नभद्द्रᳬहृदिस्पृशम् । ऋद्ध्यामातऽओहैः ॥ ७७ ॥ चित्तिञ्जुहो-
मिमनसाघृतेनयथादेवाऽइहागमन्न्वीतिहोत्त्राऽऋतावृधः । पत्त्ये-
व्विश्श्वस्यभूमनोजुहोमिव्विश्श्वकर्म्मणेव्विश्श्वाहादाभ्यᳬहविः ॥७८॥

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

सप्ततेऽअग्नेसमिधः सप्तजिह्वाः सप्तऽऋषयःसप्तधामप्प्रियाणि ।
सप्तहोत्राः सप्तधात्त्वायजन्तिसप्तयोनीरापृणस्वघृतेनस्वाहा ॥ ७९ ॥
शुक्रज्ज्योतिश्चचित्रज्ज्योतिश्चसत्यज्ज्योतिश्चज्ज्योतिष्मांश्च ।
शुक्रश्चऽऋतपाश्चात्यं हाः ॥ ८० ॥ ईदृङ्चान्न्यादृङ्चसदृङ्च-
प्प्रतिसदृङ्च । मितश्चसम्मितश्चसभराः ॥ ८१ ॥ ऋतश्चसत्य-
श्चध्रुवश्चधरुणश्च । धर्त्ताचव्विधर्त्ताचव्विधारयः ॥ ८२ ॥ ऋ-
तजिच्चसत्यजिच्चसेनजिच्चसुषेणश्च । अन्तिमित्रश्चदूरेऽअमित्रश्च-
गणः ॥ ८३ ॥ ईदृक्षासऽएतादृक्षासऽऊषुणःसदृक्षासःप्प्रतिसदृ-
क्षासऽएतन । मितासश्चसम्मितासोनोऽअद्यसभरसोमरुतोयज्ञेऽअ-

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

स्स्मिन् ॥ ८४ ॥ स्वतवाँश्च प्रघासीच सान्तपनश्च गृहमेधीच । क्रीडीच शाकीचोज्जेषी ॥ ८५ ॥ इन्द्रन्दैवीर्विशो मरुतोनुवर्त्मानोभवन्यथेन्द्रन्दैवीर्विशो मरुतोनुवर्त्मानोभवन् । एवमिमंयजमानन्दैवीश्च विशो मानुषीश्चानुवर्त्मानोभवन्तु ॥ ८६ ॥ इमꣳस्तनमूर्जस्वन्तन्धयापाम्प्रपीनमग्नेसरिरस्यमद्ध्ये । उत्संजुषस्वमधुमन्तमर्वन्त्समुद्रियꣳसदनमाविशस्व ॥ ८७ ॥ घृतम्मिमिक्षेघृतमस्ययोनिर्घृतेश्रितोघृतम्वस्यधाम । अनुष्वधमावहमादयस्वस्वाहाकृतंवृषभवक्षिहव्यम् ॥ ८८ ॥ समुद्रादूर्मिर्मधुमाँ २ उदारदुपाꣳशुनासममृतत्वमानट् । घृतस्यनामगुह्यंयदस्तिजिह्वादे-

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By SIddhanta eGangotri Gyaan Kosha

वानाममृतस्यनाभिः ॥ ८९ ॥ वयन्नामप्रब्रवामाघृतस्यास्मिन्य-
ज्ञेधारयामानमोभिः । उपब्रह्माशृणवच्छस्यमानञ्चतुःशृङ्गोवमी-
द्गौरऽएतत् ॥ ९० ॥ चत्वारिशृङ्गात्रयोऽअस्यपादाद्वेशीर्षेसप्तह-
स्तासोऽअस्य । त्रिधाबद्धोवृषभोरोरवीतिमहोदेवोमर्त्याँ२ऽआवि-
वेश ॥ ९१ ॥ त्रिधाहितम्पणिभिर्गुह्यमानङ्गविदेवासोघृतमन्न्ववि-
न्दन् । इन्द्रऽएकꣳसूर्य्यऽएकञ्जजानवेनादेकꣳस्वधयानिष्टतक्षुः
॥ ९२ ॥ एताऽअर्षन्तिहृद्यात्समुद्राच्छतव्रजारिपुणानावचक्षे ।
घृतस्यधाराऽअभिचाकशीमिहिरण्ययोवेतसोमध्यऽआसाम् ॥ ९३ ॥
सम्यक्स्रवन्तिसरितोनधेनाऽअन्तर्हृदामनसापूयमानाः । ए-

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

तेऽअर्षन्त्यूर्म्मयो॒घृतस्य॑मृ॒गाऽइ॑वक्षिप॒णोरीष॑माणाः ॥ ९४ ॥
सिन्धो॑रिवप्प्राद्ध्व॒नेशू॒घनासो॒व्वात॑प्प्रमियःपतयन्तिय॒ह्वाः ।   घृत-
स्य॒धारा॑ऽअरु॒षोनव्वा॒जीकाष्ठा॑भि॒न्दन्नू॒र्म्मिभि॒ःपिन्व॑मानः ॥ ९५ ॥
अ॒भिप्रव॑न्त॒सम॑नेव॒योषा॑ःकल्ल्या॒ण्ण्यःस्स्मय॑मानासो॒ऽअ॒ग्निम् ।   घृत-
स्य॒धारा॑ःस॒मिधो॒नसन्तता॒जु॒षा॒णोह॑र्य्यतिजातवे॑दाः ॥ ९६ ॥ कन्न्या-
ऽइ॒वव्व॒ह॒तुमेत॒वाऽउ॑ऽअञ्ज्यु॒ञ्जा॒नाऽअ॒भिचा॑कशीमि ।   य॒त्रसोम॑ःसु॒-
य॒तेय॒त्र॒य॒ज्ञोघृ॒तस्य॒धारा॑ऽअ॒भित॒त्पव॑न्ते ॥ ९७ ॥ अ॒भ्य॒र्ष॑त॒सु॒ष्टु॒तिङ्ग-
व्व्य॑मा॒जिम॒स्स्मा॒सु॒भ॒द्द्रा॒द्द्रवि॑णानिधत्त ।   इ॒मंय॒ज्ञन्न॑यतदे॒वता॑नोघृ॒-
तस्य॒धारा॒मधु॑मत्पवन्ते ॥ ९८ ॥ धाम॑न्तेविश्श्व॒म्भुव॑न॒मधि॑श्श्रि॒तम-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

न्तःसंमुद्द्रेहृद्द्यन्तरायुषि । अपामनीकेसमिथेयऽआभृतस्तमश्या-
ममधुमन्तन्तऽऊर्म्मिम् ॥ ९९ ॥ इति संहितायां सप्तदशोऽध्यायः ॥

## ❀ अथ अष्टादशोऽध्यायः ❀

ॐव्वाजंश्चमेप्रसवश्चमेप्रयतिश्चमेप्रसितिश्चमेधीतिश्चमेक्क्र
तुश्चमेस्वरश्चमेश्श्लोकश्चमेश्श्रवश्चमेश्श्रुतिश्चमेज्ज्योतिश्चमेस्व-
श्चमेयज्ञेनकल्पन्ताम् ॥ १ ॥ प्राणश्चमेपानश्चमेव्यानश्चमेसुश्चमे

१—'चछयोः शम्'(प्रा० ३।७) चकारछकारयोः परयोः विसर्जनीयः शकारमापद्यते । चकारोदाहरणं यथा 'वाजश्चमे' छकारोदाहरणं 'अतीचछन्दः' (१४।१८)इति ।

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

चित्तञ्चमऽआधीतञ्चमेवाक्चमेमनश्चमेचक्षुश्चमेश्रोत्रञ्चमेदक्षश्च-
मेबलञ्चमेयज्ञेनकल्पन्ताम् ॥ २ ॥ ओजश्चमेसहश्चमऽआत्माच-
मेतनूश्चमेशर्म्मचमेवर्म्मचमेङ्गानिचमेस्थीनिचमेपरूᳬंषिचमेशरीरा-
णिचमऽआयुश्चमेजराचमेयज्ञेनकल्पन्ताम् ॥ ३ ॥ ज्यैष्ठ्यञ्चमऽआ-
धिपत्यञ्चमेमन्युश्चमेभामश्चमेमश्चमेम्भश्चमेजेमाचमेमहिमाचमे-
वरिमाचमेप्रथिमाचमेवर्षिमाचमेद्राघिमाचमेवृद्धञ्चमेवृद्धिश्च-
मेयज्ञेनकल्पन्ताम् ॥ ४ ॥ सत्यञ्चमेश्रद्धाचमेजगच्चमेधनञ्चमे-
विश्वञ्चमेमहश्चमेक्रीडाचमेमोदश्चमेजातञ्चमेजनिष्यमाणञ्च
मेसूक्तञ्चमेसुकृतञ्चमेयज्ञेनकल्पन्ताम् ॥ ५ ॥ ऋतञ्चमेमृतञ्च-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

मेयक्ष्मश्चमेनामयच्चमेजीवातुश्चमेदीर्घायुत्वश्चमेनमित्रश्चमेभं-
यश्चमेसुखश्चमेशयनश्चमेसूषाश्चमेसुदिनश्चमेयज्ञेनकल्पन्ताम् ॥ ६ ॥
यन्ताचमेधर्ताचमेक्षेमश्चमेधृतिश्चमेविश्वश्चमेमहश्चमेसंविच्चमे-
ज्ञात्रश्चमेसूश्चमेप्रसूश्चमेसीरश्चमेलयश्चमेयज्ञेनकल्पन्ताम् ॥ ७ ॥
शश्चमेमयश्चमेप्रियश्चमेनुकामश्चमेकामश्चमेसौमनसश्चमेभगश्च-
मेद्रविणश्चमेभद्रश्चमेश्रेयश्चमेवसीयश्चमेयशश्चमेयज्ञेनकल्प-
न्ताम् ॥ ८ ॥ ऊर्क्चमेसूनृताचमेपयश्चमेरसश्चमेघृतश्चमेमधुचमे-
सग्धिश्चमेसपीतिश्चमेकृषिश्चमेवृष्टिश्चमेजैत्रश्चमऽऔद्भिद्यश्च-

१—अदनं ग्धिः अदः क्तिनि घस्लादेशे 'बहुलं छन्दसि' इत्युपधालोपे 'झलो-

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By SIddhanta eGangotri Gyaan Kosha

मेयज्ञेनकल्पन्ताम् ॥ ९ ॥ रयिश्चमेरायश्चमेपुष्टञ्चमेपुष्टिश्चमेव्वि-
भुचमेप्रभुचमेपूर्णञ्चमेपूर्णतरञ्चमेकुयवञ्चमेक्षितञ्चमेन्नञ्चमेक्षुच्चमेयज्ञे-
नकल्पन्ताम् ॥ १० ॥ व्वित्तञ्चमेव्वेद्यञ्चमेभूतञ्चमेभविष्यच्चमेसु-
गञ्चमेसुपत्थ्यञ्चमऽऋद्धञ्चमऽऋद्धिश्च मेक्लृप्तञ्चमेक्लृप्तिश्चमेम-
तिश्चमेसुमतिश्चमेयज्ञेनकल्पन्ताम् ॥ ११ ॥ व्व्रीहयश्चमेयवा-
श्चमेमाषाश्चमेतिलाश्चमेमुद्गाश्चमेखल्वाश्चमेप्रियङ्गवश्च-
मेणवश्चमेश्यामाकाश्चमेनीवाराश्चमेगोधूमाश्चमेमसूराश्चमे-

---

झलि' इति सलोपः। 'झषस्तथोर्दोधः' इति धत्वम्। धस्य जश्त्वम्। न च जश्त्वे क-
र्तव्येऽझोपस्य स्थानिवत्त्वम्। न पदान्त० इति सूत्रेण निषेधात्।

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

यज्ञेनकल्पन्ताम् ॥ १२ ॥ अश्माचमेमृत्तिकाचमेगिरयश्चमेपर्वता-
श्चमेसिकताश्चमेव्वनस्पतयश्चमेहिरण्यञ्चमेयश्चमेश्यामञ्चमेलो-
हञ्चमेसीसञ्चमेत्रपुचमेयज्ञेनकल्पन्ताम् ॥ १३ ॥ अग्निश्चमऽआ-
पश्चमेव्वीरुधश्चमऽओषधयश्चमेकृष्टपच्च्याश्चमेकृष्टपच्च्याश्चमे-
ग्राम्म्याश्चमेपशवऽआरण्ण्याश्चमेव्वित्तञ्चमेव्वित्तिश्चमेभूतञ्चमेभू-
तिश्चमेयज्ञेनकल्पन्ताम् ॥ १४ ॥ व्वसुचमेव्वसतिश्चमेकर्म्मचमेश-
क्तिश्चमेर्थश्चमऽएमश्चमऽइत्याचमेगतिश्चमेयज्ञेनकल्पन्ताम्
॥१५॥ अग्निश्चमऽइन्द्रश्चमेसोमश्चमऽइन्द्रश्चमेसविताचमऽइन्द्र-
श्चमेसरस्वतीचमऽइन्द्रश्चमेपूषाचमऽइन्द्रश्चमेबृहस्पतिश्चमऽइन्द्र-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

श्च्चमेयज्ञेनंकल्पन्ताम् ॥१६॥ मित्रश्च्चंमऽइन्द्रंश्च्चमेव्वरुंणश्च्चमऽइन्द्रं-
श्च्चमेधाताचंमऽइन्द्रंश्च्चमेत्त्वष्टांचमऽइन्द्रंश्च्चमेमरुतंश्च्चमऽइन्द्रंश्च्चमे-
व्विश्श्वेंचमेदेवाऽइन्द्रंश्च्चमेयज्ञेनंकल्पन्ताम् ॥१७॥ पृथिवीचंमऽइन्द्रं-
श्च्चमेन्तरिंक्षञ्चमऽइन्द्रंश्च्चमेद्यौश्च्चंमइन्द्रंश्च्चमेसमांश्च्चमइन्द्रंश्च्चमेन-
क्षंत्राणिचमऽइन्द्रंश्च्चमेदिशंश्च्चमऽइन्द्रंश्च्चमेयज्ञेनंकल्पन्ताम् ॥१८॥
अ॒ꣳशुश्च्चंमेर॒श्मिश्च्चमेदांब्भ्यश्च्चमेधिंपतिश्च्चमऽउपा॒ꣳशुश्च्चंमेन्त-
र्य्यामश्च्चंमऽऐन्द्रवायवश्च्चंमेमैत्रावरुणश्च्चंमऽआश्श्विनश्च्चंमेप्प्रति-
प्प्रस्थानंश्च्चमेशुक्क्रश्च्चंमेमन्थीचंमेयज्ञेनंकल्पन्ताम् ॥ १९ ॥ आ-
ग्रयणश्च्चंमेव्वैश्श्वदेवश्च्चंमेध्रुवश्च्चंमेवैश्वानरश्च्चंमऽऐन्द्राग्न-

Digitized By Siddhanta eGangotri Gyaan Kosha
श्च्चमेमहावैश्श्वदेवश्च्चमेमरुत्वतीयाश्च्चमेनिष्क्केवल्ल्यश्च्चमेसावि-
त्त्रश्च्चमेसारस्वतश्श्चमेपात्क्नीवतश्श्चमेहारियोजनश्चमेयज्ञेनकल्पन्ता-
म् ॥ २० ॥ स्रुचश्च्चमेचमसाश्च्चमेव्वायव्व्यानिचमेद्रोणकलशश्च्च-
मेग्ग्रावाणश्च्चमेधिषवणेचमेपूतभृच्चमऽआधवनीयश्च्चमेव्वेदिश्च्चमे-
बर्हिश्च्चमेऽवभृथश्च्चमेस्वगाकारश्च्चमेयज्ञेनकल्पन्ताम् ॥ २१ ॥
अग्निश्च्चमेघर्म्मश्च्चमेर्कश्च्चमेसूर्य्यश्च्चमेप्प्राणश्च्चमेश्श्वमेधश्च्चमे-
पृथिवीचमेदितिश्च्चमेदितिश्च्चमेद्यौश्च्चमेङ्गुलयश्शक्क्वरयोदिशा-
श्च्चमेयज्ञेनकल्प्पन्ताम् ॥२२॥ व्व्रतञ्चमऽऋतवश्च्चमेतपश्च्चमेसंव्व-
त्सरश्च्चमेहोरात्रेऽऊर्व्वष्ठीवेबृहद्रथन्तरेचमेयज्ञेनकल्प्पन्ताम् ॥२३॥
CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

एकाचमेतिस्रश्च्चमेतिस्रश्च्चमेपञ्चचमेपञ्चचमेसप्तचमेसप्तचमेन-
वचमेनवचमऽएकादशचमऽएकादशचमेत्रयोदशचमेत्रयोदशचमेपञ्च-
दशचमेपञ्चदशच्चमेसप्तदशचमेसप्तदशचमेनवदशच्चमेनवदशचमऽ-
एकविꣳशतिश्च्चमऽएकविꣳशतिश्च्चमेत्रयोविꣳशतिश्च्चमेत्रयोविꣳ-
शतिश्च्चमेपञ्चविꣳशतिश्च्चमेपञ्चविꣳशतिश्च्चमेसप्तविꣳशतिश्च्च-
मेसप्तविꣳशतिश्च्चमेनवविꣳशतिश्च्चमेनवविꣳशतिश्च्चमऽएकत्रि-
ꣳशच्चमऽएकत्रिꣳशच्चमेत्रयस्त्रिꣳशच्चमेयज्ञेनकल्पन्ताम् ॥ २४ ॥
चतस्रश्च्चमेष्टौचमेष्टौचमेद्वादशचमेद्वादशचमेषोडशचमेषोडशचमे-
व्विꣳशतिश्च्चमेविꣳशतिश्च्चमेचतुर्विꣳशतिश्च्चमेचतुर्विꣳशतिश्च्च-

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

मेष्टाविꣳशतिश्च्चमेष्टाविꣳशतिश्च्चमेद्वात्रिꣳशच्चमेद्वात्रिꣳशच्च-
मेषट्त्रिꣳशच्चमेषट्त्रिꣳशच्चमेचत्वारिꣳशच्चमेचत्वारिꣳशच्चमेच-
तुश्च्चत्वारिꣳशच्चमेचतुश्च्चत्वारिꣳशच्चमेष्टाचत्वारिꣳशच्चमेयज्ञे-
नकल्पन्ताम् ॥ २५ ॥ त्र्यविश्च्चमेत्र्यवीचमेदित्यवाट्चमेदित्यौ-
हीचमेपञ्चाविश्च्चमेपञ्चावीचमेत्रिवत्सश्च्चमेत्रिवत्साचमेतुर्य्यवाट्च-
मेतुर्य्यौहीचमेयज्ञेनकल्पन्ताम् ॥ २६ ॥ पष्ठवाट्चमेपष्ठौहीचमऽउ-
क्षाचमेव्वशाचमऽऋषभश्च्चमेव्वेहश्च्चमेनड्वाँश्च्चमेधेनुश्च्चमेयज्ञेन-
कल्पन्ताम् ॥ २७ ॥ व्वाजायस्वाहाप्प्रसवायस्वाहापिजायस्वाहाक्क्र-
तवेस्वाहाव्वसवेस्वाहाहर्प्पतयेस्वाहाह्नेमुग्धायस्वाहामुग्धायव्वै-

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized by Siddhanta eGangotri Gyaan Kosha

नद्दशिनायस्वाहाव्विनद्दशिनऽआन्त्यायनायस्वाहान्त्यायभौवनाय-
स्वाहाभुवनस्यपतयेस्वाहाधिपतयेस्वाहाप्प्रजापतयेस्वाहा । इयन्ते-
राण्मित्रायंयन्तासियमनऽऊर्ज्जेत्वाव्वृष्ट्यैत्वाप्प्रजानान्त्वाधिपत्याय
॥ २८ ॥ आयुर्य्यज्ञेनकल्पन्ताम्प्राणोयज्ञेनकल्पताञ्चक्षुर्य्यज्ञेनकल्प-
ताᳯंश्श्रोत्रंयज्ञेनकल्पताँव्वाग्ग्यज्ञेनकल्पताम्मनोयज्ञेनकल्पन्तामा-
त्मायज्ञेनकल्पताम्ब्रह्मायज्ञेनकल्पताञ्ज्योतिर्य्यज्ञेनकल्पन्ताᳯं
स्वर्य्यज्ञेनकल्पताम्पृष्ठंय्यज्ञेनकल्पताँय्यज्ञोयज्ञेनकल्पताम् । स्तोमं-
श्चयजुश्चऋक्चसामचबृहच्चरथन्तरञ्च । स्वर्द्देवाऽअगन्मामृताऽ-
अभूमप्प्रजापतेः प्रजाऽअभूमव्वेट्स्वाहा ॥ २९ ॥ व्वाजस्यनुप्प्रसवे-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

मातरम्महीमदितिन्नामव्वचसाकरामहे । यस्यामिदंव्विश्श्वम्भुवन-
माविवेशतस्यान्नोदेवःसविताधर्मसाविषत् ॥ ३० ॥ विश्वेऽअद्यमरु-
तोव्विश्श्वऽऊतीव्विश्श्वेभवन्त्वग्नयःसमिद्धाः । व्विश्श्वेनोदेवाऽअव-
सागमन्तुव्विश्श्वमस्तुद्रविणंव्वाजोऽअस्म्मे ॥ ३१ ॥ व्वाजोनःसप्तप्र-
दिशश्च्चतस्स्रोवापरावतः । व्वाजोनोव्विश्श्वैर्देवैर्द्धनसातावि‍हावतु
॥ ३२ ॥ व्वाजोनोऽअद्यप्रसुवातिदानंव्वाजोदेवाँ२ऋतुभिःकल्प-
याति । व्वाजोहिमासर्व्ववीरञ्जजानव्विश्श्वाऽआशाव्वाजपतिर्ज्जये-
यम् ॥ ३३ ॥ व्वाजःपुरस्तादुतमद्ध्यतोनोव्वाजोदेवान्हविषाव्व-
र्द्धयाति । व्वाजोहिमासर्व्ववीरञ्चकारसर्व्वाऽआशाव्वाजपतिर्भवे-

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha
यम् ॥ ३४ ॥ सम्मासृजामि॒पय॑सापृथि॒व्याꣳसम्मासृजाम्म्यद्भिरो-
षधीभिः । सोहंव्वाजꣳसनेयमग्ग्ने ॥ ३५ ॥ पय॑ꣳपृथि॒व्याम्पय॒ऽओ-
षधीषुपयोदि॒व्युन्तरिक्षे॒पयोधाः । पय॑स्वतीःप्प्र॒दिश॑ꣳसन्तुमह्यम्
॥ ३६ ॥ दे॒वस्य॑त्वासवि॒तुःप्प्र॑स॒वेश्विनो॑र्ब्बा॒हुभ्या॑म्पू॒ष्णोहस्ताभ्या-
म् । सर॑स्वत्यैव्वा॒चोय॒न्तुर्य॒न्त्रेणा॒ग्नेःसाम्म्रा॑ज्ज्येना॒भिषि॑ञ्चामि
॥ ३७ ॥ ऋ॒ताषाडृ॒तधा॑मा॒ग्निर्ग्गन्ध॒र्व्वस्तस्यौष॑धयोप्प्स॒रसो॒मुदो॒ना-
म॑ । सन॑ऽइ॒दम्ब्रह्म॑क्ष॒त्रम्पा॑तु॒तस्मै॒स्वाहा॒व्वाट्ता॒भ्य॒ःस्वाहा॑ ॥३८॥
स॒ꣳहि॒तोव्वि॒श्वसा॑मा॒सूर्य्यो॑गन्ध॒र्व्वस्तस्य॒मरी॑चयोप्प्स॒रस॑ऽआ॒युवो॒-
नाम॑ । सन॑ऽइ॒दम्ब्रह्म॑क्षत्रम्पा॑ततस्मै॒स्वाहा॒वाट्ता॒भ्यःस्वाहा॑ ॥३९॥
CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

सुषुम्णः सूर्य्यरश्मिश्चन्द्रमा गन्धर्व्वस्तस्य नक्षत्राण्यप्सरसो भेकुरयो नाम । स न ऽ इदम्ब्रह्म क्षत्रम्पातु तस्मै स्वाहा वाट् ताभ्यः स्वाहा ॥ ४० ॥ इषिरो विश्वव्यचा व्वातो गन्धर्व्वस्तस्यापो ऽ अप्सरस ऊर्ज्जो नाम । स न ऽ इदम्ब्रह्म क्षत्रम्पातु तस्मै स्वाहा व्वाट् ताभ्यः स्वाहा ॥ ४१ ॥ भुज्युः सुपर्णो यज्ञो गन्धर्व्वस्तस्य दक्षिणा ऽ अप्सरस स्तावा नाम । स न ऽ इदम्ब्रह्म क्षत्रम्पातु तस्मै स्वाहा व्वाट् ताभ्यः स्वाहा ॥ ४२ ॥ प्रजापतिर्व्विश्वकर्म्मा मनो गन्धर्व्वस्तस्य ऽ ऋक्सामान्यप्सरस ऽ एष्टयो नाम । स न ऽ इदम्ब्रह्म क्षत्रम्पातु तस्मै स्वाहा व्वाट् ताभ्यः स्वाहा ॥ ४३ ॥ स नो भुवनस्य पते प्रजापते यस्य त ऽ उपरि गृहा यस्य वेह । अस्मै ब्रह्म-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized by Sarayu Trust Foundation and eGangotri Gyaan Kosha

णेस्म्मैक्षत्त्रायमहिशर्म्मयच्छस्वाहा ॥ ४४ ॥ समुद्रोसिनभस्वानार्द्र-
दानुःशम्भूर्म्मयोभूरभिमाव्वाहिस्वाहामारुतोसिमरुताङ्गणःशम्भूर्म्म-
योभूरभिमाव्वाहिस्वाहावस्यूरसिदुवस्वाञ्छम्भूर्म्मयोभूरभिमाव्वाहि-
स्वाहा ॥ ४५ ॥ यास्तेऽअग्ग्नेसूर्य्येरुचोदिवमातन्न्वन्तिरश्म्मिभिः ।
ताभिर्न्नोऽअद्यसर्व्वाभिरुचेजनायनस्कृधि ॥ ४६ ॥ यावोदेवाःसूर्य्ये-
रुचोगोष्ष्वश्श्वेषुयारुचः इन्द्राग्ग्नीताभिःसर्व्वाभीरुचन्नोधत्तबृहस्पते
॥ ४७ ॥ रुचन्नोधेहिब्ब्राह्मणेषुरुचःराजसुनस्कृधि । रुचंविश्श्येषुशू-
द्द्रेषुमयिधेहिरुचारुचम् ॥ ४८ ॥ तत्त्वायामिब्ब्रह्मणाव्वन्दमानस्तदा-
शास्तेयजमानोहविर्ब्भिः । अहेडमानोव्वरुणेहबोध्युरुशःसमानऽ-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

आयुःप्रमोषीः ॥ ४९ ॥ स्वर्णघर्म्मः स्वाहा स्वर्णार्क्कः स्वाहा स्वर्ण-
शुक्क्रः स्वाहा स्वर्णज्ज्योतिः स्वाहा स्वर्णसूर्य्यः स्वाहा ॥ ५० ॥ अ-
ग्निंय्युनज्मि शवसा घृतेन दिव्यꣳ सुपर्णंव्वयसा बृहन्तम् । तेन व्व-
यङ्गमेम ब्रध्नस्य व्विष्टपꣳ स्वो रुहाणा अधिनाकमुत्तमम् ॥ ५१ ॥ [ श-
तम् १००० ] इमौ ते पक्षावजरौ पतत्रिणौ याभ्याꣳ रक्षाꣳस्यपहꣳस्य-
ग्ने ॥ ताभ्याम्पतेम सुकृतामु लोकंय्यत्र ऽऋषयो जग्मुः प्रथमजाः पु-
राणाः ॥ ५२ ॥ इन्दुर्दक्षः श्येन ऽऋतावा हिरण्यपक्षः शकुनो भुर-
ण्युः । महान्त्सधस्थे ध्रुव ऽआ निषत्तो नमस्ते ऽअस्तु मामा हिꣳसीः
॥ ५३ ॥ दिवो मूर्द्धासि पृथिव्या नाभिरूर्गपामोषधीनाम् । व्विश्वा-

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

युꣳशर्म्मसप्प्रथानमस्प्पथे ॥ ५४ ॥ व्विश्श्वस्यमूर्द्धन्नधितिष्ठसिश्श्रि-
तꣳसमुद्द्रेतेहृदयमप्प्स्वायुरपोदत्तोदधिम्भिन्त । दिवस्प्पर्ज्जन्न्यादु-
न्तरिक्षात्पृथिव्व्यास्ततोनोव्वृष्ट्याव ॥ ५५ ॥ इष्टोयज्ञोभृगुराशीर्द्दा-
व्वसुभिः । तस्यंनऽइष्टस्यप्प्रीतस्यद्रविणेहागमेः ॥ ५६ ॥ इष्टोऽअग्नि-
राहुतꣳपिपर्त्तुनऽइष्टꣳहविः । स्वगेदन्देवेब्भ्योनमः ॥५७॥ यदाकूता-
त्समसुस्स्रोद्धृदोवामनसोवासम्भृतञ्चक्षुषोवा । तदनुप्प्रेतसुकृतामुलो-
कंयत्त्रऽऋषयोजग्मुःप्प्रथमजाःपुराणाः ॥५८॥ एतꣳसधस्थपरितेद-
दामियमावहाच्छेवधिञ्जातवेदाः । अन्न्वागन्तायज्ञपतिर्व्वोऽअत्रतꣳ-
स्म्मंजानीतपरमेव्व्योमन् ॥ ५९ ॥ एतज्ज्ञानाथपरमेव्व्योमन्देवाःसध

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

स्स्थाव्विदद्रूपमस्य । यदागच्छात्पथिभिर्द्देवयानैरिष्टापूर्त्तेकृणवाथाविः-
रस्म्मै ॥६०॥ उद्बुध्यस्वाग्ग्नेप्प्रतिजागृहित्वमिष्टापूर्त्तेसꣳसृजेथामयः-
ञ्च । अस्म्मिन्त्सधस्त्थेऽअद्ध्युत्तरस्म्मिन्विश्श्वेदेवायजमानश्श्चसी-
दत ॥ ६१ ॥ येनवहसिसहस्रंयेनाग्ग्नेसर्व्ववेदसम् । तेनेमंय्यज्ञन्नोन-
यस्वर्द्देवेषुगन्तवे ॥ ६२ ॥ प्रस्तरेणपरिधिनास्स्रुचाव्वेद्याचबर्हिषा ।
ऋचेमंय्यज्ञन्नोनयस्वर्द्देवेषुगन्तवे ॥ ६३ ॥ यद्दत्तंय्यत्परादानंय्यत्पूर्त्तं
य्याश्श्चदक्षिणाः । तदग्ग्निर्व्वैश्श्वकर्म्मणःस्वर्द्देवेषुनोदधत् ॥६४॥ य-
त्रधाराऽअनपेतामधोर्ग्घृतस्यचयाः । तदग्ग्निर्व्वैश्श्वकर्म्मणःस्वर्द्देवेषु
नोदधत् ॥ ६५ ॥ अग्ग्निरस्मिजन्म्मनाजातवेदाघृतम्मेचक्क्षुरमृतम्मऽ-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

आसन्। अर्कस्त्रिधातूरजसोव्विमानोजस्रोघर्म्मोहुविरस्म्मि नाम ॥६६॥
ऋचोनामास्म्मियजूंषिनामास्म्मिसामानिनामास्म्मि । येऽअग्नयः
पाञ्चजन्न्याऽअस्याम्पृथिव्व्यामधि । तेषामसित्वमुत्तमः प्रनोजीवा-
तवेसुव ॥ ६७ ॥ व्वार्त्रहत्यायशवसेपृतनाषाह्यायच । इन्द्रत्त्वावर्त्त-
यामसि ॥ ६८ ॥ सहदानुम्पुरुहूतक्षियन्तमहुस्तमिन्द्रसम्पिणक्कुणा-
रुम् । अभिवृत्त्रंव्वर्द्धमानम्पियारुमपादमिन्द्रतवसाजघन्थ ॥ ६९ ॥
व्विनऽइन्द्रम्मृधोजहिनीचायच्छपृतन्न्यतः । योऽअस्म्माँ२ऽअभिदास-

१. इत्यत्र 'सहेः पृतनायाः' (३।७५) इत्यनेन पृतनाशब्दात्परस्य सहेः सस्य षत्वं निपात्यते।

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha
त्यर्धरङ्गमयातम॑÷ ॥ ७० ॥ मृगोनभीमः॑कुचरोगिरिष्ठाः॑परावतआ-
जंगन्थापरस्याः॑ । सृकꣳसꣳशायपविमिन्द्रतिग्ग्मंव्विशत्रून्ताढि-
व्विमृधोनुदस्व ॥ ७१ ॥ व्वैश्श्वानरोनऽऊतयऽआप्प्रयातुपरावत॑÷ ।
अग्निर्न॑÷सुष्टुतीरुप॑ ॥ ७२ ॥ पृष्ट्टोदिविपृष्ट्टोऽअग्निः॑पृथिव्व्यांपृष्ट्टो
व्विश्श्वाऽओषधीरविवेश । व्वैश्श्वानरः॑सहसापृष्ट्टोऽअग्निः॑सनोदिवा-
सरिषस्पातुनक्क्तम् ॥ ७३ ॥ अश्यामतङ्कामममग्ग्नेतवोतीऽअश्याम-
रयिꣳरयिवꣳसुवीरम् । अश्यामव्वाजमभिवाजयन्तोश्यामद्युम्म्न-
मजराजरन्ते ॥ ७४ ॥ व्वयन्तेऽअद्यररिमाहिकाममुत्तानहस्तानम-
सोपसद्द्य । यजिष्ठ्ठेनमनसायक्षिदेवानस्रेधतामन्म्मनाव्विप्प्रोऽअ-
CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

ग्ग्ने ॥७५॥ धामच्छदग्निरिन्द्रो ब्रह्मादेवोबृहस्पतिः । सचेतसो-
व्विश्श्वेदेवायज्ञम्प्रावन्तुनःशुभे ॥७६॥ त्वंयविष्ठदाशुषोनॄंःपाहिश्शृ-
णुधीगिरः । रक्षातोकमुतत्मना ॥ ७७ ॥ इति संहितायां अष्टा-
दशोऽध्यायः ॥

## ❀ अथैकोनविंशतितमोऽध्यायः ❀

ॐ स्वाद्वीन्त्वा स्वादुनातीव्रान्तीव्रेणामृतामृतेन । मधुमतीम्म-
धुमतासृजामिसꣳसोमेन । सोमोस्यश्शिवब्भ्यांम्पच्यस्वसरस्वत्यैप-
च्यस्वेन्द्रायसुत्राम्णेपच्यस्व ॥१॥ परीतोषिञ्चतासुतꣳसोमोयऽउत्तमꣳ
हविः । दधन्वायोनर्योऽअप्स्वन्तरासुषावसोममद्रिभिः ॥२॥ व्वा-

Jammu Kavya Mala Vidyalaya Collection

Digitized By Siddhanta eGangotri Gyaan Kosha

योःपूतःपवित्रेणप्रत्यङ्क्सोमोऽअतिद्रुतः । इन्द्रस्यय्युज्ज्यःसखा । व्वा-
योःपूतःपवित्रेणप्राङ्क्सोमोऽअतिद्रुतः । इन्द्रस्यय्युज्ज्यःसखा ॥३॥
पुनातितेपरिस्रुतꣳसोमꣳसूर्य्यस्यदुहिता । व्वारेणशश्वतातना ॥४॥
ब्रह्मक्षत्रम्पवतेतेजऽइन्द्रियꣳसुरयासोमःसुतऽआसुतोमदाय । शु-
क्रेणदेवदेवताःपिपृग्धिरसेनान्नंय्यजमानायधेहि ॥ ५ ॥ कुविदङ्ग-
यवमन्तोयवञ्चिद्यथादान्त्यनुपूर्वंव्वियूय । इहेहैषाङ्कृणुहिभोजना-
नियेबर्हिषोनमउक्तिंय्यजन्ति । उपयामगृहीतोस्याश्विभ्यान्त्वा
सरस्वत्यैत्वेन्द्रायत्वासुत्राम्णऽएषतेयोनिस्तेजसेत्वाव्वीर्य्यायत्वा-
बलायत्वा ॥६॥ नानाहिव्वान्देवहितꣳसदस्कृतम्मासꣳसृक्षाथाम्प-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha
रमेळ्योमन् । सुरात्वमसिशुष्मिणीसोमऽएषमामाहिᳬसीᳬस्वांय्योनिमाविशन्ती ॥ ७ ॥ उपयामगृहीतोस्याश्विनन्तेजः सारस्वतंव्वीर्य्यमैन्द्रम्बलम् । एषतेयोनिर्म्मोदायत्वानन्दायत्वामहसेत्वा ॥ ८ ॥ तेजोसितेजोमयिधेहिव्वीर्य्यमसिव्वीर्य्यम्मयिधेहिबलमसिबलम्मयिधेह्योजोस्योजोमयिधेहिमन्न्युरसिमन्न्युम्मयिधेहिसहोसिसहोमयिधेहि ॥ ९ ॥ याव्याघ्रंव्विषूचिकोभौव्वृकञ्चरक्षति । श्येनम्पतत्रिणᳬसिᳬहᳬसेमम्पात्वᳬहसः ॥१०॥ यदापिपेषमातरम्पुत्रःप्रमुदितोधयन् ॥ एतत्तदग्नेऽअनृणोभवाम्म्यहतौपितरौमया । सम्पृचस्थसम्माभद्रेणपृङ्क्तविपृचस्थविमापाप्मनापृङ्क्त ॥ ११ ॥ देवायज्ञ-
CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

मंतन्न्वतभेषजम्भिषजाश्श्विना । व्वाचासरस्वतीभिषगिन्द्रायेन्द्रि-
याणिदधतः ॥१२॥ दीक्षायैरूपꣳशष्पाणिप्प्रायणीयस्यतोक्क्मानि ।
क्क्रयस्यरूपꣳसोमस्यलाजाः सोमाꣳशवोमधु ॥ १३ ॥ आतित्थ्य-
रूपम्मासरम्महावीरस्यनग्नहुः । रूपमुपसदामेतत्तिस्रोरात्रीःसुरा-
सुता ॥ १४ ॥ सोमस्यरूपङ्क्रीतस्यपरिस्रुत्परिषिच्यते ॥ अश्श्वि-
भ्यान्दुग्धम्भेषजमिन्द्रायैन्द्रꣳसरस्वत्या ॥१५॥ आसन्दीरूपꣳराजा-
सन्द्यैव्वेद्यैकुम्भीसुराधानी । अन्तरऽउत्तरवेद्यारूपङ्कारोतरो-
भिषक् ॥ १६ ॥ व्वेद्याव्वेदिःसमाप्प्यतेबर्हिषाबर्हिरिन्द्रियम् । यूपे-
नयूपऽआप्प्यतेप्प्रणीतोऽअग्निरग्निना ॥१७॥ हविर्द्धानꣳसदश्श्विना-

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

श्रीद्‌भ्रंव्वत्सरस्वती । इन्द्रायैन्द्रꣳसदस्कृतम्पत्नीशालङ्गार्हपत्यं
॥ १८ ॥ प्रैषेभिः प्रैषानाप्नोत्याप्रीभिराप्रीर्व्वज्ञस्य । प्रयाजेभिरनु-
याजान्व्वषट्कारेभिराहुतीः ॥ १९ ॥ पशुभिः पशूनाप्नोतिपुरोडा-
शैर्हवीꣳष्ष्या । छन्दोभिः सामिधेनीर्य्याज्याभिर्व्वषट्कारान् ॥२०॥
धानाः करम्भः सक्तवः परीवापः पयोदधि । सोमस्यरूपꣳहविषऽ-
आमिक्षाव्वाजिनम्मधु ॥ २१ ॥ धानानाꣳरूपङ्कुवलम्परीवापस्यगो-
धूमाः ॥ सक्तूनाꣳरूपम्बदरमुपवाकाः करम्भस्य ॥२२॥ पयसो-
रूपंय्यद्यवादध्नोरूपङ्कर्कन्धूनि । सोमस्यरूपंव्वाजिनꣳसौम्म्यस्य-
रूपमामिक्षा ॥ २३ ॥ आश्रावयेतिस्तोत्रियाः प्रत्याश्रावोऽअनु-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

रूपᳬं । यजेतिंधाय्यारूपम्प्रगाथायेयजामहाः ॥ २४ ॥ अर्द्धऽऋचै-
रुक्थानांᳫंरूपम्पदैराप्नोतिनिविदंः । प्रणवैःशस्त्राणांᳫंरूपम्प-
यंसासोमंऽआप्यते ॥ २५ ॥ अश्विभ्यांम्प्रातᳬंसवनमिन्द्रेणैन्द्र-
म्माध्यंन्दिनम् । वैश्वदेवᳬंसरस्वत्यातृतीयमाप्तᳬंसवनम् ॥२६॥
वायव्यैर्वायव्यान्याप्नोतिसतेनद्रोणकलशम् । कुम्भीभ्यांमम्भृ-
णौसुतेस्थालीभिस्थालीराप्नोति ॥ २७ ॥ यजुर्भिराप्यन्तेग्रहाग्रहै-
स्तोमाश्श्चविष्टुतीᳬं । छन्दोभिरुक्थाशस्त्राणिसाम्नावभृथऽआ-
प्यते ॥२८॥ इडाभिर्भक्षानाप्नोतिसूक्तवाकेनाशिषंः । शंयुना-
पत्नीसंयाजान्त्समिष्टयजुषासᳬंस्थाम् ॥ २९ ॥ व्रतेनदीक्षामाप्नो-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

तिदीक्षयाप्नोतिदक्षिणाम् । दक्षिणाश्श्रद्धामाप्नोतिश्रद्धयासत्त्यमाप्प्यते
॥ ३० ॥ एतावद्रूपंय्यज्ञस्ययद्देवैर्ब्रह्मणाकृतम् । तदेतत्सर्व्वमा-
प्नोतियज्ञेसौत्रामणीसुते ॥३१॥ सुरावन्तम्बर्हिषदꣳसुवीरंय्यज्ञꣳहि-
न्वन्तिमहिषानमोभिः ॥ दधानाꣳसोमन्दिविदेवतासुमदेमेन्द्रंय्यजमा-
नाꣳस्वर्काः ॥३२॥ यस्तेरसꣳसम्भृतऽओषधीषुसोमस्यशुष्मꣳसुरयासु
तस्य । तेनजिन्वयजमानम्मदेनसरस्वतीमश्विनाविन्द्रमग्निम् ॥३३॥
यमश्विनानमुचेरासुरादधिसरस्वत्यसुनोदिन्द्रियाय । इमन्तꣳशु-
क्रम्मधुमन्तमिन्दुꣳसोमꣳराजानमिहभक्षयामि ॥ ३४ ॥ यदत्ररि-
प्तꣳरसिनः सुतस्ययदिन्द्रोऽअपिबच्छचीभिः । अहन्तदस्यमनसा-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha
शिवेनसोमꣳराजानमिहभक्षयामि ॥३५॥ पितृभ्यः स्वधायिभ्यः
स्वधानमः पितामहेभ्यः स्वधायिभ्यः स्वधानमःप्रपितामहे-
भ्यःस्वधायिभ्यःस्वधानमः । अक्षन्पितरोमीमदन्तपितरोती-
तृपन्तपितरःपितरःशुन्धध्वम् ॥ ३६ ॥ पुनन्तुमापितरःसोम्या-
सः पुनन्तुमापितामहाःपुनन्तुप्रपितामहाःपवित्रेणशतायुषा । पुन-
न्तुमापितामहाःपुनन्तुप्रपितामहाः । पवित्रेणशतायुषाविश्वमा-
युर्व्यश्नवै ॥ ३७ ॥ अग्नऽआयूꣳषिपवसऽआसुवोर्ज्जमिषंचनः ।
आरेबाधस्वदुच्छुनाम् ॥३८॥ पुनन्तुमादेवजनाःपुनन्तुमनसाधियः ।
पुनन्तुविश्वाभूतानिजातवेदःपुनीहिमा ॥ ३९ ॥ पवित्रेणपुनीहि-
CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

माशुक्क्रेणदेवदीद्द्यत् । अग्नेक्क्रत्वाक्क्रतूँ१ऽरनु ॥ ४० ॥ यत्तेपवि
त्त्रमर्चिष्य्यग्नेव्विततमन्तरा ॥ ब्रह्म्मतेनपुनातुमा ॥ ४१ ॥ पव-
मानःसोऽअद्द्यनः पवित्त्रेणव्विचर्षणिः । यःपोतासपुनातुमा ॥४२॥
उभाब्भ्यान्देवसवितःपवित्त्रेणसवेनच । माम्पुनीहिव्विश्श्वतः ॥४३॥
व्वैश्श्वदेवीपुनतीदेव्व्यागाद्यस्यामिमाबह्व्यस्तन्न्वोव्वीतपृष्ठाः ।
तयामन्दन्तःसधमादेषुव्वयᳬस्यामपतयोरयीणाम् ॥ ४४ ॥ येस-
मानाःसमनसःपितरोयमराज्ज्ये । तेषाँल्लोकःस्वधानमोयज्ञोदेवेषु-
कल्पताम् ॥ ४५ ॥ येसमानाःसमनसोजीवाजीवेषुमामकाः ।
तेषाᳬश्श्रीर्म्मयिकल्पतामस्मिँल्लोकेशतᳬसमाः ॥ ४६ ॥ द्वेसृतीऽ-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

अंश्रृणवम्पितृणामहन्देवानामुतमर्त्यानाम् । ताभ्यामिदंविश्श्वमेज-
त्समेतियदन्तरापितरम्मातरञ्च ॥४७॥ इदᳬहविःप्रजननम्मेऽअस्तु-
दशवीरᳬसर्व्वगणᳪस्वस्तये । आत्मसनिप्प्रजासनिपशुसनिलोकस-
न्यभयसनि । अग्निःप्प्रजाम्बहुलाम्मेकरोत्वन्नम्पयोरेतोऽअस्म्मासुधत्त-
॥४८॥ उदीरतामवरऽउत्परासऽउन्मध्यमाःपितरःसोम्म्यासः। असुं-
यऽईयुरवृकाऽऋतज्ञास्तेनोवन्तुपितरोहवेषु ॥४९॥ अङ्गिरसोनःपित-
रोनवग्वाऽअथर्व्वाणोभृगवःसोम्म्यासः । तेषांव्वयᳬसुमतौयज्ञि-
यानामपिभद्रेसौमनसेस्याम ॥ ५० ॥ येनःपूर्वेपितरःसोम्म्यासो-
नूहिरेसोमपीथंव्वसिष्ठाः । तेभिर्यमःसᳬरराणोहवीᳪष्युशन्नुश-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

ह्विभिः प्रतिकामममत्तु ॥ ५१ ॥ त्वꣳसोमप्प्रचिकितोमनीषात्वꣳर-
जिष्ठमनुनेषिपन्थाम् । तवप्प्रणीतीपितरोनऽइन्दोदेवेषुरत्न्नमभजन्त-
धीराः ॥ ५२ ॥ त्वयाहिनः पितरः सोमपूर्व्वेकर्म्माणिचक्क्रुः पवमानधीराः ।
मानधीराः । व्वन्न्वन्नवातःपरिधीं१ऽरपोर्ण्णुव्वीरेभिरश्श्वैर्म्मघवाभ-
वानः ॥ ५३ ॥ त्वꣳसोमपितृभिः संव्विदानोनुद्यावापृथिवीऽआत-
तन्थ । तस्म्मैतऽइन्दोहविषाव्विधेमव्वयꣳस्यामपतयोरयीणाम् ॥५४॥
बर्हिषदःपितरऽऊत्युर्व्वागिमावोहव्याचकृमाजुषद्ध्वम् । तऽआगता-
वसाशन्तमेनाथानःशंय्योररपोदधात ॥ ५५ ॥ 'आहम्पितन्त्सुविद-
त्राँ२ऽअवित्सिनपातञ्चव्विक्क्रमणञ्चव्विष्ण्णोः । बर्हिषदोयेस्वधया

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

सुतस्यभजन्तपित्वस्तऽइहागमिष्ठाः ॥ ५६ ॥ उपहूताःपितरःसो-
म्म्यासोबर्हिष्ष्येषुनिधिषुप्प्रियेषु । तऽआगमन्तुतऽइहश्श्रुवन्त्वधि-
ब्ब्रुवन्तुतेवन्त्वस्म्मान् ॥ ५७ ॥ आयन्तुनःपितरःसोम्म्यासोग्नि-
ष्ष्वात्ताःपथिभिर्देवयानैः । अस्म्मिन्यज्ञेस्वधयामदन्तोधिब्ब्रुवन्तु-
तेवन्त्वस्म्मान् ॥५८॥ अग्निष्ष्वात्ताःपितरऽएहगच्छतसदःसदःस-

१. बर्हिः शब्दात् दत्तमित्यर्थे 'बर्हिषिदत्तम्' ४।४।११९। इत्यनेन यत्प्रत्यये।

२. 'एदोद्भ्यां पूर्वमकारः (४।६१) एकारौकाराभ्यां पर ऋकारः पूर्वरूप-मापद्यते। तेऽप्सरसाम् २४।३७। क्वेदोऽसि (२।२१) स्तुपोऽसि (२।२) इत्यादिषु ज्ञेयम्।

CC-0, Panini Kanya Maha Vidyalaya Collection

Digitized By Siddhanta eGangotri Gyaan Kosha

दतसुप्प्रणीतयः । अत्ताहवीᳪषिप्प्रयतानिबर्हिष्ष्यथारयिᳬसर्व्ववी-
रन्दधातन ॥ ५९ ॥ येऽअग्निष्ष्वात्तायेऽअनग्निष्ष्वात्तामद्ध्येदि-
वः स्वधयामादयन्ते । तेब्भ्यः स्वराडसुनीतिमेतांय्यथावशन्तन्व-
ङ्कल्पयाति ॥ ६० ॥ अग्निष्ष्वात्तानृतुमतोहवामहेनाराशᳬसे-
सोमपीथंय्यऽआशुः । तेनोव्विप्रासः सुहवाभवन्तुव्वयᳪस्याम-
पतयोरयीणाम् ॥ ६१ ॥ आच्याजानुदक्षिणतोनिषद्येमंय्यज्ञमभि-
गृणीतव्विश्वे । माहिᳬसिष्टपितरः केनचिन्नोयद्वऽआगः पुरुष-
ताकराम ॥ ६२ ॥ आसीनासोऽअरुणीनामुपस्थेरयिन्धत्तदाशुषे-
मर्त्याय । पुत्रेभ्यः पितरस्तस्यवस्वः प्प्रयच्छततऽइहोर्ज्जन्दधात

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

॥ ६३ ॥ समंग्नेकव्व्यवाहनत्वंचिन्न्मन्न्यसेरयिम् । तन्नोंगीर्ब्भिः
श्श्रवाय्यन्देवत्राप्नयायुजम् ॥ ६४ ॥ योऽअग्निःकंव्व्यवाहनः
पितृन्न्यक्षंदृतावृधः । प्रेदुहव्व्यानिव्वोचतिदेवेब्भ्यंश्श्चपितृब्भ्य-
ऽआ ॥ ६५ ॥ त्वमंग्नऽईडितःकंव्व्यवाहनावाड्ढव्व्यानिसुरभीणिं
कृत्वी । प्रादाःपितृब्भ्यंःस्वधयातेऽअंक्षन्नद्धित्वन्देवप्प्रयंताहवींषि
॥ ६६ ॥ येचेहपितरोयेचनेहयाँश्श्चंव्विद्ममयाँ२ऽउंचनप्प्रंविद्म । त्वं-
व्वेत्थयतितेजातवेदःस्वधाभिर्य्यज्ञः सुकृंतञ्जुषस्व ॥ ६७ ॥ इदम्पितृ-
ब्भ्योनमोऽअस्त्वद्ययेपूर्व्वांसोयऽउपरासऽईयुः । येपार्थिवेरजस्यानि-
षंत्तायेवानूनः सुवृजनासुविक्षु ॥ ६८ ॥ अधायथानःपितरःपरासः-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

प्रत्नासोऽअग्नऽऋतमाशुषाणाः । शुचीदयन्दीधितिमुक्क्थशासः
क्षामाभिन्दन्तोऽअरुणीरपव्व्रन् ॥ ६९ ॥ उशन्तस्त्वानिधीमह्युशन्तः समिधीमहि ॥ उशन्नुशतऽआवहपितॄन्हविषेऽअत्तवे ॥ ७० ॥
अपाम्फेनेननमुचेः शिरऽइन्द्रोदवर्त्तयः ॥ व्विश्श्वायदजयस्पृधः
॥ ७१ ॥ सोमोराजामृतः सुतऽऋजीषेणाजहान्मृत्युम् । ऋतेनसत्त्यमिन्द्रियम्व्विपानः शुक्रमन्धसऽइन्द्रस्येन्द्रियमिदम्पयोमृत-

---

१. 'दर्दुरौदरदेशौ तु प्रफुल्लेते पुनर्यथा । एवं वर्णाः प्रयोक्तव्याः 'अपास्फेने' निदर्शनम्' ( या० शि० श्लो० ६५ ) दर्दुरस्य-मण्डूकेति प्रसिद्धजन्तोः उदरदेशौ प्रफुल्लेते वायुभरणेन स्थूलौ भवतः ।

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha
म्मधु ॥ ७२ ॥ अद्भ्यःक्षीरंव्यपिबत्क्रुङ्ङाङ्गिरसोधिया । ऋतेन-
सत्यमिन्द्रियंव्विपानꣳ शुक्रमन्धसऽइन्द्रस्येन्द्रियमिदम्पयोमृतम्मधु
॥७३॥ सोममद्भ्योव्यपिबच्छन्दसाहꣳसःशुचिषत् । ऋतेनसत्य-
मिन्द्रियंव्विपानꣳशुक्रमन्धसऽइन्द्रस्येन्द्रियमिदम्पयोमृतम्मधु ॥७४॥
[शतम् ११००] अन्नात्परिस्रुतोरसम्ब्रह्मणाव्यपिबत्क्षत्रम्पयꣳसोम-
म्प्रजापतिः । ऋतेनसत्यमिन्द्रियंव्विपानꣳशुक्रमन्धसऽइन्द्रस्येन्द्रि-
यमिदम्पयोमृतम्मधु ॥ ७५ ॥ रेतोमूत्रंव्विजहातियोनिम्प्रविशदिन्द्रि-
यम् । गर्ब्भोजरायुणावृतऽउल्बञ्जहातिजन्मना । ऋतेनसत्यमि-
न्द्रियंव्विपानꣳशुक्रमन्धसऽइन्द्रस्येन्द्रियमिदम्पयोमृतम्मधु ॥७६॥
CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

दृष्ट्वारूपेव्याकरोत्सत्यानृतेप्रजापतिः ॥ अश्रद्धामनृतेदधाच्छ्-
द्धांसत्येप्रजापतिः । ऋतेनसत्यमिन्द्रियंविपानशुक्रमन्धसऽ-
इन्द्रस्येन्द्रियमिदम्पयोमृतम्मधु ॥ ७७ ॥ वेदेनरूपेव्यपिबत्सुतासु-
तोप्रजापतिः । ऋतेनसत्यमिन्द्रियंविपानशुक्रमन्धसऽइन्द्रस्ये-
न्द्रियमिदम्पयोमृतम्मधु ॥ ७८ ॥ दृष्ट्वापरिस्रुतोरसंशुक्रेणशु-
क्रंव्यपिबत्पयःसोमम्प्रजापतिः । ऋतेनसत्यमिन्द्रियंविपान-
शुक्रमन्धसऽइन्द्रस्येन्द्रियमिदम्पयोमृतम्मधु ॥७९॥ सीसेनतन्त्र-
म्मनसामनीषिणऽऊर्णासूत्रेणकवयोवयन्ति । अश्विनायज्ञसं-
वितासरस्वतीन्द्रस्यरूपंवरुणोभिषज्यन् ॥ ८० ॥ तदस्यरूपममृत-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

ꣳशचीभिस्तिस्रोदधुर्देवताꣳसꣳरराणाः । लोमानिशष्पैर्बहुधान-
तोक्मभिस्त्वगस्यमाꣳसमभवन्नलाजाः ॥ ८१ ॥ तदश्विनाभि-
षजारुद्रवर्त्तनीसरस्वतीव्वयतिपेशोऽअन्तरम् । अस्थिमज्जानम्मा-
सरैꣳकारोतरेणदधतोगवान्त्वचि ॥८२॥ सरस्वतीमनसापेशलंव्वसु-
नासत्याब्भ्यांव्वयतिदर्शतंव्वपुः । रसम्परिस्रुतानरोहितन्नग्नहुर्द्धी-
रस्तसरन्नवेम ॥ ८३ ॥ पयसाशुक्रममृतञ्जनित्रꣳसुरयामूत्राज्जन-
यन्तरेतः । अपामतिन्दुर्म्मतिम्बाधमानाऽऊवद्ध्यंव्वातꣳसब्बुन्त-
दारात् ॥ ८४ ॥ इन्द्रः सुत्रामाहृदयेनसत्यम्पुरोडाशेनसविताज-
जान । यकृत्क्लोमानंव्वरुणोभिषज्यन्मतस्नेवायव्यैर्न्नमिनातिपि-

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

त्तम् ॥ ८५ ॥ आन्त्राणिस्थालीम्मधुपिन्न्वमानागुदाःपात्राणिसुदु-
घानधेनुः । श्येनस्यपत्रन्नप्लीहाशचीभिरासन्दीनाभिरुदरन्नमाता
॥ ८६ ॥ कुम्भोव्वनिष्ठुर्ज्जनिताशचीभिर्ष्यस्मिन्नग्ग्रेषोन्न्याङ्गर्ब्भोऽ-
अन्तः । प्लाशिर्व्यक्तःशतधारऽउत्सोदुहेनकुम्भीस्वधाम्पितृब्भ्यः ॥
॥ ८७ ॥ मुखꣳसदस्यशिरऽइत्सतेनजिह्वापवित्रमश्श्विनासन्त्सर-
स्वती । चप्पन्नपायुर्ब्भिषगस्यव्वालोव्वस्तिर्न्नशेपोहरसातरस्वी ॥८८॥
अश्श्विब्भ्याञ्चक्षुरमृतङ्ग्रहाब्भ्याञ्छागेनतेजोहविषाशृतेन । पक्ष्माणि-
गोधूमैःकुवलैरुतानिपेशोनशुक्क्रमसितंव्वसाते ॥ ८९ ॥ अविर्न्न-
मेषोनसिव्वीर्ष्यायप्प्राणस्यपन्थाऽअमृतोग्ग्रहाब्भ्याम् । सरस्वत्युप-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

वाकैर्व्यानन्नस्यानिबर्हिर्ब्बदरैर्ज्जजान ॥ ९० ॥ इन्द्रस्यरूपमृषभो-
बलायकर्णाभ्याᳪश्रोत्रममृतङ्ग्रहाभ्याम् । यवानबर्हिर्भ्रुविकेस-
राणिकर्कन्धुयज्ञेमधुसारघम्मुखात् ॥ ९१ ॥ आत्मन्नुपस्थेनवृकस्य-
लोममुखेश्मश्रूणिनव्याघ्रलोम । केशानशीर्षन्न्यशसेश्रियैशिखा-
सिᳪहस्यलोमत्त्विषिरिन्द्रियाणि ॥ ९२ ॥ अङ्गान्न्यात्मन्भिषजात-
दश्विनात्मानमङ्गैᳪसमधात्सरस्वती । इन्द्रस्यरूपᳪशतमानमायु-
श्चन्द्रेणज्ज्योतिरमृतन्दधानाः ॥ ९३ ॥ सरस्वतीयोन्न्याङ्गर्भमन्तर-
श्विभ्याम्पत्नीसुकृतम्बिभर्ति । अपाᳪरसेनवरुणोनसाम्नेन्द्रᳪ-
श्रियैजनयन्नप्सुराजा ॥ ९४ ॥ तेजःपशूनाᳪहविरिन्द्रियावत्प-

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

रि॒स्रु॒ताप॑य॒ꣳसासा॒रघ॒म्मधु॑ । अ॒श्विभ्य॒न्दु॒ग्ध॒म्भि॒ष॒जा॒सर॑स्वत्या-सु॒तासु॒ताभ्या॑म॒मृत॒ꣳसोम॒ऽइन्दुः॑ ॥ ९५ ॥ इति संहितायामेकोनविंशतितमोऽध्यायः ॥

## ❀ अथ विंशोऽध्यायः ❀

[1]ओ३म् क्ष॒त्त्रस्य॒ योनि॑रसि क्ष॒त्त्रस्य॒ नाभि॑रसि । मा त्वा॑ हिꣳसी॒न्मा मा॑ हिꣳसीः

---

१. एकमात्रो भवेद् ह्रस्वो द्विमात्रो दीर्घ उच्यते। त्रिमात्रस्तु प्लुतो ज्ञेयो व्यञ्जनं चाऽर्धमात्रिकम्॥ प्रणवं तु प्लुतं कुर्याद् व्याहृतीर्मात्रिका विदुः। (या. श्लो. १६-१७)

२. के पुरुषाः वर्णोच्चारणे असमर्थाः तान् आह—

न करालो न लम्बोष्ठो नाऽव्यक्तो नाऽनुनासिकः। गद्गदो बद्धजिह्वश्च न वर्णान् वक्तुमर्हति॥ (या० श्लो० २६)

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

सीॅं ॥ १ ॥ निषसाद धृतव्रतो वरुणः पस्त्यास्वा । साम्राज्याय सुक्रतुः । मृत्योः पाहि विद्योत्पाहि ॥ २ ॥ देवस्य त्वा सवितुः

---

३. शङ्कितं भीतमुद्धृष्टमव्यक्तमनुनासिकम् । काकस्वरं मूर्द्धिगतं तथा स्थान-विवर्जितम् ॥ विस्वरं विरसं चैव विश्लिष्टं विषमाहतम् । व्याकुलं तालहीनं च पाठदोषाश्चतुर्दश ॥ (या० २८।२९)

४. हस्तसंनिवेशनप्रकारमाह—उत्तानं सोन्नतं किञ्चित् सुव्यक्ताङ्गुलिरक्षितम् । स्वरविच्च करं कुर्यात्प्रादेशाद्देशगामिनम् ॥ उत्तानम्—उपरितलम् । सोन्नतम्—अङ्गुल्यग्रेषु औन्नत्यविशिष्टम् । (चा० ५१)

५. स्वरिते त्र्यङ्गुलं विद्यान्निपाते तु षडङ्गुलम् । उत्थाने तु नवाङ्गुल्यमेत-त्स्वारस्य लक्षणम् ॥

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

प्प्रंसुवेशिवनोर्बाहुभ्याम्पूष्णोहस्ताभ्याम् । अशिवनोर्भैषज्ज्ये-
नतेजसेब्ब्रह्मवर्च्चसायाभिषिञ्चामिसरस्वत्यैभैषज्ज्येनव्वीर्य्यायान्ना-
द्यायाभिषिञ्चामीन्द्रस्येन्द्रियेणबलायश्रियैयशसेभिषिञ्चामि ॥ ३ ॥
कोऽसिकतमोसिकस्म्मैत्वाकायत्वा । सुश्लोकसुमङ्गलसत्त्यराजन् ॥४॥
शिरोमेश्रीर्य्यशोमुखन्त्विषिःकेशाश्चश्म्मश्रूणि । राजामेप्प्राणो-
ऽअमृतꣳसम्म्राट्चक्षुर्व्विराट्श्श्रोत्रम् ॥ ५ ॥ जिह्वामेभद्रंव्वाङ्महोम-
नोमन्न्युस्स्वराड्भामः । मोदाःप्प्रमोदाऽअङ्गुलीरङ्गानिमित्त्रम्मेस-
हः ॥६॥ बाहूमेबलमिन्द्रियꣳहस्तौमेकर्म्मव्वीर्य्यम् । आत्क्माक्षत्र-
मुरोमम ॥ ७ ॥ पृष्ठीर्मेराष्ट्रमुदरमꣳसौग्रीवाश्चश्श्रोणी । ऊरूऽ-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

अरत्नीजानुनीव्विशोमेङ्गानिसर्व्वतः ॥ ८ ॥ नाभिम्मेंचित्तंव्विज्ञानं-
म्पायुर्म्मेपचितिर्भसत् । आनन्दनन्दावाण्डौमेभगꣳसौभाग्ग्यम्प-
सः । जङ्घाभ्याम्पद्भ्यान्धर्म्मोस्मिव्विशिराजाप्प्रतिष्ठितः ॥९॥
प्प्रतिक्षत्त्रेप्प्रतितिष्ठामिराष्ट्रेप्प्रत्यश्श्वेषुप्प्रतितिष्ठामिगोषु । प्रत्य-
ङ्गेषुप्प्रतितिष्ठाम्म्यात्त्मन्प्रतिप्प्राणेषुप्प्रतितिष्ठामिपुष्टेप्प्रतिद्द्या-
वापृथिव्व्योःप्प्रतितिष्ठामियज्ञे ॥ १० ॥ त्रयादेवाऽएकादशत्त्र-
यस्त्रिꣳशाःसुराधसः । बृहस्प्पतिपुरोहितादेवस्यसवितुःसवे ।
देवादेवैरवन्तुमा ॥ ११ ॥ प्रथमाद्वितीयैर्द्वितीयास्तृतीयै-
स्तृतीयाꣳसत्येनसत्त्यंय्यज्ञेनयज्ञोयजुर्भिर्य्यजूꣳषिसामभिꣳसामान्यृ-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

ग्भिर्ऋचं ÷ पुरोनुवाक्याभिः पुरोनुवाक्या याज्याभिर्याज्या व्वष-
ट्कारैर्व्वषट्कारा ऽआहुतिभिराहुतयो मे कामान्त्समर्द्धयन्तु भूः स्वाहा
॥ १२ ॥ लोमानि प्प्रयतिर्म्मम त्वङ्ङ्म ऽआनतिरागतिः । माᳪस-
म्म ऽउपनतिर्व्वस्वस्थि मज्जा म ऽआनतिः ॥ १३ ॥ यद्देवा देवहेड-
नन्देवासश्चकृमा व्वयम् । अग्निर्म्मा तस्मादेनसो व्विश्श्वान्मुञ्चत्व-
ᳪहसः ॥ १४ ॥ यदि दिवा यदि नक्तमेनाᳪसि चकृमा व्वयम् ।
व्वायुर्म्मा तस्मादेनसो व्विश्श्वान्मुञ्चत्वᳪहसः ॥ १५ ॥ यदि जाग्र-
द्यदि स्वप्न ऽएनाᳪसि चकृमा व्वयम् । सूर्य्यो मा तस्मादेनसो व्वि-
श्श्वान्मुञ्चत्वᳪहसः ॥ १६ ॥ यद्ग्रामे यदरण्ण्ये यत्सभायां यदिन्द्रि-

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized by Siddhanta eGangotri Gyaan Kosha
ये । यच्छूद्रेयदर्य्येयदेनश्चकृमाव्वयंय्यदेकस्याधिधर्म्मणितस्याव-
यजनमसि ॥ १७ ॥ यदापोऽअघ्न्याऽइतिव्वरुणेतिशपामहेततोव्व-
रुणनोमुञ्च । अवभृथनिचुम्पुणनिचेरुरसिनिचुम्पुणः । अवदेवैर्देव-
कृतमेनोऽयक्ष्यवमर्त्यैर्म्मर्त्यकृतम्पुरुराव्णोदेवरिषस्पाहि ॥१८॥ समु-
द्रेतेहृदयमप्स्वन्तःसन्त्वाविशन्त्वोषधीरुतापः । सुमित्रियानऽआ-
पऽओषधयःसन्तुदुर्म्मित्रियास्तस्मैसन्तुयोऽस्मान्द्वेष्टियञ्चव्वयन्द्वि-
ष्मः ॥ १९ ॥ द्रुपदादिवमुमुचानःस्विन्नःस्नातोमलादिव । पूतम्प-
वित्रेणेवाज्ज्यमापःशुन्धन्तुमैनसः ॥ २० ॥ उद्वयन्तमसस्परि-
स्वःपश्यन्तऽउत्तरम् । देवन्देवत्रासूर्य्यमगन्मज्योतिरुत्तमम् ॥२१॥
CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

अपोऽअद्यान्वचारिषꣳरसेनसमसृक्ष्महि । पयस्वानग्नऽआगम-
न्तम्मासꣳसृजवर्च्चसाप्रजयाचधनेनच ॥२२॥ एधोस्येधिषीमहिस-
मिदसितेजोसितेजोमयिधेहि । समाववर्त्तिपृथिवीसमुषाःसमुसूर्य्यः
समुविश्श्वमिदञ्जगत् । व्वैश्श्वानरज्ज्योतिर्ब्भूयासंव्विभून्कामा-
न्व्यश्नवैभूःस्वाहा ॥२३॥ अभ्यादधामिसमिधमग्नेव्व्रतपतेत्वयि ।
व्व्रतञ्चश्श्रद्धाञ्चोपैमीन्धेत्वादीक्षितोऽअहम् ॥२४॥ यत्रब्ब्रह्मचक्ष-
त्रञ्चसम्यञ्चौचरतःसह । तंल्लोकम्पुण्ण्यम्प्रज्ञेषंय्यत्रदेवाःसहाग्निना
॥२५॥ यत्रेन्द्रश्चव्वायुश्चसम्यञ्चौचरतःसह । तंल्लोकम्पुण्ण्यम्प्रज्ञे-
षंय्यत्रसेदिर्न्नविद्यते ॥२६॥ अꣳशुनातेऽअꣳशुःपृच्यताम्परुषापरुः

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

गन्धस्तेसोमंमवतुमदायरसोऽअच्युतः ॥२७॥ सिञ्चन्तिपरिषिञ्च-
त्युत्सिञ्चन्तिपुनन्तिच । सुरायैबभ्र्वैमदेकिन्त्वोव्वदतिकिन्त्वः ॥२८॥
धानावन्तङ्करम्भिणमपूपवन्तमुक्क्थिनम् । इन्द्रंप्रातर्जुषस्वनः ॥२९॥
बृहदिन्द्रायगायतमरुतोव्वृत्रहन्तमम् । येनज्ज्योतिरजनयन्नृतावृधो-
देवन्देवायजागृवि ॥ ३० ॥ अद्ध्वर्य्योऽअद्रिभिःसुतꣳसोमम्पवि-
त्रऽआनय । पुनाहीन्द्रायपातवे ॥ ३१ ॥ योभूतानामधिपतिर्य्यस्मिँ-
ल्लोकाऽअधिश्रिताः । यऽईशेमहतोमहाँस्तेनगृह्णामित्वामहम्मयिगृ-
ह्णामित्वामहम् ॥ ३२ ॥ उपयामगृहीतोस्यश्विभ्यान्त्वासरस्वत्यै-
त्वेन्द्रायत्वासुत्राम्णऽएषतेयोनिरश्विभ्यान्त्वासरस्वत्यैत्वेन्द्राय-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

त्वासुत्राम्म्णे ॥ ३३ ॥ प्राणपामेऽअपानपाश्चक्षुष्पाःश्रोत्रपाश्चमे ।
व्वाचोमेव्विश्श्वभेषजोमनसोसिव्विलायकः ॥ ३४ ॥ अश्श्विनकृत-
स्यतेसरस्वतिकृतस्येन्द्रेणसुत्राम्म्णाकृतस्य । उपहूतऽउपहूतस्यभक्ष-
यामि ॥ ३५ ॥ समिद्धऽइन्द्रऽउषसामनीकेपुरोरुचापूर्व्वकृद्वावृधा-
नः । त्रिभिर्देवैस्त्रिꣳशतावज्रबाहुर्ज्जघानव्वृत्रंव्विदुरोव्ववार ॥३६॥
नराशꣳसःप्रतिशूरोमिमानस्तनूनपात्प्रतियज्ञस्यधाम । गोभिर्व्वपा-
वान्मधुनासमञ्जन्हिरण्ण्यैश्चन्द्रीयजतिप्प्रचेताः ॥ ३७ ॥ ईडितो-
देवैर्हरिवाँ२ऽअभिष्टिराजुह्वानोहविषाशर्द्धमानः । पुरन्दरोगोत्र-
भिद्वज्रबाहुरायातुयज्ञमुपनोजुषाणः ॥ ३८ ॥ जुषाणोबर्हिर्हरिवा-

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

आऽइन्द्रं÷प्राचीनं॑सीदत्प्रदिशापृथिव्याः॑ । उरुप्रथा॑ऽप्रथमानं॑
स्योनमादित्यैरक्तंवसुभिः॑सजोषाः॑ ॥ ३९ ॥ इन्द्रन्दुरं÷ कवष्यो-
धावमानाव्वृषाणंव्यन्तुजनयः॑सुपत्नीः॑ । द्वारोदेवीरभितोऽविश्र-
यन्ताᳪ सुवीराव्वीरम्प्रथमानामहोभिः॑ ॥ ४० ॥ उषासानक्ताबृहती
बृहन्तम्पयस्वतीसुदुघेशूरमिन्द्रम् । तन्तुन्ततम्पेशसासंवयन्तीदेवाना-
न्देवंय्यजतः॑सुरुक्मे ॥ ४१ ॥ दैव्यामिमानामनुषः॑पुरुत्राहोतारा-
विन्द्रंप्रथमासुवाचा । मूर्द्धन्यज्ञस्यमधुनादधानाप्राचीनञ्ज्योतिर्ह-
विषाव्वृधातः॑ ॥ ४२ ॥ तिस्रोदेवीर्हविषावर्द्धमानाऽइन्द्रञ्जुषाणा
जनयोनपत्नीः॑ । अच्छिन्नन्तन्तुंपयसासरस्वतीडादेवीभारतीव्वि-

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

शश्वतूर्त्तिं ॥४३॥ त्वष्टा दधच्छुष्ममिन्द्राय वृष्णेऽपाकोऽचिष्टुर्यशसे पुरूणि। वृषा यजन्वृषणम्भूरिरेता मूर्द्धन्यज्ञस्य समनक्तु देवान्॥४४॥ वनस्पतिरवसृष्टो न पाशैस्त्मन्न्या समञ्जञ्छमिता न देवः। इन्द्रस्य हव्यैर्जठरम्पृणानः स्वदाति यज्ञम्मधुना घृतेन ॥ ४५ ॥ स्तोकानामिन्दु म्प्रति शूरऽइन्द्रो वृषायमाणो वृषभस्तुराषाट्। घृतप्रुषा मनसा मोदमानाः स्वाहा देवाऽअमृता मादयन्ताम् ॥४६॥ आयात्विन्द्रोऽवसऽउप नऽइह स्तुतः सधमादस्तु शूरः। वावृधानस्तविषीर्यस्य पूर्व्वीर्द्यौर्न क्षत्रमभिभूति पुष्यात् ॥ ४७ ॥ आ नऽइन्द्रो दूरादानऽआसादभिष्टिकृदवसे यासदुग्रः। ओजिष्ठेभिर्नृपतिर्वज्रबाहुः सङ्गे समत्सु तुर्व्व-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha
र्णि÷पृतन्न्यून् ॥ ४८ ॥ आनऽइन्द्रोहरिभिर्य्यात्वच्छार्वाचीनोवसे-
राधसेच । तिष्ठातिव्वज्जीमघवाविरप्शीमंय्यज्ञमनुनोवाजसा-
तौ ॥ ४९ ॥ त्रातारमिन्द्रमवितारमिन्द्रᳬहवेहवेसुहवᳬशूरमिन्द्रम् ।
ह्वयामिशक्रम्पुरुहूतमिन्द्रᳬस्वस्तिनोमघवाधात्विन्द्र÷ ॥ ५० ॥
इन्द्र÷सुत्रामास्ववाँ२ऽअवोभिᳬसुमृडीकोभवतुव्विश्श्ववेदाᳬ । बाध-
तान्द्वेषोऽअभयङ्कृणोतुसुवीर्य्यस्यपतयᳬस्याम ॥ ५१ ॥ तस्यव्वयᳬ
सुमतौयज्ञियस्यापिभद्रेसौमनसेस्याम । ससुत्रामास्ववाँऽइन्द्रोऽअ-
स्म्मेऽआराच्चिद्द्वेष÷सनुतर्य्युयोतु ॥ ५२ ॥ आमन्द्रैरिन्द्रहरिभि-
र्य्याहिमयूररोमभिᳬ । मात्वाकेचिन्नियमन्विन्नपाशिनोतिधन्वेवताँ
CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

२ऽइहि ॥ ५३ ॥ एवेदिन्द्रंव्वृषणंव्वज्रबाहुंव्वसिष्ठासोऽअब्भ्यर्चन्त्यु-
र्कैः । सनस्तुतोव्वीरवंद्धातुगोमंद्द्यूयम्पातस्वस्तिभिःसदानः ॥५४॥
समिद्धोऽअग्निरश्विनातप्तोघर्म्मोव्विराट्सुतः । दुहेधेनुःसरस्व-
तीसोमंᳪशुक्रमिहेन्द्रियम् ॥ ५५ ॥ तनूपाभिषजासुतेश्विनोभासर-
स्वती । मद्ध्वारजाᳪसीन्द्रियमिन्द्रायपथिभिर्व्वहान् ॥ ५६ ॥ इन्द्रा-
येन्दुᳪसरस्वतीनराशᳪसेननग्नहुम् । अधातामश्विनामधुभेषज-
म्भिषजासुते ॥ ५७ ॥ आजुह्वानासरस्वतीन्द्रायेन्द्रियाणिव्वीर्य्यम् ।
इडाभिरश्विनाविषᳪसमूर्जᳪसᳪरयिन्दधुः ॥ ५८ ॥ अश्विनानमु-
चेःसुतᳪसोमᳪशुक्रम्परिस्रुता । सरस्वतीतमाभरद्बर्हिषेन्द्रायपा-

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha
तवे ॥ ५९ ॥ कवष्ष्यो नव्व्यचस्वतीरश्श्विभ्यान्नदुरोदिशः । इन्द्रो
नरोदसीऽउभेदुहेकामान्त्सरस्वती ॥ ६० ॥ उषासानक्त्तमश्श्विना
दिवेन्द्रं सायमिन्द्रियैः । सञ्ज्ञानानेसुपेशसासमञ्जातेसरस्वत्था
॥६१॥ पातन्नोऽअश्श्विनादिवापाहिनक्त्तं सरस्वति । दैव्व्याहोता-
राभिषजापातमिन्द्रं सचासुते ॥ ६२ ॥ तिस्रस्त्रेधासरस्वत्यश्श्विना
भारतीडा । तीव्व्रम्परिस्रुतासोममिन्द्रायसुषुवुर्म्मदम् ॥ ६३ ॥ अ-
श्श्विनाभेषजम्मधुभेषजन्नः सरस्वती । इन्द्रेत्वष्टायशः श्रियं रूपं
रूपमधुः सुते ॥ ६४ ॥ ऋतुथेन्द्रोवनस्पतिः शशमानः परिस्रुता ।
कीलालमश्श्विभ्याम्मधुदुहेधेनुः सरस्वती ॥ ६५ ॥ गोभिर्न्नसोमम-
CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

शिश्वना॒मास॑रेणपरि॒स्रुता॑ । सम॑धात॒ꣳसर॑स्वत्या॒स्वाहेन्द्रे॑सु॒तम्मधु॑
॥ ६६ ॥ अ॒शिश्वना॑ह॒विरि॑न्द्रि॒यन्नमु॑चेर्द्धि॒यासर॑स्वती । आशु॒क्रमा॑सु॒-
राद्व॒सुं॒म॒घमिन्द्रा॑यजभ्रिरे ॥ ६७ ॥ यम॒श्विना॒सर॑स्वतीह॒विषेन्द्र॒म-
वर्द्ध॑यन् । सविं॑भेद्व्व॒लम्म॒घवन्नमु॑चावासु॒रेसचा॑ ॥ ६८ ॥ तमिन्द्रं॑-
म्प॒शव॒ꣳसचा॒श्विनो॒भासर॑स्वती । दधा॑नाऽअ॒भ्यनू॑षतह॒विषा॑य॒ज्ञऽ
इ॑न्द्रि॒यैः ॥ ६९ ॥ यऽइन्द्र॑ऽइन्द्रि॒यन्द॒धुःस॑वि॒तावरु॑णो॒भगः॑ । ससु॒-
त्रामा॑ह॒विष्प॑ति॒र्य्यज॑मानायसश्चत ॥ ७० ॥ स॒वि॒तावरु॑णो॒दध॒द्य-
ज॑मानायदा॒शुषे॑ । आद॑त्त॒नमु॑चे॒र्व्वसु॑सु॒त्रामा॒बल॑मिन्द्रि॒यम् ॥ ७१ ॥
वरु॑णःक्ष॒त्रमि॑न्द्रि॒यम्भगे॑नसवि॒ताश्रिय॑म् । सु॒त्रामा॒यश॑सा॒बल॒न्दधा॑

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

नायक्ष्माशत ॥ ७२ ॥ अश्विनागोभिरिन्द्रियमश्वेभिर्व्वीर्य्यम्बलम् ।
हविषेन्द्रꣳसरस्वतीयजमानमवर्द्धयन् ॥ ७३ ॥ तानासत्यासुपेशसा-
हिरण्ण्यवर्त्तनीनरा । सरस्वतीहविष्मतीन्द्रकर्म्मसुनोवत ॥७४॥
ताभिषजासुकर्म्मणासासुदुघासरस्वती । सव्वृत्रहाशतक्क्रतुरिन्द्राय
दधुरिन्द्रियम् ॥ ७५ ॥ युवꣳसुराममश्विनानमुचावासुरेसचा ।
व्विपिपानाःसरस्वतीन्द्रङ्कर्म्मस्वावत ॥ ७६ ॥ पुत्रमिवपितरावश्विना-
नोभेन्द्रावथुःकाव्व्यैर्दꣳसनाभिः । यत्सुरामंव्यपिबःशचीभिःसर-
स्वतीत्वामघवन्नभिष्णक् ॥ ७७ ॥ यस्मिन्नश्वासऽऋषभासऽउक्ष-
णोव्वशामेषाऽअवसृष्टासऽआहुताः । कीलालपेसोमपृष्ठायव्वेधसे

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

हृदसमतिश्चंनयचारुमग्ग्नये ॥ ७८ ॥ अहाव्यग्ग्नेहविरास्येतेस्रुचीव-
घृतञ्चम्म्वीवसोमं÷ । व्वाजसनिंद्दरयिमस्म्मेसुवीरंम्प्रशस्तन्धेहियश-
संम्बृहन्तम् ॥७९॥ [ शतम्–१२०० ] अश्विनातेजसाचक्षुं÷प्प्रा-
णेनसरस्वतीव्वीर्य्यम् । व्वाचेन्द्रोबलेनेन्द्रायदधुरिन्द्रियम् ॥ ८० ॥
गोमदूषुणासत्याश्श्वावदूयातमश्श्विना । व्वर्त्तीरुद्रानृपाय्यम् ॥८१॥
नयत्परोनान्तरऽआदधर्षदृषण्वसू । दुःशंसोमत्योरिपुः ॥ ८२ ॥
तानऽआवोढमश्श्विनारयिम्पिशङ्गसन्दशम् । धिष्ण्यावरिवोविदम्
॥ ८३ ॥ पावकानःसरस्वतीव्वाजेभिर्व्वाजिनीवती । यज्ञंव्वष्टुधिया-
वसुः ॥ ८४ ॥ चोदयित्रीसूनृतानाञ्चेतन्तीसुमतीनाम् । यज्ञन्दधे

CC-0, Panini Kanya Maha Vidyalaya Collection

Digitized By Siddhanta eGangotri Gyaan Kosha

सरस्वती ॥ ८५ ॥ महोऽअर्ण्णःसरस्वतीप्प्रचेतयतिकेतुना । धियो-
विश्श्वाविराजति ॥ ८६ ॥ इन्द्रायाहिचित्रभानोसुताऽइमेत्वाय-
वः । अण्वीभिस्तनापूतासः ॥ ८७ ॥ इन्द्रायाहिधियेषितोवि-
प्प्रजूतःसुतावतः । उपब्रह्म्माणिवाघतः ॥ ८८ ॥ इन्द्रायाहितूतु-
जानऽउपब्रह्माणिहरिवः । सुतेदधिष्ष्वनश्चनः ॥ ८९ ॥ अश्विव-
नापिवताम्मधुसरस्वत्यासजोषसा । इन्द्रःसुत्रामाव्वृत्रहाजुषताᳬ
सोम्म्यम्मधु ॥ ९० ॥

इति संहितायां विंशतितमोऽध्यायः ।

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

# ❀ अथ एकविंशोऽध्यायः ❀

ओ३म् इमम्मे॑वरुणश्श्रुधीहव॑मद्याचम्मृडय । त्वाम॑वस्युराच॑के ॥१॥
तत्त्वा॑यामिब्ब्रह्म॑णाव्वन्द॑मानस्तदाशा॑स्तेयज॑मानोह॒विर्भिः॑ । अ
हे॑डमानोव्वरुणेहबो॒द्ध्युरु॑श॒ꣳस॒मान॒ऽआयुः॒प्प्रमो॑षीः ॥ २ ॥ त्वन्नोऽ-

१. 'शुचिना' स्नानाचमनादिभिः शौचयुक्तेन ब्रह्मचर्यवता च त्रैवर्णिकेन स्वाध्यायोऽध्येतव्य इति सूत्रशेषः । 'शुचौदेशे' शूद्राद्यनुपहतदेशे स्वाध्यायोऽध्येतव्यः । 'शूद्रपतितयोरसꣳश्रावꣳस्वाध्यायोऽध्येतव्यः' शूद्रपतितादयो ( पतितो ब्रह्महत्यादिपातकेन ) यथा न शृण्वन्ति तथा शुद्धेन शुद्धायां भूमौ स्वाध्यायोऽध्येतव्यः । ( शु० य० प्रा० १७–१९ )

२. 'शुश्रुगुपृकृवृभ्यश्छन्दसि' ६।४।१०२ इत्यनेन साधुः ।

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized by Sudhanshu & Gangotri Gyaan Kosha

अग्नेत्त्वरुणस्यव्विद्वान्देवस्यहेडोऽअवयासिसीष्ठाः । यजिष्ठोव-
ह्निहतमꣳशोशुचानोव्विश्श्वाद्द्वेषाꣳसिप्प्रमुमुग्ग्ध्यस्म्मत् ॥ ३ ॥ स-
त्वन्नोऽअग्नेवमोभवोतीनेदिष्ठोअस्याऽउषसोव्व्युष्टौ । अवयक्क्ष्वनो
व्वरुणꣳरराणोव्वीहिम्मृडीकꣳसुहवोनऽएधि ॥ ४ ॥ महीमूषुमातरꣳ
सुव्व्रतानामृतस्यपत्नीमवसेहुवेम । तुविक्षत्त्रामजरन्तीमुरूचीꣳसु-
शर्म्माणमदितिꣳसुप्प्रणीतिम् ॥ ५ ॥ सुत्रामाणम्पृथिवीन्द्यामनेहसꣳ
सुशर्म्माणमदितिꣳसुप्प्रणीतिम् । दैवीन्नावꣳस्वरित्त्रामनागसमस्र-

१. इत्यादिस्थलेषु पृथिवि, दिवि, उपरि, चर्षणि, शकुनि, यासिभ्यः, ३।८४, एतेभ्यो भाविभ्यः परः सकारः प्रकृत्या भवति संहितायाम् ।

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

वन्तीमारुहेमास्वस्तये ॥ ६ ॥ सुनावमारुहेयमस्रवन्तीमनागसम् ।
शतारित्राᳪस्वस्तये ॥ ७ ॥ आनोमित्रावरुणाघृतैर्गव्यूतिमुक्षतम् ।
मद्ध्वारजाᳪसिसुक्रतू ॥ ८ ॥ प्रबाहवासिसृतञ्जीवसेनऽआनोग-
व्यूतिमुक्षतङ्घृतेन । आमाजनेश्श्रवयतंय्युवानाश्श्रुतम्मेमित्रावरु-
णाहवेमा ॥ ९ ॥ शन्नोभवन्तुव्वाजिनोहवेषुदेवतातामितद्द्रवᳪस्व-
र्काः । जम्भयन्तोहिंव्वृकᳪरक्षाᳪसिसनेम्म्यस्म्मद्युयवन्नमीवाः
॥ १० ॥ व्वाजेव्वाजेवतव्वाजिनोनोधनेषुव्विप्राऽअमृताऽऋतज्ञाः ।
अस्यमद्ध्वः पिबतमादयद्ध्वन्तृप्तायातपथिभिर्द्देवयानैः ॥ ११ ॥
समिद्धोऽअग्निः समिधासुसमिद्धोवरेण्यः । गायत्रीच्छन्दऽइन्द्रिय-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

न्न्यविर्गौर्व्वयोदधुः ॥१२॥ तनूनपाच्छुचिव्रतस्तनूपाश्च सरस्वती ।
उष्णिहाच्छन्दऽइन्द्रियन्दित्यवाड्गौर्व्वयोदधुः ॥ १३ ॥ इडाभिर-
ग्निरीड्यः सोमोदेवोऽअमर्त्त्यः । अनुष्टुप्छन्दऽइन्द्रियम्पञ्चाविर्गौ-
र्व्वयोदधुः ॥ १४ ॥ सुबर्हिरग्निः पूषण्वान्त्स्तीर्णबर्हिरमर्त्त्यः । बृह-
तीच्छन्दऽइन्द्रियन्त्रिवत्सोगौर्व्वयोदधुः ॥ १५ ॥ दुरोदेवीर्दिशोम-
हीर्ब्रह्मादेवोबृहस्पतिः । पङ्क्तिश्छन्दऽइहेन्द्रियन्तुर्यवाड्गौ-
र्व्वयोदधुः ॥ १६ ॥ उषेयह्वीसुपेशसाविश्वेदेवाऽअमर्त्याः । त्रि-
ष्टुप्छन्दऽइहेन्द्रियम्पष्ठवाड्गौर्व्वयोदधुः ॥ १७ ॥ दैव्याहोतारा-
भिषजेन्द्रेणसयुजायुजा । जगतीच्छन्दऽइन्द्रियमनड्वान्गौर्व्वयोदधुः

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

॥ १८ ॥ तिस्रऽइडासरस्वतीभारतीमरुतोव्विशः । व्विराट्छन्दऽइह-
हेन्द्रियन्धेनुर्गौर्न्नवयोदधुः ॥ १९ ॥ त्वष्टातुरीपोऽअद्भुतऽइन्द्रा-
ग्नीपुष्टिवर्द्धना । द्विपदाच्छन्दऽइन्द्रियमुक्षागौर्न्नवयोदधुः ॥ २० ॥
शमितानोव्वनस्पतिः सविताप्प्रसुवन्भगम् । ककुप्छन्दऽइहेन्द्रि-
यंव्वशाव्वेहद्वयोदधुः ॥ २१ ॥ स्वाहायज्ञंव्वरुणःसुक्षत्त्रोभेषजङ्करत् ।
अतिच्छन्दाऽइन्द्रियंव्बृहदृषभोगौर्व्वयोदधुः ॥ २२ ॥ व्वसन्तेनऽऋ-
तुनादेवाव्वसवस्त्रिवृतास्तुताः । रथन्तरेणतेजसाहविरिन्द्रेव्वयो-
दधुः ॥ २३ ॥ ग्रीष्मेणऽऋतुनादेवारुद्राःपञ्चदशेस्तुताः । बृहताय-
शसाबलंहविरिन्द्रेवयोदधुः ॥ २४ ॥ व्वर्षाभिर्ऋतुनादित्यास्तोमे

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

सप्तदशेस्तुताः। व्वैरूपेणव्विशौजसाहविरिन्द्रेव्वयोदधुः ॥ २५ ॥
शारदेनऽऋतुनादेवाऽएकविꣳशऽऋभवस्तुताः। व्वैराजेनश्श्रिया-
श्श्रियꣳहविरिन्द्रेव्वयोदधुः ॥ २६ ॥ हेमन्तेनऽऋतुनादेवास्त्रिणवेम-
रुतस्तुताः। वलेनशक्करीःसहोहविरिन्द्रेव्वयोदधुः ॥ २७ ॥ शैशि-
रेणऽऋतुनादेवास्त्रयस्त्रिꣳशेमृतास्तुताः। सत्येनरेवतीःक्षत्रꣳहवि-
रिन्द्रेव्वयोदधुः ॥ २८ ॥ होतायक्षत्समिधाग्निमिडस्पदेश्विनेन्द्रꣳ
सरस्वतीमजोधूम्रोनगोधूमैःकुवलैर्भेषजम्मधुशष्पैर्न्नतेजऽइन्द्रिय-
म्पयःसोमःपरिस्रुताघृतम्मधुव्यन्त्वाज्ज्यस्यहोतर्यज ॥ २९ ॥ हो-
तायक्षत्तनूनपात्सरस्वतीमविर्मेषोनभेषजम्पथामधुमताभरन्नश्विने-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

न्द्रायव्वीर्र्युम्बदरैरुपवाकाभिर्ब्भेषजन्तोक्क्मभिः पयः सोमः परिस्रु-
ताघृतम्मधुव्व्यन्त्वाज्ज्यस्यहोतर्ज्यज ॥ ३० ॥ होतायक्षन्नराशःस-
न्ननग्नहुम्पतिः सुरयाभेषजम्मेषः सरस्वतीभिषग्ग्रथोनचन्द्र्यश्विनो-
र्व्वपाऽइन्द्रस्यव्वीर्र्युम्बदरैरुपवाकाभिर्ब्भेषजन्तोक्क्मभिः पयः सो-
मः परिस्रुताघृतम्मधुव्व्यन्त्वाज्ज्यस्यहोतर्ज्यज ॥ ३१ ॥ होतायक्षदि-
डेडितऽआजुहूवानः सरस्वतीमिन्द्रम्बलेनव्वर्द्धयन्नृषभेणगवेन्द्रिय-
मश्विनेन्द्रायभेषजंय्यवैः कर्कन्धुभिर्म्मधुलाजैर्न्नमासरम्पयः सोमः
परिस्रुताघृतम्मधुव्व्यन्त्वाज्ज्यस्यहोतर्ज्यज ॥ ३२ ॥ होतायक्षद्बर्हि-
रूर्णम्रदा भिषङ्नासत्याभिषजाश्विनाश्वाशिशुमतीभिषग्धेनुः स-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha
रस्वतीभिषग्दुहऽइन्द्रायभेषजम्पयः सोमः परिस्रुताघृतम्मधुव्व्यन्त्वा-
ज्ज्यस्यहोतर्य्यज ॥ ३३ ॥ होतायक्षद्दुरोदिशः कवष्योनव्व्यच-
स्वतीरश्विभ्यान्नदुरोदिशऽइन्द्रोनरोदसीदुघेदुहेधेनुः सरस्वत्यश्वि-
नेन्द्रायभेषजः शुक्रन्नज्ज्योतिरिन्द्रियम्पयः सोमः परिस्रुताघृतम्मधु-
व्व्यन्त्वाज्ज्यस्यहोतर्य्यज ॥ ३४ ॥ होतायक्षत्सुपेशसोषेनक्तन्दि-
वाश्विनासमञ्जातेसरस्वत्यात्विषिमिन्द्रेनभेषजः श्येनोनरजसाहृदा-
श्रियानमासरम्पयः सोमः परिस्रुताघृतम्मधुव्व्यन्त्वाज्ज्यस्यहोतर्य्य-
ज ॥ ३५ ॥ होतायक्षद्दैव्याहोताराभिषजाश्विनेन्द्रन्नजागृविदिवान-
क्तन्नभेषजैः शूषः सरस्वतीभिषक्सीसेनदुहऽइन्द्रियम्पयः सोमः प-
CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

रिस्रुताघृतम्मधुव्व्यन्त्वाज्ज्यस्यहोतर्य्यज ॥ ३६ ॥ होतायक्षत्तिस्रो-
देवीन्नभेषजन्त्रयस्त्रिधातवोपसोरूपमिन्द्रेहिरण्ण्ययमश्विनेडानभा-
रतीव्वाचासरस्वतीमहऽइन्द्रायदुहइन्द्रियम्पयःसोमः परिस्रुताघृत-
म्मधुव्व्यन्त्वाज्ज्यस्यहोतर्य्यज ॥ ३७ ॥ होतायक्षत्सुरेतसमृषभन्न
र्य्यापसन्त्वष्टारमिन्द्रमश्विनाभिषजन्नसरस्वतीमोजोनजूतिरिन्द्रि-
यंव्वृकोनरभसोभिषग्ग्यशःसुरयाभेषजंश्रियानमासरम्पयःसोमः
परिस्रुताघृतम्मधुव्व्यन्त्वाज्ज्यस्यहोतर्य्यज ॥ ३८ ॥ होतायक्षद्वन-
स्पतिंशमितारंशतक्रतुम्भीमन्नमन्न्युराजानंव्याघ्रन्नमसा-
श्विनाभामंसरस्वतीभिषगिन्द्रायदुहऽइन्द्रियम्पयःसोमः परिस्रु-

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

तांघृतम्मधुव्व्यन्त्वाज्ज्यस्यहोतर्य्यज ॥ ३९ ॥ होतायक्षदग्निᳫं स्वाहाज्ज्यस्यस्तोकानाᳫं स्वाहामेदसाम्पृथक्स्वाहाच्छागमश्श्विभ्याᳫं स्वाहामेषᳫं सरस्वत्यैस्वाहऽऋषभमिन्द्रायसिᳫं हायसहसऽइन्द्रियᳫं स्वाहाग्निन्नभेषजᳫं स्वाहासोममिन्द्रियᳫं स्वाहेन्द्रᳫं सुत्रामाणᳫं सवितारंव्वरुणम्भिषजाम्पतिᳫं स्वाहाव्वनस्पतिम्प्रियम्पाथोनभेषजᳫं स्वाहादेवाऽआज्ज्यपाजुषाणोऽअग्निर्भेषजम्पयᳫं सोमः परिस्रुताघृतम्मधुव्व्यन्त्वाज्ज्यस्यहोतर्य्यज ॥ ४० ॥ होतायक्षदश्श्विनौछागस्य व्वपायामेदसोजुषेताᳫं हविर्होतर्य्यज । होतायक्षत्सरस्वतीम्मेषस्य व्वपायामेदसोजुषताᳫं हविर्होतर्य्यज । होतायक्षदिन्द्रमृषभस्यव्व-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

पायामेदंसोजुषताᳪंहविर्होतर्य्यज ॥ ४१ ॥ होतायक्षदश्विनौसरं-
स्वतीमिन्द्रᳪंसुत्रामाणमिमेसोमाःसुरामाणश्छागैर्न्नमेषैर्ऋषभैःसुताः
शष्पैर्न्नतोक्मभिर्ल्लाजैर्म्महस्वन्तोमदामासरेणपरिष्कृताःशुक्राः
पयस्वन्तोमृताःप्रस्थितावोमधुश्च्युतस्तानश्विनासरस्वतीन्द्रः सु-
त्रामावृत्रहाजुषन्ताᳪंसोम्यम्मधुपिबन्तुमदन्तुव्यन्तुहोतर्य्यज
॥ ४२ ॥ होतायक्षदश्विनौछागस्यहविषऽआत्तामद्यमध्यतोमेदऽ-
उद्भृतम्पुराद्वेषोभ्यःपुरापौरुषेय्यागृभोघस्तान्नूनङ्घासेऽअंज्रा-
णांय्यवसप्रथमानाᳪंसुमत्क्षराणाᳪंशतरुद्रियाणामग्निष्वात्तानां-
म्पीवोपवसनानाम्पार्श्वतःश्रोणितःशितामतऽउत्सादतोङ्गादङ्गादव-

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha
त्तानाङ्करत ऽ एवाश्विनां जुषेता ᳪ हविर्होतर्यज ॥ ४३ ॥ होतायक्ष-
त्सरस्वतीम्मेषस्य हविष ऽ आवयदद्द्यमद्ध्यतोमेद ऽ उद्भृतम्पुराद्द्वे
षोभ्यः पुरापौरुषेय्या गृभो घसन्नूनङ्घासे ऽ अंज्राणां यवसप्रथमा-
ना ᳪ सुमत्क्षराणा ᳪ शतरुद्रियाणामग्निष्वात्तानाम्पीवोपवसनाना-
म्पार्श्वतः श्रोणितः शितामत ऽ उत्सादतोङ्गादङ्गादवत्तानाङ्करदेवᳪ सर-
स्वती जुषता ᳪ हविर्होतर्यज ॥ ४४ ॥ होतायक्षदिन्द्रमृषभस्य हविष ऽ-
आवयदद्द्यमद्ध्यतोमेद ऽ उद्भृतम्पुराद्द्वेषोभ्यः पुरापौरुषेय्या गृभो
घसन्नूनङ्घासे ऽ अंज्राणां यवसप्रथमाना ᳪ सुमत्क्षराणा ᳪ शतरुद्रि-
याणामग्निष्वात्तानाम्पीवोपवसनानाम्पार्श्वतः श्रोणितः शितामत ऽ-
CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

उत्सादतोङ्गादङ्गादवत्तानाङ्करदेवमिन्द्रोजुषताᳬहविर्होतर्य्यज ॥ ४५ ॥

होतायक्षद्वनस्पतिमभिहिपिष्टतमयारभिष्ठयारशनयाधित । यत्रा-
श्विनोश्छागस्यहविषं÷ प्प्रियाधामानियत्रसरस्वत्यामेषस्यहविषं÷
प्प्रियाधामानियत्रेन्द्रस्यऽऋषभस्यहविषं ÷ प्प्रियाधामानियत्रा-
ग्नेःप्प्रियाधामानियत्रसोमस्यप्प्रियाधामानियत्रेन्द्रस्यसुत्राम्म्णं÷
प्प्रियाधामानियत्रसवितुःप्प्रियाधामानियत्रव्वरुणस्यप्प्रियाधामा-
नियत्रव्वनस्पतेःप्प्रियापाथाᳬसियत्रदेवानामाज्ज्यपानाम्प्रियाधा-
मानियत्राग्नेर्होतु ÷ प्प्रियाधामानितत्रैतान्प्रस्तुत्येवोपस्तुत्येवोपाव-
स्रक्षद्रभीयसऽइवकृत्वीकरदेवन्देवोव्वनस्पतिर्ज्जुषताᳬहविर्होत-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

र्व्यजं ॥ ४६ ॥ होतायक्षदग्निꣳ स्विष्टकृतमयाडग्निरश्विनो
श्छागस्यहविषः प्रियाधामान्ययाट्सरस्वत्यामेषस्यहविषः
प्रियाधामान्ययाडिन्द्रस्यऽऋषभस्यहविषः प्रियाधामान्यया-
डग्नेः प्रियाधामान्ययाट्सोमस्यप्रियाधामान्ययाडिन्द्रस्यसुत्रा-
म्णः प्रियाधामान्ययाट्सवितुः प्रियाधामान्ययाड्वरुणस्य
प्रियाधामान्ययाड्वनस्पतेः प्रियापाथाꣳस्ययाड्देवानामाज्यपा-
नाम्प्रियाधामानियक्षदग्नेर्होतुः प्रियाधामानियक्षत्स्वम्महिमानमाय-
जतामेज्याऽइषः कृणोतुसोऽअध्वराजातवेदाजुषताꣳहविर्होतर्य्यज
॥ ४७ ॥ देवम्बर्हिः सरस्वती सुदेवमिन्द्रेऽअश्विना । तेजोनचक्षुर-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

क्ष्योर्ब्बर्हिषादधुरिन्द्रियव्वसुवनँव्वसुधेयस्यव्व्यन्तुयज ॥ ४८ ॥ देवी-
द्वारौऽअश्विनाभिषजेन्द्रे सरस्वती । प्राणन्नव्वीर्य्यन्नसिद्द्वारौद-
धुरिन्द्रियंव्वसुवनँव्वसुधेयस्यव्व्यन्तुयज ॥ ४९ ॥ देवीऽउषासाव-
श्विनासुत्रामेन्द्रे सरस्वती । बलन्नव्वाचमास्यऽउषाभ्यान्दधुरि-
न्द्रियंव्वसुवनँव्वसुधेयस्यव्व्यन्तुयज ॥ ५० ॥ देवीजोष्ट्रीसरस्वत्य-
श्विनेन्द्रमवर्द्धयन् । श्रोत्रन्नकर्ण्णयोर्य्यशोजोष्ट्रीभ्यान्दधुरिन्द्रि-
यंव्वसुवनँव्वसुधेयस्यव्व्यन्तुयज ॥ ५१ ॥ देवीऽऊर्ज्जाहुतीदुघेसुदु-
घेन्द्रे सरस्वत्यश्विनाभिषजावतः । शुक्रन्नज्ज्योतिस्तनयोराहुतीध-
त्तऽइन्द्रियंव्वसुवनँव्वसुधेयस्यव्व्यन्तुयज ॥ ५२ ॥ देवादेवानाम्भि-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

षजाहोताराविन्द्रमश्विना । व्वषट्कारैः सरस्वतीत्विषिन्नहृदयेमति-
ꣳहोतृभ्यान्दधुरिन्द्रियंव्वसुवनेव्वसुधेयस्यव्यन्तुयज ॥ ५३ ॥ दे-
वीस्तिस्रस्तिस्रोदेवीरश्विनेडासरस्वती । शूषन्नमद्ध्येनाभ्यामिन्द्रा-
यदधुरिन्द्रियंव्वसुवनेव्वसुधेयस्यव्यन्तुयज ॥ ५४ ॥ देवऽइन्द्रोनराश-
ꣳसस्त्रिवरूथः सरस्वत्याश्विभ्यामीयतेरथ ÷ । रेतोनरूपममृतञ्ज-
नित्रमिन्द्रायत्वष्टादधदिन्द्रियाणिव्वसुवनेव्वसुधेयस्यव्यन्तुयज
॥ ५५ ॥ देवोदेवैर्व्वनस्पतिर्हिरण्ण्यपर्ण्णोऽअश्विभ्याꣳसरस्वत्यासु-
पिप्पलऽइन्द्रायपच्च्यतेमधु । ओजोनजूतिरृषभोनभामंव्वनस्पतिं-
न्नोदधदिन्द्रियाणिव्वसुवनेव्वसुधेयस्यव्यन्तुयज ॥ ५६ ॥ देवम्बर्हिर्वा-

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

रितीनामद्ध्वरेस्तीर्णमश्विभ्याम्मूर्णम्म्रदाꣳसरस्वत्यास्योनमिन्द्र-
तेसदः । ईशायैमन्न्युꣳराजानम्बर्हिषादधुरिन्द्रियंव्वसुवनेव्वसु-
धेयस्यव्यन्तुयज ॥ ५७ ॥ देवोऽअग्निः स्विष्टकृद्देवान्न्यक्षद्यथायथꣳ
होताराविन्द्रमश्विनाव्वाचाव्वाचꣳसरस्वतीमग्निꣳ सोमꣳ स्विष्ट-
कृत्स्विष्टऽइन्द्रः सुत्रामासविताव्वरुणोभिषगिष्टोदेवोव्वनस्पतिꣳ
स्विष्टादेवाऽआज्ज्यपाः स्विष्टोऽअग्निरग्निनाहोताहोत्रेस्विष्टकृद्यशो-
नदधदिन्द्रियमूर्ज्जमपचितिꣳस्वधांव्वसुवनेवसुधेयस्यव्यन्तुयज ।५८।
अग्निमद्यहोतारमवृणीतायंय्यजमानःपचन्पक्तीःपचन्पुरोडाशा-

१. इत्यत्र 'न होतरि' ६।१।९१ इत्यनेन होतृशब्दे परतो अश्रोत्ययं ह्रस्वो न दीर्घमापद्यते।

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

न्न्वँऽनन्नश्शिवब्भ्याञ्छागऽसरस्वत्यैमेषमिन्द्रायऽऋषभऽसुन्न्वन्न-
शिवब्भ्याᳫं सरस्वत्याऽइन्द्रायसुत्राम्म्णेसुरासोमान् ॥ ५९ ॥ सू-
पस्त्थाऽअद्द्यदेवोव्वनस्प्पतिरभवदश्शिवब्भ्याञ्छागेनसरस्वत्यैमेषेणे-
न्द्रायऽऋषभेणाक्षँस्तान्म्मेदस्तःप्प्रतिपचताग्गृभीषतावीवृधन्तपुरोडा-
शैरपुरश्श्विनासरस्वतीन्द्रः सुत्रामासुरासोमान् ॥ ६० ॥ त्वा-
मद्द्यऽऋषऽआर्षेयऽऋषीणान्नपादवृणीतायंय्यजमानोबहुब्भ्यऽआस
ङ्गतेब्भ्यऽएषमेदेवेषुव्वसुव्वार्य्यायक्ष्यतऽइतितायादेवादेवदानान्न्यदु-
स्तान्न्यँस्म्माऽआ च शास्स्वा च गुरस्वेषितश्च होतरसि भद्रवाच्च्याय

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha
ष्प्रेषितोमानुषः सूक्तवाकायसूक्ताब्रूहि ॥ ६१ ॥ इति संहितायां एकविंशोऽध्यायः ।

# ❀ अथ द्वाविंशोऽध्यायः ❀

ॐ तेजोऽसिशुक्रममृतमायुष्पाऽआयुर्म्मेपाहि । देवस्यत्वासवितुःप्प्रसवेऽश्विनोर्ब्बाहुभ्याम्पूष्णोहस्ताभ्यामाददे ॥ १ ॥ इमामगृभ्णन्नरशनामृतस्य पूर्व्वऽआयुषिविदथेषुकव्या । सानोऽअस्मिन्त्सुतऽआबभूवऽऋतस्यसामन्त्सरमारपन्ती ॥ २ ॥ अभिधाऽअसिभुवनमसियन्तासिधर्त्ता । सत्वमग्निंवैश्वानरंसप्प्रथसङ्गच्छस्वाहा

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

कृतम् ॥ ३ ॥ स्वगात्वादेवेभ्यः प्रजापतयेब्रह्मन्नश्वम्भन्त्स्यामि
देवेभ्यः प्रजापतयेतेनराध्यासम् । तम्बधानदेवेभ्यः प्रजापत-
येतेनराध्नुहि ॥ ४ ॥ प्रजापतयेत्वाजुष्टम्प्रोक्षामीन्द्राग्निभ्यान्त्वाजु-
ष्टम्प्रोक्षामिव्वायवेत्वाजुष्टम्प्रोक्षामि व्विश्वेभ्यस्त्वादेवेभ्योजुष्टम्प्रो-
क्षामिसर्वेभ्यस्त्वादेवेभ्योजुष्टम्प्रोक्षामि । योऽअर्वन्तञ्जिघांसति
तितमभ्यमीतिव्वरुणःपरोमर्त्तः परःश्वा ॥ ५ ॥ अग्नयेस्वाहासोमाय
स्वाहापाम्मोदायस्वाहासवित्रेस्वाहाव्वायवेस्वाहाव्विष्णवेस्वाहेन्द्रा-
यस्वाहाबृहस्पतयेस्वाहामित्रायस्वाहाव्वरुणायस्वाहा ॥ ६ ॥ हिङ्करा-
यस्वाहाहिङ्कृताय [illegible] प्रोथतेस्वाहा

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

ष्प्रप्रोथायस्वाहागन्धायस्वाहाग्घ्रातायस्वाहानिविष्टायस्वाहोपवि-
ष्टायस्वाहासन्दितायस्वाहाव्वलातेस्वाहासीनायस्वाहाशयानायस्वा-
हास्वपतेस्वाहाजाग्रतेस्वाहाकूजतेस्वाहाप्प्रबुद्धायस्वाहाव्विजृम्भ-
माणायस्वाहाव्विचृतायस्वाहासꣳहानायस्वाहोपस्थितायस्वाहाय
नायस्वाहाप्रायणायस्वाहा ॥ ७ ॥ यतेस्वाहाधावतेस्वाहोद्द्रावाय
स्वाहोद्द्रुतायस्वाहाशूकारायस्वाहाशूकृतायस्वाहानिषण्णायस्वा-
होत्थितायस्वाहाजवायस्वाहाबलायस्वाहाव्विवर्त्तमानायस्वाहाव्वि-
वृत्तायस्वाहाव्विधून्वानायस्वाहाव्विधूतायस्वाहाशुश्रूषमाणाय
स्वाहाश्रृण्वतेस्वाहेक्षमाणायस्वाहेक्षितायस्वाहाव्वीक्षितायस्वाहा

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

निमेषायस्वाहायदत्तितस्मैस्वाहायत्पिबतितस्मैस्वाहायन्मूत्रङ्करो-
तितस्मैस्वाहाकुर्वतेस्वाहाकृतायस्वाहा ॥ ८ ॥ तत्सवितुर्वरेण्यम्भ-
र्गो देवस्यधीमहि । धियोयोनः प्रचोदयात् ॥ ९ ॥ हिरण्यपाणिमूत-
येसवितारमुपह्वये । सचेत्तादेवतापदम् ॥१०॥ देवस्यचेततोमहीम्प्र-
सवितुर्हवामहे । सुमतिꣳसत्यराधसम् ॥११॥ सुष्टुतिꣳसुमतीवृधो
रातिꣳसवितुरीमहे । प्रदेवायमतीविदे ॥ १२ ॥ रातिꣳसत्पतिम्महेस
वितारमुपह्वये । आसवन्देववीतये ॥१३॥ देवस्यसवितुर्म्मतिमासवं
विश्वदेव्यम् । धियाभगम्मनामहे ॥१४॥ अग्निꣳस्तोमेनबोधयसमि-
धानोऽअमर्त्यम् । हव्यादेवेषुनोदधत् ॥१५॥ सहव्यवाडमर्त्यऽउशि-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

ग्ग्दूतश्च्चनोंहितः । अग्निर्द्धियासमृण्वति ॥ १६ ॥ अग्निन्दूतम्पुरोदधे
हव्व्यवाहमुपब्रुवे । देवाँ २ आसादयादिह ॥ १७ ॥ अजीजनोहिपवं-
मानसूर्य्यैव्विधारेशक्क्मनापयं ÷ । गोजीरयारᳬहमाणःपुरन्ध्या
॥ १८ ॥ व्विभूर्म्मात्राप्प्रभूःपित्राश्श्वोसिहयोस्यत्योसिमयोस्यर्व्वासि
सप्तिरसिव्वाज्यसिव्वृषासिनृमणाऽअसि । ययुर्न्नामासिशिशुर्न्ना-
मास्यादित्यानाम्पत्वान्विहिदेवाऽआशापालाऽएतन्देवेभ्योश्श्वम्मे-
धायप्प्रोक्षितᳬरक्षतेहरन्तिरिहरमतामिहधृतिरिहस्वधृतिःस्वाहा॥१९॥
कायस्वाहाकस्मैस्वाहाकतमस्मैस्वाहास्वाहाधिमाधीतायस्वाहामनं÷
प्रजापतयेस्वाहाचित्तंविज्ञातायादित्यैस्वाहादित्यैमह्यैस्वाहादित्यै

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

सुमृडीकायैस्वाहासरस्वत्यैस्वाहासरस्वत्यैपावकायैस्वाहासरस्वत्यै
बृहत्यैस्वाहापूष्णेस्वाहापूष्णेऽप्रपथ्यायस्वाहापूष्णेनरन्धिषायस्वा-
हात्वष्ट्रे स्वाहात्वष्ट्रे तुरीपायस्वाहात्वष्ट्रे पुरुरूपायस्वाहाविष्णवेस्वा
हाविष्णवेनिभूयपायस्वाहाविष्णवेशिपिविष्टायस्वाहा ॥ २० ॥ व्वि-
श्वोदेवस्यनेतुर्म्मर्त्तोव्वुरीतसख्यम् । व्विश्वोरायऽइषुध्यतिद्युम्म्नं
व्वृणीतपुष्ष्यसेस्वाहा ॥२१॥ आब्ब्रह्म्मन्न्ब्राह्म्मणोब्ब्रह्म्मवर्च्चसीजा-
यतामाराष्ट्रे राजन्न्युः शूरऽइषव्व्योतिव्व्याधीमहारथोजायतान्दोग्ग्ध्री
धेनुर्व्वोढानड्वानाशुः सप्तिः पुरन्धिर्य्योषाजिष्णूरथेष्ठाः सभेयोयुवा-
स्ययजमानस्यव्वीरोजायतान्निकामेनिकामेनः पर्ज्जन्न्योव्वर्षतुफलव-

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha
त्योनऽओषधयः पच्च्यन्तांय्योगक्षेमो नः कल्पताम् ॥ २२ ॥ प्राणा-
यस्वाहाऽपानायस्वाहाव्यानायस्वाहाचक्षुषेस्वाहाश्श्रोत्रायस्वाहा
व्वाचेस्वाहामनसेस्वाहा ॥ २३ ॥ प्राच्च्यै दिशेस्वाहार्व्वाच्च्यै दिशेस्वा-
हादक्षिणायै दिशेस्वाहाव्र्वाच्च्यै दिशेस्वाहाप्रतीच्च्यै दिशेस्वाहाव्र्वा-
च्च्यै दिशेस्वाहोदीच्च्यै दिशेस्वाहाव्र्वाच्च्यै दिशेस्वाहोर्ध्वायै दिशेस्वा-
हाव्र्वाच्च्यै दिशेस्वाहावाच्च्यै दिशेस्वाहाव्र्वाच्च्यै दिशेस्वाहा ॥ २४ ॥
अद्भ्यःस्वाहाव्वार्भ्यःस्वाहोदकायस्वाहातिष्ठन्तीभ्यःस्वाहास्रव-
न्तीभ्यःस्वाहास्यन्दमानाभ्यःस्वाहाकूप्याभ्यःस्वाहासूद्याभ्यः
स्वाहाधार्याभ्यःस्वाहार्णवायस्वाहासमुद्रायस्वाहासरिराय-
CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

स्वाहा ॥ २५ ॥ वातायस्वाहाधूमायस्वाहाभ्रायस्वाहामेघायस्वा-
हाविद्योतमानायस्वाहास्तनयतेस्वाहावस्फूर्जतेस्वाहावर्षतेस्वा-
हाववर्षतेस्वाहोग्रंवर्षतेस्वाहाशीघ्रंवर्षतेस्वाहोद्गृह्णतेस्वाहोद्गृहीत-
तायस्वाहाप्रुष्णतेस्वाहाशीकायतेस्वाहाप्रुष्वाभ्यःस्वाहाह्रादु-
नीभ्यःस्वाहानीहारायस्वाहा ॥ २६ ॥ अग्नयेस्वाहासोमायस्वाहेन्द्रा-
यस्वाहापृथिव्यैस्वाहान्तरिक्षायस्वाहादिवेस्वाहादिग्भ्यःस्वाहाशा-
भ्यःस्वाहोर्व्यै दिशेस्वाहार्वाच्यैदिशेस्वाहा ॥ २७ ॥ नक्षत्रेभ्यः
स्वाहानक्षत्रियेभ्यःस्वाहाहोरात्रेभ्यःस्वाहार्द्धमासेभ्यःस्वाहामा-

CC-0, Panini Kanya Maha Vidyalaya Collection.

१. नक्षत्राद्घः ( ४ । ४ । १४१ ) इत्यनेन साधुः ।

Digitized By Siddhanta eGangotri Gyaan Kosha

सैभ्यः स्वाहाऽऋतुभ्यः स्वाहार्तवेभ्यः स्वाहा संव्वत्सराय स्वाहा द्यावापृथिवीभ्याᳪ स्वाहा चन्द्राय स्वाहा सूर्याय स्वाहा रश्मिभ्यः स्वाहा व्वसुभ्यः स्वाहा रुद्रेभ्यः स्वाहादित्येभ्यः स्वाहा मरुद्भ्यः स्वाहा व्विश्वेभ्यो देवेभ्यः स्वाहा मूलेभ्यः स्वाहा शाखाभ्यः स्वाहा व्वनस्पतिभ्यः स्वाहा पुष्पेभ्यः स्वाहा फलेभ्यः स्वाहौषधीभ्यः स्वाहा ॥२८॥ [शतम् १३००] पृथिव्यै स्वाहान्तरिक्षाय स्वाहा दिवे स्वाहा सूर्याय स्वाहा चन्द्राय स्वाहा नक्षत्रेभ्यः स्वाहाद्भ्यः स्वाहौषधीभ्यः स्वाहा व्वनस्पतिभ्यः स्वाहा परिप्लवेभ्यः स्वाहा चराचरेभ्यः स्वाहा सरीसृपेभ्यः स्वाहा ॥ २९ ॥ असवे स्वाहा व्वसवे स्वाहा व्विभुवे-

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

स्वाहा व्विवस्वते स्वाहा गणश्रिये स्वाहा गणपतये स्वाहाभिभुवे स्वाहा-
धिपतये स्वाहा शूषाय स्वाहा सꣳसर्प्याय स्वाहा चन्द्राय स्वाहा ज्ज्योति-
षे स्वाहा मलिम्म्लुचाय स्वाहा दिवा पतयते स्वाहा ॥ ३० ॥ मधवे स्वाहा-
माधवाय स्वाहा शुक्राय स्वाहा शुचये स्वाहा नभसे स्वाहा नभस्याय स्वा-
हेषाय स्वाहोर्ज्जाय स्वाहा सहसे स्वाहा सहस्याय स्वाहा तपसे स्वाहा त-
पस्याय स्वाहाꣳहसस्पतये स्वाहा ॥ ३१ ॥ व्वाजाय स्वाहा प्प्रसवाय
स्वाहापिजाय स्वाहा क्क्रतवे स्वाहा स्वः स्वाहा मूर्ध्ने स्वाहा व्यश्नु-
विने स्वाहान्त्याय स्वाहान्त्याय भौवनाय स्वाहा भुवनस्य पतये स्वाहाधि-
पतये स्वाहा प्रजापतये स्वाहा ॥ ३२ ॥ आयुर्यज्ञेन कल्पताꣳस्वाहा-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

प्राणोयज्ञेनकल्पता ꣳ स्वाहापानोयज्ञेनकल्पता ꣳ स्वाहाव्यानोय-
ज्ञेनकल्पता ꣳ स्वाहोदानोयज्ञेनकल्पता ꣳ स्वाहासमानोयज्ञेनकल्प-
ता ꣳ स्वाहाचक्षुर्यज्ञेनकल्पता ꣳ स्वाहाश्रोत्रंयज्ञेनकल्पता ꣳ स्वा-
हावाग्यज्ञेनकल्पता ꣳ स्वाहामनोयज्ञेनकल्पता ꣳ स्वाहात्मायज्ञेन-
कल्पता ꣳ स्वाहाब्रह्मायज्ञेनकल्पता ꣳ स्वाहाज्ज्योतिर्यज्ञेनकल्प-
ता ꣳ स्वाहास्वर्यज्ञेनकल्पता ꣳ स्वाहापृष्ठंयज्ञेनकल्पता ꣳ स्वाहा-
यज्ञोयज्ञेनकल्पता ꣳ स्वाहा ॥ ३३ ॥ एकस्मैस्वाहाद्वाभ्या ꣳ स्वाहा-
शतायस्वाहैकशतायस्वाहाव्युष्ट्यैस्वाहास्वर्गायस्वाहा ॥ ३४ ॥

इति संहितायां द्वाविंशोऽध्यायः ॥

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

# ❀ अथ त्रयोविंशोऽध्यायः ❀

ॐ हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेकऽआसीत् ।
सदाधारपृथिवीन्द्यामुतेमाङ्कस्मैदेवायहविषाविधेम ॥ १ ॥ उपया-
मगृहीतोसिप्रजापतयेत्वाजुष्टङ्गृह्णाम्म्येषतेयोनिः सूर्य्यस्तेमहिमा ।
यस्तेहन्त्संव्वत्सरेमहिमासम्बभूवयस्तेव्वायावन्तरिक्षेमहिमासम्ब-
भूवयस्तेदिविसूर्य्येमहिमासम्बभूवतस्मैतेमहिम्नेप्रजापतयेस्वा-
हादेवेभ्यः ॥ २ ॥ यः प्राणतोनिमिषतोमहित्वैकऽइद्राजाजगतो-
बभूव । यऽईशेऽअस्यद्विपदश्चतुष्पदः कस्मैदेवायहविषाविधेम

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

॥ ३ ॥ उपयामगृहीतोसिप्रजापतयेत्वाजुष्टङ्गृह्णाम्म्येषतेयोनिश्चन्द्र-
मास्तेमहिमा । यस्तेरात्रौसंवत्सरेमहिमासम्बभूवयस्तेपृथिव्यामग्नौमहिमासम्बभूवयस्तेनक्षत्रेषुचन्द्रमसिमहिमासम्बभूवतस्मैतेमहिम्नेप्रजापतयेदेवेभ्यःस्वाहा ॥ ४ ॥ युञ्जन्तिब्रध्नमरुषञ्चरन्तम्परितस्थुषः । रोचन्तेरोचनादिवि ॥ ५ ॥ युञ्जन्त्यस्यकाम्म्याहरीविपक्षसारथे । शोणाधृष्णूनृवाहसा ॥ ६ ॥ यद्वातोऽअपोऽअगनीगन्प्रियामिन्द्रस्यतन्वम् । एतꣳस्तोतरनेनपथापुनरश्श्वमावर्त्तयासिनः ॥ ७ ॥ व्वसवस्त्वाञ्जन्तुगायत्रेणच्छन्दसारुद्रास्त्वाञ्जन्तु त्रैष्टुभेनच्छन्दसाCC-0. Panini Kanya Maha Vidyalaya Collection. । भूर्भुवःस्वर्ल्ला-

Digitized By Siddhanta eGangotri Gyaan Kosha

जीं३ञ्छाचीं३न्न्यक्ळ्येगव्ळ्यंऽएतदन्नमत्तदेवाऽएतदन्नमद्धिप्रजापते
॥ ८ ॥ कःस्विदेकाकीचरतिकऽउस्विज्जायतेपुनः । किᳬस्विद्धि-
मस्यभेषजङ्किम्म्वावपनम्महत् ॥ ९ ॥ सूर्य्यऽएकाकीचरतिचन्द्रमा-
जायतेपुनः । अग्निर्हिमस्यभेषजम्भूमिरावपनम्महत् ॥ १० ॥
कास्विदासीत्पूर्व्वचित्तिःकिᳬस्विदासीद्बृहद्वयः । कास्विदा-
सीत्पिलिप्पिलाकास्विदासीत्पिशङ्गिला ॥ ११ ॥ द्यौरासीत्पूर्व्व-
चित्तिरश्वऽआसीद्बृहद्वयः । अविरासीत्पिलिप्पिलारात्रिरा-
सीत्पिशङ्गिला ॥ १२ ॥ व्वायुष्ट्वापचतैरवत्वसितग्रीवश्छागैर्न्न्य-
ग्ग्रोधश्चमसैःशल्मलिर्वृद्ध्या । एषस्यराथ्योवृषापड्भिश्चतु-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

बिंभिरेंदं॑गन्न्ब्रह्म्मांक्रृष्ण्णाश्चनोवतुनमोग्नये॑ ॥ १३ ॥ सदृशितोरश्मि॑म-
नारथद्रंसदृशितोरश्मि॑मनाहयं ÷ । सदृशितोऽअप्प्स्वप्सुजाब्ब्रह्म्मा-
सोमंपुरोगवः ॥ १४ ॥ स्वयंव्वांजिँस्तन्न्वङ्कल्प्पयस्वस्वयंय्यंजस्व-
स्वयञ्जुषस्व । महिमातेन्न्येननसन्नशे॑ ॥ १५ ॥ नवाऽउंऽएतन्म्रियं-
सेनरिष्ष्यसिदेवाँ२ऽइदेपिपथिभि ÷ सुगेभि ÷ यत्रासंतेसुकृतोयत्रतेय-
युस्तत्रत्वादेवःसंवितादधातु ॥ १६ ॥ अग्निःपशुरासीत्तेनायजन्त-
सऽएतंल्लोकमंजयद्यस्मिन्नग्निःसतेल्लोकोभंविष्ष्यतितञ्जेष्ष्यसिपिबै-
ताऽअपः । व्वायुःपशुरासीत्तेनायजन्तसऽएतंल्लोकमंजयद्यस्मि॑म-
न्न्वायुःसतेल्लोकोभविष्ष्यतितञ्जेष्ष्यसिपिबैताऽअपः । सूर्य्यं÷पशु-

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

रासीत्तेनायजन्तसऽएतंल्लोकमजयद्यस्मिन्त्सूर्ष्थंसतेलोकोभविष्य-
तितञ्जेष्यसिपिबैताऽअपः ॥ १७ ॥ प्राणायस्वाहापानायस्वाहा-
व्यानायस्वाहा । अम्बेऽअम्बिकेम्बालिकेनमानयतिकश्चन । सस-
स्त्यश्वकःसुभद्रिकाङ्काम्पीलवासिनीम् ॥ १८ ॥ गणानान्त्वागण-
पतिꣳहवामहेप्प्रियाणान्त्वाप्प्रियपतिꣳहवामहेनिधीनान्त्वानिधिपतिꣳ-
हवामहेव्वसोमम । आहमजानिगर्ब्भधमात्वमजासिगर्ब्भधम् ॥ १९ ॥

१. 'मुष्ट्याकृतिर्मकारे स्यान्नकारे तु नखग्रहः' या० शि० श्लो० ६१ । प्रत्य-
वसानगतेऽर्धमात्रिके नकारे हस्तस्य मुष्ट्याकृतिः स्यात् । यथा गणानान्त्वा० धम् ।
एवं नकारे अवसानगते नखग्रहः । तर्जन्याः नखस्य अङ्गुष्ठेन स्पर्शः कार्यः । यथा—
'सहस्तो० रश्मीन् ( शु० य० सं० ३४।४९ ) इत्यादि मन्त्रेषु ।

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By SIddhanta eGangotri Gyaan Kosha

ताऽउभौचतुरः पदः सम्प्रसारयावस्वर्गेलोकेप्प्रोर्णुवाथांव्वृषाव्वा-
जीरेतोधारेतोदधातु ॥ २० ॥ उत्सक्थ्याऽअवगुदन्धेहिसमञ्जिञ्चारं-
याव्वृषन् । यस्त्रीणाञ्जीवभोजनः ॥ २१ ॥ यकासकौशकुन्तिकाहल-
गितिव्वञ्चति । आहन्तिगभेपसोनिगल्गलीतिधारका ॥ २२ ॥ यको-
सकौशकुन्तकऽआहलगितिव्वञ्चति । व्विवक्षतऽइवतेमुखमध्वर्यो-
मानस्त्वमभिभाषथाः ॥ २३ ॥ माताचतेपिताचतेग्ग्रंव्वृक्षस्यरोहतः ।
प्रतिलामीतितेपितागभेमुष्टिमतः सयत् ॥ २४ ॥ माताचतेपिताच-
तेग्ग्रेव्वृक्षस्यक्रीडतः । व्विवक्षतऽइवतेमुखब्रह्मन्मात्वंव्वदोबहु
॥ २५ ॥ ऊर्द्ध्वामेनामुच्छ्रापयगिरौभारः हरन्निव । अथास्यैमद्ध्य-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


मेधताᳪंशीतेव्वातेपुनन्निव ॥ २६ ॥ ऊर्द्ध्वमेनमुच्छ्रयतागिरौभा-
रᳪंहरन्निव । अथास्यमद्ध्यमेजतुशीतेव्वातेपुनन्निव ॥ २७ ॥ यदे-
स्याऽअᳪंहुभेद्यांᳬकृधुस्थूलमुपातसत् । मुष्काविदस्याऽएजतोगो-
शफेशकुलाविव ॥ २८ ॥ यद्देवासोललामगुम्प्रविष्टीमिनमाविषुः ।
सक्थ्नादेदिश्यतेनारीसत्यस्याक्षिभुवोयथा ॥ २९ ॥ यद्धरिणोयव-
मत्तिनपुष्टम्पशुमन्न्यते । शूद्रायदर्य्यजारानपोषायधनायति ॥ ३० ॥
यद्धरिणोयवमत्तिनपुष्टम्बहुमन्न्यते । शूद्रोयदर्य्यायैजारोनपोष-
मनुमन्न्यते ॥ ३१ ॥ दधिक्राव्णोऽअकारिषञ्जिष्णोरश्वस्यवा-
जिनः । सुरभिनोमुखाकरत्प्रणऽआयूᳪंषितारिषत् ॥ ३२ ॥ गायत्री-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By SIddhanta eGangotri Gyaan Kosha
त्रिष्टुब्जगत्यनुष्टुप्पङ्क्त्यासह । बृहत्युष्णिहाककुप्सूचीभिः शम्यन्तुत्वा ॥ ३३ ॥ द्विपदायाश्चतुष्पदास्त्रिपदायाश्चषट्पदाः । विच्छन्दायाश्चसच्छन्दाःसूचीभिःशम्यन्तुत्वा ॥ ३४ ॥ महानाम्न्योरेवत्योविश्वाऽआशाःप्रभूवरीः । मैघीर्विद्युतोव्वाचःसूचीभिःशम्यन्तुत्वा ॥ ३५ ॥ नार्य्यस्तेपत्न्योलोमव्विचिन्वन्तुमनीषया । देवानाम्पत्न्योदिशःसूचीभिःशम्यन्तुत्वा ॥ ३६ ॥ रजताहरिणीःसीसायुजोयुज्यन्तेकर्म्मभिः । अश्वस्यव्वाजिनस्त्वचिसिमाःशम्यन्तुशम्यन्तीः ॥ ३७ ॥ कुविदङ्गयवमन्तोयवञ्चिद्यथादान्त्यनुपूर्व्वंव्वियूय । इहेहैषाङ्कृणुहिभोजनानियेबर्हिषोनमऽउक्तिं-
CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


ऽसृजन्ति ॥ ३८ ॥ कस्त्वाछ्यति कस्त्वा विशास्ति कस्ते गात्राणि शम्यति । कउँते शमिता कविः ॥ ३९ ॥ ऋतवस्तऽऋतुथा पर्व्व शमिता रो विशासतु । संव्वत्सरस्य तेजसा शमीभिः शम्यन्तु त्वा ॥ ४० ॥ अर्द्धमासाः परूंषि ते मासाऽआच्छ्यन्तु शम्यन्तः । अहोरात्राणि मरुतो विलिष्टं सूदयन्तु ते ॥ ४१ ॥ दैव्याऽअध्वर्य्यवस्त्वाछ्यन्तु विचशासतु । गात्राणि पर्व्वशस्ते सिमाः कृण्वन्तु शम्यन्तीः ॥ ४२ ॥ द्यौस्ते पृथिव्यन्तरिक्षं व्वायुश्छिद्रं पृणातु ते । सूर्य्यस्ते नक्षत्रैः सह लोकं कृणोतु साधुया ॥ ४३ ॥ शन्ते परेभ्यो गात्रेभ्यः शमस्त्ववरेभ्यः । शमस्थभ्यो मज्जभ्यः शम्वस्तु तन्वै तव ॥ ४४ ॥

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

कः स्विदेकाकी चरति क उ स्विज्जायते पुनः । किꣳ स्विद्धिमस्य भेषजं किम्वावपनं महत् ॥ ४५ ॥ सूर्य्य एकाकी चरति चन्द्रमा जायते पुनः । अग्निर्हिमस्य भेषजं भूमिरावपनं महत् ॥ ४६ ॥ किꣳ स्वित्सूर्य्यसमं ज्योतिः किꣳ समुद्रसमꣳ सरः । किꣳ स्वित्पृथिव्यै वर्षीयः कस्य मात्रा न विद्यते ॥ ४७ ॥ ब्रह्म सूर्य्यसमं ज्योतिर्द्यौः समुद्रसमꣳ सरः । इन्द्रः पृथिव्यै वर्षीयान्गोस्तु मात्रा न विद्यते ॥ ४८ ॥ पृच्छामि त्वा चितये देवसख यदि त्वमत्र मनसा जगन्थ । येषु विष्णुस्त्रिषु पदेष्वेष्टस्तेषु विश्वं भुवनमा विवेशाँ३ ॥ ४९ ॥ अपि तेषु त्रिषु पदेष्वस्मि येषु विश्वं भुवनमाविवेश । सद्यः पर्य्ये-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha
मिपृथिवीमुतद्यामेकेनाङ्गेनदिवोऽअस्यपृष्ठम् ॥ ५० ॥ केष्वन्तः पुरुषऽआविवेशकान्यन्तःपुरुषेऽअर्प्पितानि । एतद्ब्रह्मन्नुपवल्हामसित्वाकिꣳस्विन्नःप्रतिवोचास्यत्र ॥ ५१ ॥ पञ्चस्वन्तःपुरुषऽआविवेशतान्यन्तःपुरुषेऽअर्प्पितानि । एतत्त्वात्रप्रतिमन्वानोऽअस्मिनमाययाभवस्युत्तरोमत् ॥ ५२ ॥ कास्विदासीत्पूर्व्वचित्तिः किꣳस्विदासीद्बृहद्वयः । कास्विदासीत्पिलिप्पिलाकास्विदासीत्पिशङ्गिला ॥ ५३ ॥ द्यौरासीत्पूर्व्वचित्तिरश्वऽआसीद्बृहद्वयः । अविरासीत्पिलिप्पिलारात्रिरासीत्पिशङ्गिला ॥ ५४ ॥ काऽईमरेपिशङ्गिलाकाऽईङ्कुरुपिशङ्गिला । कईमास्कन्दमर्षतिकऽईम्पन्थांव्विसर्-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

र्प्पति ॥ ५५ ॥ अजारेपिशङ्गिलाश्वावित्कुरुपिशङ्गिला । शशऽआ-
स्कन्दमर्षत्यहिᳬपन्थांव्विसर्प्पति ॥ ५६ ॥ कत्यस्यव्विष्ठाःकत्यक्षरा-
णिकतिहोमासᳬकतिधासमिद्धᳬ । यज्ञस्यत्वाव्विदथापृच्छमत्रकति-
होतारऽऋतुशोयजन्ति ॥ ५७ ॥ षडस्यव्विष्ठाःशतमक्षराण्यशी-
तिर्होमाᳬसमिधोहतिस्रः । यज्ञस्यतेव्विदथाप्प्रब्ब्रवीमिसप्तहोतारऽ-
ऋतुशोयजन्ति ॥ ५८ ॥ कोऽअस्यव्वेदभुवनस्यनाभिङ्कोद्यावापृथि-
वीऽअन्तरिक्षम् । कःसूर्य्यस्यव्वेदबृहतोजनित्रङ्कोव्वेदचन्द्रमसंय्य-
तोजाः ॥ ५९ ॥ व्वेदाहमस्यभुवनस्यनाभिंव्वेदद्यावापृथिवीऽ-
अन्तरिक्षम् । व्वेदसूर्य्यस्यबृहतोजनित्रमथोव्वेदचन्द्रमसंय्यतोजाः

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

॥ ६० ॥ पृच्छामित्वापरमन्तम्पृथिव्व्याः पृच्छामियत्रभुवनस्यना-
भिः । पृच्छामित्वाव्वृष्णोऽअश्श्वस्यरेतः पृच्छामिव्वाचः परमंव्व्योम
॥ ६१ ॥ इयंव्वेदिः परोअन्तः पृथिव्व्याऽअयंय्यज्ञोभुवनस्यनाभिः ।
अयꣳसोमोव्वृष्णोऽअश्श्वस्यरेतोब्ब्रह्मायंव्वाचः परमंव्व्योम ॥६२॥
सुभूः स्वयम्भूः प्रथमोन्तर्म्महत्यर्ण्णवे । दधेहगर्ब्भमृत्वियंय्यतोजा-
तः प्रजापतिः ॥ ६३ ॥ होतायक्षत्प्रजापतिꣳसोमस्यमहिम्म्नः ।
जुषताम्पिबतुसोमꣳहोतर्य्यज ॥ ६४ ॥ प्रजापतेनत्वदेतान्यन्न्यो-
व्विश्श्वारूपाणिपरिताबभूव । यत्कामास्तेजुहुमस्तन्नोऽअस्तुव्वयꣳ
स्यामपतयोरयीणाम् ॥ ६५ ॥ इति संहितायां त्रयोविंशोऽध्यायः ॥

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

# ❀ अथ चतुर्विंशोऽध्यायः ❀

ॐ अश्श्वस्तूपरो गोमृगस्ते प्राजापत्याः कृष्णग्रीवऽआग्नेयो रराटे पुरस्तात्सारस्वती मेष्यधस्ताद्धन्न्वोराश्श्विनावधोरामौ बाह्वोः सौमापौष्णः श्यामो नाब्भ्याᳬसौर्य्ययामौ श्श्वेतश्च्च कृष्णश्च्च पाश्श्वयोस्त्वाष्ट्रौ लोमशसक्क्थौ सक्क्थ्योर्व्वायव्यः श्वेतः पुच्छऽइन्द्राय स्वपस्याय व्वेहद्वैष्णवो व्वामनः ॥ १ ॥ रोहितो धूम्म्ररोहितः कर्क्कन्धुरोहितस्ते सौम्म्या बब्भ्रुररुणबब्भ्रुः शुकबब्भ्रुस्ते व्वारुणाः शितिरन्ध्रोऽन्न्यतः शितिरन्ध्रः समन्तशितिरन्ध्रस्ते सावित्राः शितिबाहुरन्न्यतः

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

शितिबाहुꣳसमन्तशितिबाहुस्तेबार्हस्पत्याः पृषतीक्षुद्रपृषतीस्थूलपृष-
तीतामैत्रावरुण्यः ॥ २ ॥ शुद्धवालꣳसर्व्वशुद्धवालोमणिवालस्तऽआ-
श्विनाः श्येतःश्येताक्षोरुणस्तेरुद्रायपशुपतयेकर्ण्णायामाऽअवलि-
प्तारौद्रानभोरूपाःपार्ज्जन्न्याः ॥ ३ ॥ पृश्निस्तिरश्चीनपृश्निरू-

१. 'ऊष्मन्तस्स्थाब्भ्यश्च स्पर्शः' (शु० य० ४।१०२) ऊष्माणः—शषसहाः अन्तस्स्थाः—यरलवा। एतेभ्यः परः स्पर्शो द्विरुच्यते । अत्र—एकः शकारो द्वौ नकारौ संयोगः । एवम्—'अश्म्मो' ( १८।१३ ) इत्यत्रापि—शकारो द्वौ मकारौ संयोगः । केचित्—अत्र स्थले—पार्ष्ण्यां ( २५।४० ) इत्यत्र रेफः—षकारो द्वौ णकारौ यकारश्च संयोगं मन्यन्ते तदसाधुः। णकारस्य द्वित्वसम्भावना न कार्या 'नास्वरपूर्वा ऊष्मान्तस्स्थाः' १०५ अस्वरपूर्वा ऊष्माणोऽन्तस्थाश्च परान्स्पर्शान्न द्विर्भावयन्ति । अतः अनेन सूत्रेण निषेधात् । नेदमुदाहरणं युक्तम् ।

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

इ॒ध्र्वम्पृश्नि॑स्ते मा॑रु॒ताः फ॒ल्गूर्लोहि॒तोर्णी पलक्षी॒ताः सा॑रस्व॒त्य॑ : प्लीहा॒कर्णः॑ शु॒ण्ठाकर्णोऽद्ध्यालोहकर्ण॒स्ते त्वा॒ष्ट्राः कृ॒ष्णग्री॑वः शिति॒कक्षो॑ऽञ्जिस॒क्थस्त ऐन्द्रा॒ग्नाः कृ॒ष्णाञ्जि॒रल्पा॑ञ्जिर्म॒हाञ्जि॒स्त उ॑ष॒स्याः ॥ ४ ॥ शि॒ल्पा वै॑श्वदे॒व्यो रोहि॑ण्य॒स्त्र्यव॑यो वा॒चेऽवि॑ज्ञाता॒ऽअदि॑त्यै॒ सरू॑पा धा॒त्रे व॑त्सत॒र्य्यो दे॒वानाम्पत्नी॑भ्यः ॥ ५ ॥ कृ॒ष्णग्री॑वाऽआग्ने॒याः शि॑ति॒भ्र॒वो वसू॑ना॒ᳫं रोहि॑ता रु॒द्राणा॒ᳫं श्वे॒ताऽअ॑वरो॒किण॑ऽआदि॒त्यानां॒ नभो॑रूपाः पार्ज॒न्याः ॥ ६ ॥ उ॒न्नतऽऋ॑ष॒भो वा॑म॒नस्त ऐ॑न्द्रावैष्ण॒वाऽउ॑न्न॒तः शि॑तिबा॒हुः शि॑तिपृ॒ष्ठस्त ऐ॑न्द्राबार्हस्प॒त्याः शु॒क्ररू॑पा वाजि॒नाः क॒ल्माषा॑ऽआग्निमारु॒ताः श्या॒माः पौ॒ष्णाः

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

॥ ७ ॥ एताऽऐन्द्राग्ग्नाद्विरूपाऽअग्ग्नीषोमीयाव्वामनाऽअनड्वाहऽ-
आग्ग्नावैष्ष्णवाव्वशामैत्रावरुण्युन्यतऽएन्यो मैत्र्य ÷ ॥ ८ ॥ कृष्ष्ण-
ग्ग्रीवाऽआग्ग्नेयावब्भ्रवं ÷ सौम्म्याश्श्वेताव्वायव्व्याऽअविज्ञाताऽअ-
दित्यै सरूपा धात्रे व्वत्सतर्ष्यो देवानाम्पत्क्नीब्भ्यः ॥ ९ ॥ कृष्ष्णा भौमा-
धूम्म्राऽआन्तरिक्षा बृहन्तो दिव्व्याश्शबला व्वैद्युताश्सिध्मास्तारकाः
॥ १० ॥ धूम्म्रान्व्वसन्तायालभते श्श्वेतान्ग्ग्रीष्ष्माय कृष्ष्णान्व्वर्षाब्भ्यो-
रुणाञ्छरदे पृषतो हेमन्ताय पिशङ्गाञ्छिशिराय ॥ ११ ॥ त्र्यव्वयो गायत्र्यै-
पञ्चाव्वयस्त्रिष्टुभे दित्यवाहो जगत्यै त्रिवत्साऽअनुष्टुभे तुर्य्यवाहऽउष्ष्णि-
हे ॥ १२ ॥ पष्ठवाहो व्विराजऽउक्षाणो बृहत्त्याऽऋषभाः ककुभेनड्वा-
CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

हं॑ पङ्क्त्यै॑ धे॒नवी॑ति॒च्छन्द॑से ॥ १३ ॥ कृ॒ष्णग्री॑वाऽआग्ने॒या ब॒भ्रव॑ सौ॒म्याऽउ॑पध्व॒स्ताः सा॑वि॒त्रा व॒त्सत॒र्य्यः सार॑स्व॒त्यः श्या॒माः पौ॒ष्णाः पृश्न॑यो मारु॒ता ब॑हुरू॒पा वै॑श्वदे॒वा व॒शा द्या॑वापृथि॒वीयाः॑ ॥ १४ ॥

उ॒क्ताः स॑ञ्च॒राऽए॒ताऽऐ॑न्द्रा॒ग्नाः कृ॒ष्णा वा॑रु॒णाः पृश्न॑यो मारु॒ताः का॒यास्तू॑प॒राः ॥ १५ ॥ अ॒ग्नये॒ऽनीक॑वते प्रथम॒जाना ल॑भते म॒रुद्भ्यः॑ सा॒न्तप॒नेभ्यः॑ सवा॒त्यान्म॒रुद्भ्यो॑ गृहमे॒धिभ्यो॒ बष्कि॑हान्म॒रुद्भ्यः॑ क्री॒डिभ्यः॑ सꣳसृ॒ष्टान्म॒रुद्भ्यः॒ स्वत॑वद्भ्यो॒ऽनुसृ॒ष्टान् ॥ १६ ॥

उ॒क्ताः स॑ञ्च॒राऽए॒ता ऐ॑न्द्रा॒ग्नाः प्रा॑शृ॒ङ्गा मा॑हे॒न्द्रा ब॑हुरू॒पा वै॑श्वक॒र्म॒णाः ॥ १७ ॥ धू॒म्रा ब॒भ्रुनी॑काशाः पितॄ॒णाꣳ सोम॑वतां ब॒भ्रवो॑

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

धूम्म्रनीकाशाःपितृणांबर्हिषदाङ्कृष्णाबभ्रुनीकाशाःपितृणामग्निन-
ष्वात्तानाङ्कृष्णाःपृषन्तस्त्रैयम्बकाः ॥ १८ ॥ उक्त्काःसंश्रुरा-
ऽपताःशुनासीरीयाःश्वेतावायव्याः श्वेताःसौर्य्याः ॥ १९ ॥
वसन्तायकपिञ्जलानालभतेग्रीष्मायकलविङ्कान्वर्षाभ्यस्तित्ति-
रीञ्छरदेवर्तिकाहेमन्तायककरान्छिशिरायविककरान् ॥ २० ॥ स-
मुद्रायशिशुमारानालभतेपर्ज्जन्यायमण्डूकानद्भ्योमत्स्यान्मित्त्रा-
यकुलीपयान्वरुणायनाक्क्रान् ॥ २१ ॥ सोमायहꣳसानालभतेवा-
यवेबलाकाऽइन्द्राग्निभ्याङ्क्रुञ्चान्मित्त्रायमद्गून्वरुणायचक्रवा-
कान् ॥ २२ ॥ अग्नयेकुटरूनालभतेवनस्पतिभ्यऽउलूकानग्नीषोमा-

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

भ्याश्वाषान्निश्विभ्याम्मयूरान्मित्रावरुणाभ्याङ्कपोतान् ॥२३॥ सो-
मायलबानालभतेत्वष्ट्रेकौलीकान्गोषादीर्देवानाम्पत्नीभ्यःकुलीकादे-
वजामिभ्योग्नयेगृहपतयेपारुष्णान् ॥ २४ ॥ अन्हेपारावतानालभते-
रात्र्यैसीचापूरहोरात्रयोःसन्धिभ्योजतूर्मासेभ्योदात्यौहान्त्संवत्स-
रायमहतःसुपर्णान् ॥ २५ ॥ भूम्याऽआखूनालभतेन्तरिक्षायपा-
ङ्क्त्रान्दिवेकशान्दिग्भ्योनकुलान्बभ्रुकानवान्तरदिशाभ्यः ॥२६॥
वसुभ्यऽऋश्यानालभतेरुद्रेभ्योरुरूनादित्येभ्योन्यङ्कून्विश्वे-
भ्योदेवेभ्यःपृषतान्त्साध्येभ्यःकुलुङ्गान् ॥ २७ ॥ ईशानाय

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

परस्वतऽआलभते मित्त्राय गौरान्वरुणाय महिषान्बृहस्पतये गवयाँस्त्वष्ट्रऽउष्ट्रान् ॥ २८ ॥ प्रजापतये पुरुषान्हस्तिनऽआलभते वाचे प्लुषीँश्चक्षुषे मशकाञ्छ्रोत्राय भृङ्गाः ॥२९॥ [ शतम् १४०० ] प्रजापतये च वायवे च गोमृगो वरुणायारण्यो मेषो यमाय कृष्णो मनुष्यराजाय मर्कटः शार्दूलाय रोहिदृषभाय गवयी क्षिप्रश्येनाय वर्तिकानी-

१. इत्यत्र 'तथयोः सम्' (३।१३६) तकारथकारयोः प्रत्यययोर्नकारः सकारमापद्यते, उपधा चानुस्वारेण व्यवधीयते । एवं अन्याँस्ते (१७।११) 'कᳬस्थामोर्देवसवितः' इति शाखान्तरीयमप्युदाहरणम् । थकारस्य रूपोदाहरणं—विद्वान् थकारः—विद्वाँस्थकारः ।

२. इत्यत्रापि 'चछयोः शम्' (३।१३७) इत्यनेन शकारमापद्यते ।

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

लं॒क्रो॑ क्रिक्रमि॑ः समु॒द्राय॑ शिशु॒मारो॑ हि॒मव॑ते ह॒स्ती ॥ ३० ॥ म॒युः प्रा॑-
जाप॒त्य उ॒लो ह॑लि॒क्ष्णो॑ वृष॒द॒ꣳशस्ते धा॒त्रे दि॒शाङ्क्ङ्क्षो धुङ्क्षा॑ग्ने॒यी क॑ल॒-
वि॒ङ्को लोहि॒ताहि॑ पुष्करसा॒दस्ते त्वा॒ष्ट्राय॒ वा॒चे क्रु॒ञ्चः ॥ ३१ ॥ सोमा॑-
य कु॒लुङ्ग॑ आ॒र॒ण्यो॒ऽजो न॑कु॒लः शका॒ ते पौ॒ष्णाः क्रो॒ष्टा मा॒यो॒रिन्द्र॑स्य गौ॒-
रमृ॒गः पि॒द्वो॒ न्य॑ङ्कुः कक्क॒टस्तेऽनु॑मत्यै प्रति॒श्रुत्का॑यै चक्रवा॒कः ॥ ३२ ॥
सौ॒री ब॒लाका॑ शा॒र्गः सृ॒ज॒यः श॒याण्ड॑क॒स्ते मै॒त्राः सर॑स्वत्यै शारिः पुरु-
ष॒वाक् श्वा॒वि॒द्भौमी॑ शार्दू॒लो वृकः॑ पृदा॑कु॒स्ते म॒न्यवे॒ सर॑स्वते॒ शुकः॑
पुरु॒ष॒वाक् ॥ ३३ ॥ सु॒प॒र्णः पार्ज॑न्य आ॒ति॒र्वा॒ह॒सो द॒र्वि॒दा ते वा॒-
यवे॒ बृह॒स्पत॑ये वा॒चस्पत॑ये पैङ्ग॒रा॒जो॒ऽल॒ज आ॑न्तरि॒क्षः प्ल॒वो म॒द्गुर्म॑-

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

त्स्यस्तेनंदीपतयेद्यावापृथिवीयं॑÷कूर्म्मः॑ ॥ ३४ ॥ पुरुषमृगश्चन्द्र-
मसोगोधाकालकादार्व्वाघाटस्तेव्वनस्पतीनाङ्कृकवाकु÷ सावित्रो-
हꣳसोव्वातस्यनाक्क्रोमकरःकुलीपयस्तेकूपारस्यह्रियैशल्यकः ॥३५॥
एण्यन्हौमण्डूकोमूषिकातित्तिरिस्तेसर्प्पाणांल्लोपाशऽआश्विनः
कृष्णोरात्र्याऽऋक्षोजतूः सुषिलीकातऽइतरजनानाञ्जहकार्व्वैष्णवी
॥ ३६ ॥ अन्यवापोर्द्धमासानामृश्योमयूर÷ सुपर्ण्णस्तेगन्ध-
र्व्वाणामपामुद्रोमासाङ्कश्यपोरोहित्कुण्डृणाचीगोलत्तिकातेप्सर-

1. 'कश्यपस्यानार्षेये जातूकर्ण्यस्य' (शु० प्रा० सू० १५८) जातूकर्णस्या-
चार्यमते कश्यपशब्दस्यार्षेयवर्जं यकारो न भवति एतदुक्तं भवति कच्छपे वाच्ये

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

साम्मृत्यवैसितः ॥ ३७ ॥ व्वर्षाहूर्ऋतूनामाखुःकशोमा-
न्थालस्तेपितृणाम्बलायाजगरोव्वसूनाङ्कपिञ्जलःकपोतऽउलूकःशश-
स्तेनिर्ऋत्यैव्वरुणायारण्योमेषः ॥ ३८ ॥ श्वित्रऽआदित्यानामुष्ट्रो-
घृणीवान्वार्ध्रीनसस्तेमत्याऽअरण्यायसृमरोरुरूरौद्रःक्कयिः कुट-

द्विरुक्तौ सत्यां चकारो भवति किन्तु शकारस्य छकारादेशः स्यात् जातूकर्ण्यमते । जातूकर्ण्यस्येति किम्—काण्वमाध्यन्दिनादेर्माभूत् । अपामुद्ग्रो मासाङ्कश्यपः ।

१. 'पक्षौ वितत्य खे गृध्रो भ्रान्त्या सङ्कुच्य तिष्ठति । एवं वर्णाः प्रयोक्तव्या 'वार्ध्रीनसो निदर्शनम्' ( या० शि० श्लोक ५८ ) गृध्रः, पक्षी, भ्रांत्या, खे—आकाशे, पक्षौ, वितत्य-विस्तीर्य, पुनः सङ्कुच्य, तिष्ठति, एवं, वर्णाः—दीर्घाः गुरुभूताः प्रयोक्तव्याः ।

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

रुहृत्यैहस्तेव्वाजिनाङ्कामायपिकः॥ ३९ ॥ खड्गोव्वैश्श्वदेवःश्श्वा-
कृष्णः कर्णोगर्द्दभस्तरक्षुस्तेरक्षसामिन्द्रायसूकरः सिँहोमारुतःकृकलासःपिप्पकाशकुनिस्तेशरव्यायैव्विश्श्वेषान्देवानाम्पृषतः ॥ ४० ॥

इति संहितायां चतुर्विंशोऽध्यायः ॥

## ❀ अथ पञ्चविंशोऽध्यायः ❀

ॐ शादन्दद्भिरवकान्दन्तमूलैम्मृदम्बर्स्वैस्तेगान्दँष्ट्राभ्याँ सरस्वत्याऽअग्रजिह्वञ्जिह्वायाऽउत्सादमवक्रन्देनतालुव्वाजँ हनुभ्यामपऽआस्येनव्वृषणमाण्डाभ्यामादित्याँश्म्मश्श्रुभिःपन्था-

CC-0, Panini Kanya Maha Vidyalaya Collection

Digitized By Siddhanta eGangotri Gyaan Kosha

नम्भ्रूभ्यान्द्यावापृथिवीव्वर्तोभ्यांव्विद्युतङ्कनीनकाभ्या ᳪ शुक्लाय स्वाहाकृष्णायस्वाहापार्य्याणिपक्ष्माण्यवार्य्याऽइक्षवोवार्य्याणिपक्ष्माणिपार्य्याऽइक्षवः ॥ १ ॥ व्वातम्प्राणेनापानेननासिकेऽउपयाममधरेणौष्ठेनसदुत्तरेणप्प्रकाशेनान्तरमनूकाशेनबाह्यन्निवेष्यम्मूर्द्ध्नास्तनयित्नुन्निर्बाधेनाशनिम्मस्तिष्क्केणव्विद्युतङ्कनीनकाभ्याङ्कर्णाभ्या ᳪ श्रोत्र ᳪ श्रोत्राभ्याङ्कर्णौतेदनीमधरकण्ठेनापः शुष्ककण्ठेनचित्तम्मन्न्याभिरदितिᳪ शीर्ष्णानिर्ऋतिन्निर्जर्जल्ल्येनशीर्ष्णासङ्क्रोशैः प्प्राणान्रेष्माणᳪ स्तुपेन ॥ २ ॥ मशकान्केशैरिन्द्र ᳪ स्वपसाव्वहेनबृहस्पतिᳪ शकुनिसादेनकूर्म्माञ्छफैराक्रमणᳪ स्थूरा-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

भ्यामृक्षलाभिं कपिञ्जलाञ्जवञ्जङ्घाभ्यामद्ध्वानम्बाहुभ्याञ्जाम्बीलेना-
रण्ण्यमग्निमतिरुग्भ्याम्पूषणन्दोर्भ्यामश्विनावंसाभ्या ँ रुद्र-
ँ रोराभ्याम् ॥ ३ ॥ अग्नेः पक्षतिर्व्वायोर्न्निपक्षतिरिन्द्रस्यतृती-
यासोमस्यचतुर्त्थ्यदित्यैपञ्चमीन्द्राण्यैषष्ठीमरुता ँ सप्तमीबृहस्पते-
रष्टम्यर्य्यम्णोनवमीधातुर्द्दशमीन्द्रस्यैकादशीव्वरुणस्यद्द्वादशीय-
मस्यत्रयोदशी ॥ ४ ॥ इन्द्राग्न्योः पक्षतिः सरस्वत्यैनिपक्षतिर्म्मित्रस्य-
तृतीयापाञ्चतुर्त्थीनिर्ऋत्यैपञ्चम्यग्नीषोमयोः षष्ठ्ठीसर्प्पाणा ँ सप्त-
मीव्विष्ष्णोरष्टमीपूष्ष्णोनवमीत्वष्टुर्द्दशमीन्द्रस्यैकादशीव्वरुणस्य
द्द्वादशीयम्यै त्रयोदशीद्यावापृथिव्योर्द्दक्षिणम्पार्श्वंव्विश्श्वेषान्दे-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

वानामुत्तरम् ॥ ५ ॥ मरुता ꣳ स्कन्धाव्विश्वेषान्देवानाम्प्रथमा-
कीकसारुद्द्राणान्द्वितीयादित्यानान्तृतीयाव्वायोः पुच्छमग्नीषोमयो-
र्भासदौक्कुञ्चौश्रोणिभ्यामिन्द्राबृहस्पतीऽऊरुभ्याम्मित्त्रावरुणा-
वल्गाभ्यामाक्क्रमण ꣳ स्थूराभ्याम्बलङ्कुष्ठाभ्याम् ॥ ६ ॥
पूषणंव्वनिष्टुनान्धाहीन्स्थूलगुदयासर्प्पान्गुदाभिर्व्विह्रुतऽआन्त्रैरपो-
व्वस्तिनाव्वृषणमाण्डाभ्यांव्वाजिन ꣳ शेपेनप्प्रजा ꣳ रेतसाचाषान्पि-
त्तेनप्प्रदरान्पायुनाकूश्माञ्छकपिण्डैः ॥ ७ ॥ इन्द्रस्यक्क्रोडो-
दित्यैपाजस्यन्दिशाञ्जत्रवोदित्यैभसज्जीमूतान्हृदयौपशेनान्तरिक्षम्पु-
रीततानभऽउदर्य्यं णचक्क्रवाकौमतस्नाभ्यान्दिवंव्वृक्काभ्याङ्गिरी-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

न्प्लाशिभिरुपलान्प्लीन्हाव्वल्मीकान्क्लोमभिग्ग्लौभिग्गुल्मान्हि-
राभि॑ स्त्रवन्तीर्हृदान्कुक्षिभ्याँ ॐ समुद्रमुदरेणव्वैश्वानरम्भस्म-
ना ॥ ८ ॥ व्विधृतिन्नाभ्याघृत ६ रसेनापोयूष्णामरीचीर्व्वि-
प्रुड्भिर्नीहारमूष्मणाशीनंव्वसयाप्रुष्व्वाऽअश्रुभिर्ह्रादुनीर्दूषीकाभि-
रस्नारक्षा ॐ सिचित्राण्यङ्गैर्न्नक्षत्राणिरूपेणपृथिवीन्त्वचाजुम्बकाय
स्वाहा ॥ ९ ॥ हिरण्यगर्भःसमवर्त्तताग्रेभूतस्यजातःपतिरेकऽआ-
सीत् । सदाधारपृथिवीन्द्यामुतेमाङ्कस्मैदेवायहविषाव्विधेम ॥ १० ॥
यःप्राणतोनिमिषतोमहित्वैकऽइद्राजाजगतोबभूव । यऽईशेऽअस्य
द्विपदश्चतुष्पदःकस्मैदेवायहविषाव्विधेम ॥ ११ ॥ यस्येमेहिमव-

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

न्तोमहित्वायस्यंसमुद्रꣳरसयासहाहुः । यस्येमाःप्प्रदिशोयस्य
बाहूकस्म्मैदेवायहविषाव्विधेम ॥ १२ ॥ यऽआत्मदाबलदायस्यव्वि-
श्श्वंऽउपासतेप्प्रशिषंयस्यदेवाः । यस्यच्छायामृतंय्यस्यमृत्त्युःकस्म्मै
देवायहविषाव्विधेम ॥ १३ ॥ आनोभद्द्राःक्क्रतवोयन्तुव्विश्श्व-
तोदब्धासोऽअपरीतासऽउद्भिदः । देवानोयथासदमिद्वृधेऽअस-
न्नप्प्रायुवोरक्षितारोदिवेदिवे ॥ १४ ॥ देवानाम्भद्द्रासुमतिर्ऋजूय-

१. इत्यत्र 'यस्यातिहायसहेतिन' ( ४।२६ ) इति सूत्रेण यस्य, अतिहाय, सह, इत्येतैः पदैरुपहितः स्वरः छकारे प्रत्ययेन चकारेण व्यवधीयते । एवमन्यत्र स्थलेष्वपि-यथा-अतिशयच्छिद्रा ( २५।४१ ) सहच्छन्दसः ( ३४।४८ ) ।

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

तान्देवानाᳪ रातिरभिनोनिवर्त्तताम् । देवानाᳪ सख्यमुपसेदिमा
व्वयन्देवानऽआयुःप्प्रतिरन्तुजीवसे ॥ १५ ॥ तान्पूर्व्वयानिविदाहूम-
हेव्वयम्भगम्मित्रमदितिन्दक्षमस्त्रिधम् । अर्य्यमणंव्वरुण ᳪ सोमम-
श्विनासरस्वतीनःसुभगामयस्करत् ॥ १६ ॥ तन्नोव्वातोमयोभुव्वा-
तुभेषजन्तन्मातापृथिवीतत्पिताद्यौः । तद्ग्रावाणःसोमसुतोमयो-
भुवस्तदश्विनाशृणुतन्धिष्ण्यायुवम् ॥ १७ ॥ तमीशानञ्जगतस्त-
स्थुषस्पतिन्धियञ्जिन्वमवसेहूमहेव्वयम् । पूषानोयथाव्वेदसाम-
सद्वृधेरक्षितापायुरदब्धःस्वस्तये ॥ १८ ॥ स्वस्तिनऽइन्द्रोव्वृद्धश्र-
वाःस्वस्तिनःपूषाविश्ववेदाः । स्वस्तिनस्तार्क्ष्योऽअरिष्टनेमिःस्व-

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

स्तिनोबृहस्पतिर्दधातु ॥ १९ ॥ पृषदश्श्वामरुतंपृश्शिन्नमातरंशु-
भंय्यावानोव्विदत्थेषुजग्ग्मयं । अग्निजिह्व्वामनवंसूरचक्षसोव्वि-
श्श्वेनोदेवाऽअवसागमन्निह ॥ २० ॥ भद्द्रङ्कर्णेभिंश्शृणुयामदेवाभ-
द्द्रम्पश्श्येमाक्षभिर्य्यजत्राः । स्थिरैरङ्गैस्तुष्टुवा ँ सस्तनूभिर्व्व्यशेम-
हिदेवहितंय्यदायुः ॥ २१ ॥ शतमिन्नुशरदोऽअन्तिदेवायत्रान-
श्चक्राजरसन्तनूनाम् । पुत्रासोयत्रपितरोभवन्तिमानोमद्ध्यारीरि-
षतायुर्ग्गन्तोः ॥ २२ ॥ अदितिर्द्द्यौरदितिरन्तरिक्षमदितिर्म्मातास-
पितासपुत्रः । व्विश्श्वेदेवाऽअदितिंपञ्चजनाऽअदितिर्ज्जातमदि-
तिर्ज्जनित्वम् ॥ २३ ॥ मानोमित्रोव्वरुणोऽअर्य्यमायुरिन्द्रऽऋभुक्षा

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

मरुतं परिक्ख्यन् । यद्वाजिनो देवजातस्य सप्तेः प्प्रवक्ष्यामो व्विदथे-
व्वीर्याणि ॥ २४ ॥ यन्निर्णिजा रेक्णसा प्प्रावृतस्य रातिं गृभीतां मुख-
तो नयन्ति । सुप्प्राङजो मेम्म्यद्विश्वरूप ऽइन्द्रापूष्णोः प्प्रियमप्प्येे-
ति पाथः ॥ २५ ॥ एष च्छागः पुरो ऽअश्वेन व्वाजिना पूष्णो भागो-
नीयते व्विश्वदेव्यः । अभिप्प्रियं यत्पुरोडाशमर्व्वता त्वष्टेदेनं सौ-
श्रवसाय जिन्वति ॥ २६ ॥ यद्धविष्यमृतुशो देवयानं त्रिर्म्मानुषाः
पर्य्यश्वं नयन्ति । अत्रा पूष्णः प्प्रथमो भाग ऽएति यज्ञं देवेभ्यः प्प्रति-
वेदयन्नजः ॥ २७ ॥ होताध्वर्युरावया ऽअग्निमिन्धो ग्ग्रावग्ग्राभ ऽउत-
श ᳪ स्ता सुविप्प्रः । Panini Kanya Maha Vidyalaya Collection. तेन यज्ञेन स्वरंकृतेन स्विष्टेन व्वक्षणा ऽआपृण-

Digitized By Siddhanta eGangotri Gyaan Kosha
द्ध्वम् ॥ २८ ॥ यूपव्रस्काऽउतयेयूपवाहाश्चषालँय्येऽअश्वयूपाय-
तक्षति । येचार्व्वतेपचनᳬसम्भरन्त्युतोतेषामभिगूर्तिन्नंऽइन्न्वतु ॥२९॥
उपप्प्रागात्सुमन्न्मेधायिमन्न्मदेवानामाशाऽउपवीतपृष्ठः । अन्न्वेनं
व्विप्प्राऽऋषयोमदन्तिदेवानाम्पुष्टेचकृमासुबन्धुम् ॥३०॥ यद्वाजि-
नोदामसन्दानमर्व्वतोयाशीर्षण्यारशनारज्जुरस्य । यद्वाघास्यप्प्र-
भृतमास्येतृणᳬसर्व्वातातेऽअपिदेवेष्ष्वस्तु ॥३१॥ यदश्वस्यक्क्रविषो
मक्षिकाशयद्वास्वरौस्वधितौरिप्प्तमस्ति । यद्धस्तयोःशमितुर्य्यन्न-
खेषुसर्व्वातातेऽअपिदेवेष्ष्वस्तु ॥ ३२ ॥ यदूवद्ध्यमुदरस्यापवाति
यऽआमस्यक्क्रविषोगन्धोऽअस्ति । सुकृतातच्छमितारःकृण्वन्तु-
CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

तमेधꣳश्शृतपाकम्पचन्तु ॥ ३३ ॥ यत्तेगात्रादग्निनापच्यमानादभि-
शूलन्निहतस्यावधावति । मातद्भूम्म्यामाश्रिषन्मातृणेषुदेवेब्भ्य-
स्तदुशद्भ्योरातमस्तु ॥ ३४ ॥ येव्वाजिनम्परिपश्यन्तिपक्वंय्यऽईं-
माहुःसुरभिर्निर्हरेति । येचार्व्वतोमाꣳसभिक्षामुपासतऽउतोतेषाम-
भिगूर्तिर्न्नऽइन्न्वतु ॥ ३५ ॥ यन्नीक्षणम्माँस्पचन्न्याऽउखायायापात्राणि
यूष्णऽआसेचनानि । ऊष्मण्ण्यापिधानाचरूणामङ्काःसूनाःपरिभूष-
न्त्यश्श्वम् ॥ ३६ ॥ मात्वाग्निर्द्ध्वनयीद्धूमगन्धिर्म्मोखाभ्भ्राजन्त्यभि-
विक्तजघ्रिः । इष्टंव्वीतमभिगूर्त्तंव्वषट्कृतन्तन्देवासःप्रतिगृब्भ्ण-
न्त्यश्श्वम् ॥ ३७ ॥ निक्क्रमणन्निषदनंव्विवर्त्तनंय्यच्चपड्वीशमर्व्वतः ।

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

यच्चंपपौयच्चंघासिञ्जघासयच्चांताते ऽअपिदेवेष्ष्वस्तु ॥ ३८ ॥ यद-
श्श्वांयव्वासं ऽउपस्तृणन्त्यंधीवासंय्याहिरंण्यान्न्यस्मै । सन्दानम-
र्व्वन्तम्पड्वीशम्प्रियादेवेष्ष्वायामयन्ति ॥ ३९ ॥ यत्तेसादेमहंसाशूकृत-
स्यपाष्ष्ण्यांव्वाकशंयाव्वातुतोदं । स्रुचेवताहविषों ऽअद्ध्वरेषुसव्वांता-
तेब्ब्रह्मंणासूदयामि ॥ ४० ॥ चतुस्त्रिᳪंशद्द्वाजिनोदेवबंन्धोर्व्वङ्क्री-
रश्श्वस्यस्वधितिःसमेति । अच्छिद्रागात्त्राव्वयुनाकृणोतपरुष्ष्परु-
रनुघुष्ष्याव्विशंस्त ॥ ४१ ॥ एकस्त्वष्ष्टुरश्श्वस्याव्विशस्तादद्वायन्ता-
राभवतस्तथंऽऋतुः । यातेगात्त्राणामृतुथाणोकृमितातापिण्डानाम्प्र-
जुंहोम्म्यग्नौ ॥ ४२ ॥ मात्वांतपत्प्रियऽआत्मापियन्तम्मास्वधितिस्त-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

न्वुऽआतिष्ठिपन्ते । मातेगृध्नुरविशस्तातिहायछिद्रागात्राण्यसिना-
मिथूकरः ॥ ४३ ॥ नवाऽउऽएतन्म्रियसेनरिष्यसिदेवाँ२ इदेषिपथि-
भि ÷ सुगेभि ÷ । हरीतेयुञ्जापृषतीऽअभूतामुपास्त्थाद्वाजीधुरिरा-
सभस्य ॥ ४४ ॥ सुगव्यन्नोव्वाजीस्वश्श्व्यम्पुः सःपुत्राँ२ उतव्वि-
श्श्वापुषः रयिम् । अनागास्त्वन्नोऽअदितिःकृणोतुक्षत्रन्नोऽअश्श्वोव्व-
नताःहविष्म्मान् ॥ ४५ ॥ इमानुकम्भुवनासीषधामेन्द्रश्च्चव्विश्श्वे
चदेवाः । आदित्यैरिन्द्रःसगणोमरुद्भिरस्म्मभ्यम्भेषजाकरत् ।
यज्ञञ्चनस्तन्वञ्चप्प्रजाञ्चादित्यैरिन्द्र ÷ सहसीषधाति ॥ ४६ ॥ अग्ने-
त्वन्नोऽअन्तमऽउतत्त्राताशिवोभवाव्वरूथ्य ÷ । व्वसुरग्निर्व्वसुश्श्र-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

वाऽअच्छानक्षिद्युमत्तमꣳ रयिन्दाः । तन्त्वाशोचिष्ठदीदिवꣳसुम्नाय नूनमीमहेसखिभ्यः ॥ ४७ ॥ इति संहितायां पञ्चविंशोऽध्यायः ।

## ❀ अथ षड्विंशतितमोऽध्यायः ❀

ॐ अग्निश्चपृथिवीचसन्नतेतेमेसन्नमतामदोव्वायुश्चान्तरिक्षञ्च सन्नतेतेमेसन्नमतामदऽआदित्यश्चद्यौश्चसन्नतेतेमेसन्नमतामदऽ-आपश्चव्वरुणश्चसन्नतेतेमेसन्नमतामदः । सप्तसꣳसदोऽअष्टमी भूतसाधनी । सकामाँ२ऽअध्वनस्कुरुसंज्ञानमस्तुमेमुना ॥ १ ॥

१. 'अध्वनस्कुर्विति च' (प्रा० २९) अध्वन इत्ययं विसर्जनीयः कुर्वित्येतस्मिंश्च प्रत्यये सकारमापद्यते ।

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


यथेमांव्वाचङ्कल्याणीमावदानिजनेब्भ्यः । ब्रह्मराजन्याब्भ्याᳪ
शूद्रायचार्य्यायचस्वायचारणायच । प्प्रियोदेवानान्दक्षिणायैदातु-
रिहभूयासमयम्मेकामःसमृद्ध्यतामुपमादोनमतु ॥ २ ॥ बृहस्पते
ऽअतियदर्य्योऽअर्हाद्द्युमद्विभातिक्क्रतुमज्जनेषु । यद्दीदयच्छव-
सऽऋतप्प्रजाततदस्म्मासुद्द्रविणन्धेहिचित्रम् । उपयामगृहीतोसि
बृहस्पतयेत्वैषतेयोनिर्ब्बृहस्पतयेत्वा ॥ ३ ॥ इन्द्रगोमन्निहायाहिपि-
बासोमᳪ शतक्क्रतो । व्विद्यद्भिर्ग्ग्रावभिःसुतम् । उपयामगृही-
तोसीन्द्रायत्वागोमतऽएषतेयोनिरिन्द्रायत्वागोमते ॥ ४ ॥ इन्द्राया-
हिव्वृत्रहन्पिबासोमᳪ शतक्क्रतो । गोमद्भिर्ग्ग्रावभिःसुतम् । उप-

CC-0, Panini Kanya Maha Vidyalaya Collection.

यामगृहीतोसीन्द्रायत्वागोमतऽएषतेयोनिरिन्द्रायत्वागोमते ॥ ५ ॥
ऋतावानंव्वैश्श्वानरमृतस्यज्ज्योतिषस्प्पतिम् । अजंस्रङ्घर्म्ममीमहे ।
उपयामगृहीतोसिव्वैश्श्वानरायत्वैषतेयोनिंव्वैश्श्वानरायत्वा ॥ ६ ॥
व्वैश्श्वानरस्यसुमतौस्यामराजाहिकम्भुवनानामभिश्श्रीः । इतोजा-
तोव्विश्श्वमिदंव्विचष्ट्टेव्वैश्श्वानरोयततेसूर्य्येण । उपयामगृहीतो-
सिव्वैश्श्वानरायत्वैषतेयोनिंव्वैश्श्वानरायत्वा ॥ ७ ॥ व्वैश्श्वानरो-
नऽऊतयऽआप्प्रयातुपरावतः । अग्निरुक्क्थेनव्वाहसा । उपया-
मगृहीतोसिव्वैश्श्वानरायत्वैषतेयोनिंव्वैश्श्वानरायत्वा ॥ ८ ॥
अग्निर्ऋषिःपवमानःपाञ्चजन्न्यःपुरोहितः । तमीमहेमहागयम् ।

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

उपयामगृहीतोस्यग्ग्नयेँत्वाव्वर्चँसऽएषतेयोनिरग्ग्नयेँत्वाव्वर्च्चँसे ॥ ९ ॥
महाँ२ऽइन्द्रोव्वज्रहस्तꣳषोडशीशर्म्मँयच्छतु । हन्तुपाप्मानंय्योऽ-
स्म्मान्द्वेष्टि । उपयामगृहीतोसिमहेन्द्रायत्वैषतेयोनिर्म्महेन्द्रायत्वा
॥ १० ॥ तंव्वोदस्ममृतीषहंव्वसोर्म्मन्दानमन्धसꣳ । अभिवत्सन्न-
स्वसरेषुधेनवऽइन्द्रङ्गीर्ब्भिर्न्नवामहे ॥ ११ ॥ यद्वाहिष्ठन्तदग्ग्नयेबृह-
दर्च्चव्विभावसो । महिषीवत्वद्रयिस्त्वद्वाजाऽउदीरते ॥ १२ ॥
एह्यूषुब्ब्रवाणितेग्ग्नऽइत्थेतरागिरꣲ । एभिर्व्वर्धासऽइन्दुभिꣳ
॥ १३ ॥ ऋतवस्तेयज्ञंव्वितन्न्वन्तुमासारक्षन्तुतेहविꣲ । संव्वत्सर-
CC-0, Panini Kanya Maha Vidyalaya Collection.
स्तेयज्ञन्दधातुनꣳप्रजाञ्चपरिपातुनꣳ ॥ १४ ॥ उपह्वरेगिरीणाꣳसङ्ग-

Digitized By Siddhanta eGangotri Gyaan Kosha

मेघंनदीनाम् । धियाविप्रोऽअजायत ॥ १५ ॥ उच्चातेजातमन्धसो
दिविसद्भूम्म्यादंदे । उग्रꣳशर्म्ममहिश्श्रवः ॥ १६ ॥ सनऽइन्द्राय
यज्ज्यवेव्वरुणायमरुद्भ्यः । व्वरिवोवित्परिस्रव ॥ १७ ॥ एनाविश्‍-
श्वान्न्यर्य्यऽआद्युम्म्नानिमानुषाणाम् । सिषासन्तोव्वनामहे ॥ १८ ॥
अनुवीरैरनुपुष्ष्यास्म्मगोभिरन्न्वश्श्वैरनुसर्व्वैणपुष्टैः । अनुद्विपदा-
नुचतुष्ष्पदान्वयन्देवानोयज्ञमृतुथानयन्तु ॥ १९ ॥ अग्नेपत्त्नी-
रिहावहदेवानामुशतीरुप । त्वष्टारꣳसोमपीतये ॥ २० ॥ अभियज्ञङ्गृ-
णीहिनोग्नावोनेष्ष्टःपिबऽऋतुना । त्वꣳहिरत्नधाऽअसि ॥ २१ ॥
द्रविणोदाःपिपीषतिजुहोतप्रचतिष्ठत । नेष्ट्राहतुभिरिष्ष्यत ॥२२॥

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

तवायꣳसोमस्त्वमेह्यर्वाङ्शश्वत्तमꣳसुमनाऽअस्यपाहि । अस्मि-
न्न्यज्ञेबर्हिष्ष्यानिषद्याद्धिष्ष्वेमञ्जठरऽइन्दुमिन्द्र ॥ २३ ॥ अमेवनꣳ
सुहवाऽआहिगन्तनिबर्हिषिसदतनारणिष्टन । अथामन्दस्वजुजुषा-
णोऽअन्धसस्त्वष्टर्द्देवेभिर्ज्जनिभिꣳसुमद्गणꣳ ॥ २४ ॥ स्वादिष्ठया-
मदिष्ठयापवस्वसोमधारया । इन्द्रायपातवेसुतः ॥ २५ ॥ रक्षोहा-
व्विश्श्वचर्षणिरभियोनिमयोहते । द्रोणेसधस्थमासदत् ॥ २६ ॥

इति संहितायां षड्विंशतितमोऽध्यायः ।

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

# ॐ अथ सप्तविंशोऽध्यायः ॐ

ॐ समास्त्वाग्नऽऋतवोव्वर्द्धयन्तुसंव्वत्सराऽऋषयोयानिसत्या ।
सन्दिव्येनदीदिहिरोचनेनव्विश्वाऽआभाहिप्प्रदिशश्चतस्रः ॥ १ ॥
सञ्चेद्ध्यस्वाग्नेप्प्रचबोधयैनमुच्चतिष्ठमहतेसौभगाय । माचरिषदुप
सत्तातेऽअग्नेब्ब्रह्माणस्तेयशसः सन्तुमान्ये ॥ २ ॥ त्वामग्नेव्वृण
तेब्ब्राह्मणाऽइमेशिवोऽअग्नेसंव्वरणेभवानः । सपत्नहानोऽअभिमा
तिजिच्चस्वेगयेजागृह्यप्प्रयुच्छन् ॥ ३ ॥ इहैवाग्नेऽअधिधारयारयिम्मा-
त्वानिक्क्रन्पूर्व्वचितोनिकारिणः । क्षत्रमग्नेसुयममस्तुतुभ्यमुपस-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

त्ताव्वंद्ध्वंतान्तऽअनिष्ष्टृतः ॥ ४ ॥ क्षत्रेणाग्नेस्वायुःसꣳरभस्वमित्रेणा-
ग्नेमित्रधेयेयतस्व । सजातानाम्मद्ध्यमस्त्थाऽएधिराज्ञामग्नेव्विहव्-
व्योदीदिहीह ॥ ५ ॥ अतिनिहोअतिस्रिधोत्यचित्तिमत्यरातिमग्ग्ने ।
व्विश्श्वाह्यग्ग्नेदुरितासहस्वाथास्म्मभ्भ्यꣳसहवीराꣳरयिन्दाः ॥ ६ ॥
अनाधृष्ष्योजातवेदाऽनिष्ष्टृतोव्विराडग्नेक्षत्रभृद्दीदिहीह । विश्श्वा-
ऽऽआशाःप्प्रमुञ्चन्न्मानुषीर्ब्भियःशिवेभिरद्द्यपरिपाहिनोव्वृधे ॥ ७ ॥
बृहस्स्पतेसवितर्ब्बोधयैनꣳसꣳशितञ्चित्सन्तराꣳसꣳशिशाधि । व्व-
र्द्धयैनम्महतेसौभगायव्विश्श्वंऽएनमनुमदन्तुदेवाः ॥ ८ ॥ अमुत्रभूया-
दधयद्द्यमस्यबृहस्स्पतेऽअभिशस्तेरमुञ्चः । प्रत्यौहतामश्श्विनामृत्यु-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

मस्म्माद्देवानामग्ग्नेभिषजाशचीभिः ॥ ९ ॥ उद्द्वयन्तमसस्प्परिस्वः
पश्यन्तऽउत्तरम् । देवन्देवत्त्रासूर्र्यमगन्म्मज्ज्योतिरुत्तमम् ॥१०॥ ऊ-
र्द्ध्वाऽअस्यसमिधोभवन्त्यूर्द्ध्वाशुक्क्राशोचीᳬष्यग्नेः । द्युमत्तमासुप्प्र-
तीकस्यसूनोः ॥११॥ तनूनपादसुरोव्विश्श्ववेदादेवोदेवेषुदेवः । पथोऽ-
ऽअनक्त्तुमद्ध्वाघृतेन ॥१२॥ मद्ध्वायज्ञन्नक्षसेप्प्रीणानोनराशᳬसोऽ-
अग्ने । सुकृद्देवः सविताव्विश्श्ववारः ॥१३॥ अच्छायमेतिशवसाघृतेने-
डानोव्वह्निर्न्नमसा । अग्निᳬस्स्रुचोऽअद्ध्वरेषुप्प्रयत्सु ॥१४॥ सयक्षद-
स्यमहिमानमग्नेः सऽईम्मन्द्रासुप्प्रयसः । व्वसुश्चेतिष्ठोव्वसुधातमश्च
॥१५॥ द्वारोदेवीरन्न्वस्यव्विश्श्वेव्व्रताददन्तेऽअग्नेः । उरुव्व्यचसोधा-

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized by Siddhanta eGangotri Gyaan Kosha

म्म्नापत्यमानाᳬं ॥१६॥ तेऽअस्ययोषणेदिव्व्येनयोऽनाउषासानक्त्का ।
इमंय्यज्ञमवतामद्ध्वरन्नः ॥ १७॥ दैव्व्याहोताराऽऊर्द्ध्वमद्ध्वरन्नोग्ग्ने-
र्ज्जिह्वामभिगृणीतम् । कृणुतन्नःस्विष्टिम् ॥ १८ ॥ तिस्रोदेवीर्ब्बर्हिरे-
दᳬंसदन्त्विडासरस्वतीभारती । महीगृणाना ॥ १९ ॥ तन्नस्तुरीपम-
द्भुतम्पुरुक्षुत्वष्टासुवीर्य्यम् । रायस्पोषंव्विष्ष्यतुनाभिमस्म्मे ॥२०॥
व्वनस्प्पतेवसृजाररराणस्त्मनादेवेषु । अग्निर्हव्व्यᳬंशमितासूदयाति
॥२१॥ अग्नेस्वाहाकृणुहिजातवेदऽइन्द्रायहव्व्यम् । व्विश्श्वेदेवाहविरि-
दञ्जुषन्ताम् ॥ २२ ॥ पीवोऽअन्नारयिवृधःसुमेधाःश्वेतःसिषक्ति-
नियुतामभिश्श्रीः । तेव्वायवेसमनसोव्वितस्थुर्व्विश्श्वेन्नरः स्वप-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

त्यानिचक्रुः ॥ २३ ॥ रायेनुयञ्जज्ञतूरोदसीमेरायेदेवीधिषणाधाति
देवम् । अधव्वायुन्नियुतः सश्चतस्वाऽउतश्श्वेतंव्वसुधितिन्निरेके
॥ २४ ॥ आपोहयदबृहतीर्व्विश्श्वमायन्गर्भन्दधानाजनयन्तीरग्निम् ।
ततोदेवानाᳪसमवर्त्ततासुरेकः कस्मैदेवायहविषाव्विधेम ॥ २५ ॥
यश्चिदापोमहिनापर्य्यपश्यद्दक्षन्दधानाजनयन्तीर्य्यज्ञम् । योदेवेष्व-
धिदेवऽएकऽआसीत्कस्मैदेवायहविषाव्विधेम ॥ २६ ॥ प्रयाभिर्य्यासि-
दाश्श्वाᳪसमच्छानियुद्भिर्व्वायविष्टयेदुरोणे । निनोरयिᳪसुभो-
जसंय्युवस्वनिवीरङ्गव्यमश्श्व्यञ्चराधः ॥ २७ ॥ आनोनियुद्भिः
शतिनीभिरध्वरᳪसहस्रिणीभिरुपयाहियज्ञम् । व्वायोऽअस्मिन्त्स-

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

वनेमादयस्वयूयम्पातस्वस्तिभिःसदानः ॥ २८ ॥ नियुत्वान्वायवाग-
ह्ययꣳशुक्रोऽअयामिते । गन्तासिसुन्वतोगृहम् ॥ २९ ॥ वायो-
शुक्रोऽअयामितेमध्वोऽअग्रन्दिविष्टिषु । आयाहिसोमपीतयेस्पा-
र्होदेवनियुत्वता ॥ ३० ॥ व्वायुरग्ग्रेगायज्ञप्प्रीःसाकङ्गन्मनसायज्ञम् ।
शिवोनियुद्भिः शिवाभिः ॥ ३१ ॥ व्वायोयेतेसहस्रिणोरथास-
स्तेभिरागहि । नियुत्वान्त्सोमपीतये ॥ ३२ ॥ एकयाचदशभिश्चस्व-
भूतेद्वाभ्यामिष्टयेव्विꣳशतीच । तिसृभिश्चव्वहसेत्रिꣳशताच-
नियुद्भिर्व्वायविहताव्विमुञ्च ॥ ३३ ॥ तवव्वायवृतस्पतेत्वष्टुर्ज्जा-
मातरद्भुत । अवाꣳस्यावृणीमहे ॥ ३४ ॥ अभित्वाशूरनोनुमोदुग्धा-

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

ऽइवधेनवः । ईशानमस्यजगतः स्वर्दृशमीशानमिन्द्रतस्थुषः ॥३५॥
नत्वावाँ २ ऽअन्योदिव्योनपार्थिवोनजातोनजनिष्यते । अश्वा-
यन्तोमघवन्निन्द्रवाजिनोगव्यन्तस्त्वाहवामहे ॥ ३६ ॥ त्वामिद्धि-
हवामहेसातौवाजस्यकारवः । त्वांवृत्रेष्विन्द्रसत्पतिन्नरस्त्वाङ्का-
ष्ठास्वर्वतः ॥ ३७ ॥ सत्वन्नश्चित्रवज्रहस्तधृष्णुयामहस्तवानो
ऽअद्रिवः । गामश्वंरथ्यमिन्द्रसङ्किरसत्राबाजन्नजिग्युषे ॥३८॥
कयानश्चित्रऽआभुवदूतीसदावृधः सखा । कयाशचिष्ठयावृता ॥३९॥
कस्त्वासत्योमदानाम्मꣳहिष्ठोमत्सदन्धसः । दृढाचिदारुजेवसु ॥४०॥
अभीषुणः सखीनामविताजरितृणाम् । शतम्भवास्यूतये ॥ ४१ ॥

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

यज्ञायज्ञावोऽअग्नयेगिरागिराचदक्षसे । प्रप्रंवयमम्मृतञ्जातवेदसम्प्रियं-
म्मित्रन्नशं॑सिषम् ॥४२॥ पाहिनोऽअग्नऽएकयापाह्युतद्द्वितीयया ।
पाहिगीर्भिस्तिसृभिरूर्ज्जाम्पतेपाहिचतसृभिर्व्वसो ॥ ४३ ॥ ऊर्ज्जोन-
पात॑सहिनायमस्म्मयुर्दाशेमहव्व्यदातये । भुवद्वाजेष्ष्ववितांभुव-
द्वृधऽउतत्त्रातातनूनाम् ॥ ४४ ॥ संव्वत्सरोसिपरिवत्सरोसीदा-
वत्सरोसीद्वत्सरोसिव्वत्सरोसि । उषसस्तेकल्प्पन्तामहोरात्त्रास्ते
कल्प्पन्तामर्द्धमासास्तेकल्प्पन्ताम्मासास्तेकल्प्पन्तामृतवस्तेकल्प्पन्ता ॐ
संव्वत्सरस्तेकल्प्पताम् । प्रेत्याऽएत्यैसञ्चाञ्चप्प्रचसारय । सुपर्ण्णं-
चिदसितयादेवतयाङ्गिरस्वद्ध्रुवःसीद ॥ ४५ ॥

इति संहितायां सप्तविंशोऽध्यायः ।

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

# ❀ अथ अष्टाविंशतितमोऽध्यायः ❀

होतायक्षत्समिधेन्द्रमिडस्पदेनाभापृथिव्याऽअधि । दिवोव्वर्ष्मं-
न्त्समिध्यतऽओजिष्ठश्चर्षणीसहांव्वेत्वाज्ज्यस्यहोतर्य्यज ॥ १ ॥
होतायक्षत्तनूनपातमूतिभिर्ज्जेतारमपराजितम् । इन्द्रन्देवꣳस्वर्विदं-
म्पथिभिर्म्मधुमत्तमैर्न्नराशꣳसेनतेजसाव्वेत्वाज्ज्यस्यहोतर्य्यज ॥ २ ॥
होतायक्षदिडाभिरिन्द्रमीडितमाजुह्वानममर्त्यम् । देवोदेवैःसवी-
र्य्योव्वज्रहस्तःपुरन्दरोव्वेत्वाज्ज्यस्यहोतर्य्यज ॥ ३ ॥ होतायक्ष-
द्बर्हिषीन्द्रन्निषद्वरंव्वृषभन्नर्य्यापसम् । व्वसुभीरुद्रैरादित्यैःस-

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

युग्भिर्ब्बर्हिरासदद्द्वेत्वाज्ज्यस्य होतर्य्यज ॥ ४ ॥ होता यक्षदोजोन-
व्वीर्य्यᳬ सहोदूद्वार ऽइन्द्रमवर्द्धयन् । सुप्रायणाऽअस्मिन्न्यज्ञेव्वि-
श्रयन्तामृतावृधोदूद्वार ऽइन्द्रायमीढुषेव्यन्त्वाज्ज्यस्य होतर्य्यज ॥ ५ ॥
होता यक्षदुषे ऽइन्द्रस्य धेनू सुदुघे मातरा मही । सवातरौन तेजसा व्वत्स-
मिन्द्रमवर्द्धतां व्वीतामाज्ज्यस्य होतर्य्यज ॥ ६ ॥ होता यक्षद्दैव्या होतारा
भिषजा सखाया हविषेन्द्रम्भिषज्ज्यतः । कवी देवौ प्रचेतसाविन्द्रायध-
त्त ऽइन्द्रियं व्वीतामाज्ज्यस्य होतर्य्यज ॥ ७ ॥ होता यक्षत्तिस्रो देवीर्न्न भेष-
जन्त्रयस्त्रिधातवोपस ऽइडा सरस्वती भारती मही: । इन्द्रपत्नीर्हविष्मत-
तीर्व्यन्त्वाज्ज्यस्य होतर्य्यज ॥ ८ ॥ होता यक्षत्त्वष्टारमिन्द्रन्देवम्भि-

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

षजंᳪ सुयजंङ्घृतश्श्रियंम् । पुरुरूपंᳪ सुरेतंसम्मघोनमिन्द्रायत्वष्टा-
दधंदिन्द्रियाणिव्वेत्वाज्ज्यंस्यहोतर्य्यंजं ॥ ९ ॥ होतायक्षद्वनस्प-
तिंᳪ शमितारंᳪ शतक्क्रंतुन्धियोजोष्टारमिन्द्रियम् । मध्वासमञ्ज-
न्पथिभिः सुगेभिःᳪ स्वदातियज्ञम्मधुनाघृतेनव्वेत्वाज्ज्यंस्यहोतर्य्यंजं
॥ १० ॥ होतायक्षदिन्द्रᳪ स्वाहाज्ज्यंस्यस्वाहामेदंसःᳪ स्वाहास्तोका-
नाᳪ स्वाहास्वाहाकृतीनाᳪ स्वाहाहव्यसूक्क्तीनाम् । स्वाहादेवाऽ-
आज्ज्यपाजुषाणाऽइन्द्रऽआज्ज्यंस्यव्यन्तुहोतर्य्यंजं ॥ ११ ॥ देवम्ब-
र्हिरिन्द्रᳪ सुदेवन्देवैर्व्वीरवंत्स्तीर्णंव्वेद्यामवर्द्धयत् । व्वस्तोर्व्वृतम्प्रा-
क्तोर्ब्भृतᳪ रायाबर्हिष्मतो[illegible]वसुधेयस्यव्वेतुयजं ॥ १२ ॥

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

देवीर्द्वारऽइन्द्रꣳ सङ्घाते वीड्वीर्य्यामन्नवर्द्धयन् । आवत्सेन तरुणेन कुमारेण च मीवतापार्व्वाणꣳ रेणुकंकाटन्नुदन्तां व्वसुवने व्वसुधेयस्य व्यन्तु यज ॥ १३ ॥ देवीऽउषासानक्तेन्द्रं यज्ञे प्रयत्यह्वेताम् । दैवीर्विशः प्रायासिष्टाꣳ सुप्रीते सुधिते व्वसुवने व्वसुधेयस्य व्वीतां यज ॥ १४ ॥ देवी जोष्ट्री व्वसुधिती देवमिन्द्रमवर्द्धताम् । अयाव्यन्न्याघा द्वेषाꣳ स्यान्न्या वक्षद्वसु वार्य्याणि यजमानाय शिक्षिते व्वसुवने व्वसुधेयस्य व्वीतां यज ॥ १५ ॥ देवीऽऊर्ज्जाहुती दुघे सुदुघे पयसेन्द्रमवर्द्धताम् । इषमूर्ज्जमन्न्या वक्षत्सग्धिꣳ सपीतिमन्न्या नवेन पूर्व्वन्दयमाने पुराणेन नवमधातामूर्ज्जमूर्ज्जाहुती ऽऊर्ज्जयमाने व्वसु वार्य्याणि

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

यजमानायशिक्षितेव्वसुवनेव्वसुधेयस्यव्वीताँय्यज ॥ १६ ॥ देवा दैव्याहोतारादेवमिन्द्रमवर्द्धताम् । हताघशꣳसावाभाष्टौव्वसुव्वार्य्याणियजमानायशिक्षितौव्वसुवनेव्वसुधेयस्यव्वीताँय्यज ॥ १७ ॥ देवीस्तिस्रस्तिस्रोदेवीःपतिमिन्द्रमवर्द्धयन् । अस्पृक्षद्भारतीदिवꣳरुद्रैर्य्यज्ञꣳ सरस्वतीडाव्वसुमतीगृहान्वसुवनेव्वसुधेयस्यव्यन्तुयज ॥ १८ ॥ देवऽइन्द्रोनराशꣳसस्त्रिवरूथस्त्रिबन्धुरोदेवमिन्द्रमवर्द्धयत् । शतेनशितिपृष्ठानामाहितꣳसहस्रेणप्प्रवर्त्ततेमित्रावरुणेदस्यहोत्रमर्हतो बृहस्पतिस्तोत्रमश्विनाद्ध्वर्य्यवंव्वसुवनेव्वसुधेयस्यव्वेतुयज ॥ १९ ॥ देवोदेवैर्व्वनस्पतिर्हिरण्यपर्णोमधुशाखः सुपिप्पलोदेवमिन्द्रमवर्द्ध-

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha
यत् । दिवमग्ग्रेणास्पृक्षदान्तरिक्षम्पृथिवीमदृंहीद्वसुवनेव्वसुधेयस्यव्वेतुयज ॥ २० ॥ देवम्बर्हिर्व्वारितीनान्देवमिन्द्रमवर्द्धयत् । स्वासस्थमिन्द्रेणासन्नमन्न्याबर्हीᳪष्यभ्यभूद्वसुवनेव्वसुधेयस्यव्वेतु यज ॥ २१ ॥ देवोऽअग्निःस्विष्टकृद्देवमिन्द्रमवर्द्धयत् । स्विष्टङ्कुर्वन्त्स्विष्टकृत्स्विष्टमद्यकरोतुनोव्वसुवनेव्वसुधेयस्यव्वेतुयज ॥ २२ ॥ अग्निमद्यहोतारमवृणीतायंय्यजमानःपचन्पक्तीःपचन्पुरोडाशम्बध्नन्निन्द्रायच्छागम् । सूपस्थाऽअद्यदेवोव्वनस्पतिरभवदिन्द्रायच्छागेन । अघत्तम्मेदस्तः प्रतिपचताग्रभीदवीवृधत्पुरोडाशेन ।
CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

त्वामद्यऽऋषे[1] ॥ २३ ॥ होतायक्षत्समिधानम्महद्यशꣳसुसमिद्धं
वरेण्यमग्निमिन्द्रंव्वयोधसम् । गायत्रीञ्छन्दऽइन्द्रियन्त्र्यविङ्गांव्वयोदध-
द्वेत्वाज्ज्यस्यहोतर्य्यज ॥ २४ ॥ होतायक्षत्तनूनपातमुद्भिदंय्यङ्ग-
र्भमदितिर्द्दधेशुचिमिन्द्रंव्वयोधसम् । उष्णिहञ्छन्दऽइन्द्रियन्दित्यवा-
हङ्गांव्वयोदधद्वेत्वाज्ज्यस्यहोतर्य्यज ॥ २५ ॥ होतायक्षदीडेन्न्यमी-
डितंव्वृत्रहन्तममिडाभिरीड्यꣳसहꣳसोममिन्द्रंव्वयोधसम् । अनुष्टु-
भञ्छन्दऽइन्द्रियम्पञ्चाविङ्गांव्वयोदधद्वेत्वाज्ज्यस्यहोतर्य्यज ॥ २६ ॥
होतायक्षत्सुबर्हिषम्पूषण्वन्तममर्त्यꣳ सीदन्तम्बर्हिषिप्प्रियेऽमृतेन्द्रंव्वयो-

---

१. त्वामद्यऽऋषऽआर्षेय० ( अ० २१ म० ६१ )

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

धसम् । बृहतीञ्छन्दऽइन्द्रियन्त्रिवत्सङ्गांव्वयोदधद्वेत्वाज्ज्यस्यहोत-
र्य्यज ॥ २७ ॥ होतायक्षद्व्यचस्वतीःसुप्रायणाऽऋतावृधोद्वारोदेवी-
र्हिरण्ययीर्ब्रह्माणमिन्द्रंव्वयोधसम् । पङ्क्तिञ्छन्दऽइहेन्द्रियन्तुर्य्य-
वाहङ्गांव्वयोदधद्व्यन्त्वाज्ज्यस्यहोतर्य्यज ॥ २८ ॥ होतायक्षत्सुपेशा-
सासुशिल्पेबृहतीऽउभेनक्तोषासानदर्शतेव्विश्वमिन्द्रंव्वयोधसम् ।
त्रिष्टुभञ्छन्दऽइहेन्द्रियम्पष्ठवाहङ्गांव्वयोदधद्वीतामाज्ज्यस्यहोत-
र्य्यज ॥ २९ ॥ होतायक्षत्प्रचेतसादेवानामुत्तमंयशोहोतारादैव्या
कवीसयुजेन्द्रंव्वयोधसम् । जगतीञ्छन्दऽइन्द्रियमनड्वाहङ्गांव्वयोद-
धद्वीतामाज्ज्यस्यहोतर्य्यज ॥ ३० ॥ होतायक्षत्पेशस्वतीस्तिस्रो

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

देवीर्हिरण्ण्ययीब्भारतीर्बृहतीर्म्महीः पतिमिन्द्रंव्वयोधसम् । व्विराजञ्छन्दऽइहेन्द्रियन्धेनुङ्गान्नव्वयोदधद्व्यन्त्वाज्ज्यस्य होतर्य्यज ॥२१॥

होतायक्षत्सुरेतसन्त्वष्टारम्पुष्टिवर्द्धनᳬ रूपाणिबिब्भ्रतम्पृथक्पुष्टि-मिन्द्रंव्वयोधसम् । द्विपदञ्छन्दऽइन्द्रियमुक्षाणङ्गान्नव्वयोदधद्वेत्वाज्ज्यस्य होतर्य्यज ॥ २२ ॥ होतायक्षद्वनस्पतिᳬ शमितारᳬ शतक्रतुᳬ हिरण्ण्यपर्ण्णमुक्थिनᳬ रशनाम्बिब्भ्रतंव्वशिम्भगमिन्द्रंव्वयोधसम् । ककुभञ्छन्दऽइहेन्द्रियंव्वशांव्वेहतङ्गांव्वयोदधद्वेत्वाज्ज्यस्य होतर्य्यज ॥ २३ ॥ होतायक्षत्स्वाहाकृतीरग्निङ्गृहपतिम्पृथग्ग्वरुणम्भेषजङ्कविङ्क्षत्रमिन्द्रंव्वयोधसम् । अतिच्छन्दसञ्छन्दऽइन्द्रियम्बृहदृषभ-

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha
ङ्गांव्वयोदधद्वयन्त्वाज्ज्यस्यहोतर्य्यज ॥ ३४ ॥ देवम्बर्हिंव्वयोधसन्दे-
वमिन्द्रमवर्द्धयत् । गायत्र्याच्छन्दसेन्द्रियञ्चक्षुरिन्द्रेव्वयोदधद्वसु-
वनेव्वसुधेयस्यव्वेतुयज ॥ ३५ ॥ देवीर्द्वारोव्वयोधसꣳशुचिमिन्द्र-
मवर्द्धयन् । उष्णिहाच्छन्दसेन्द्रियम्प्राणमिन्द्रेव्वयोदधद्वसुवनेव्व-
सुधेयस्यव्वयन्तुयज ॥ ३६ ॥ देवीऽउषासानक्ताद्देवमिन्द्रंव्वयोधस-
न्देवीदेवमवर्द्धताम् । अनुष्टुभाच्छन्दसेन्द्रियम्बलमिन्द्रेव्वयोदधद्व-
सुवनेव्वसुधेयस्यव्वीतांय्यज ॥ ३७ ॥ देवीजोष्ट्रीव्वसुधितीदेवमि-
न्द्रंव्वयोधसन्देवीदेवमवर्द्धताम् । बृहत्याच्छन्दसेन्द्रियꣳश्रोत्रमिन्द्रे
व्वयोदधद्वसुवनेव्वसुधेयस्यव्वीतांय्यज ॥ ३८ ॥ देवीऽऊर्ज्जाहुती
CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

दुघेसुदुघेपयसेन्द्रंव्वयोधसन्देवीदेवमवर्द्धताम् । पङ्क्त्याच्छन्दसेन्द्रि-
य९ शुक्रमिन्द्रेव्वयोदधद्वसुवनेव्वसुधेयस्यव्वीतांयज ॥ ३९ ॥
देवादैव्याहोतारादेवमिन्द्रंव्वयोधसन्देवौदेवमवर्द्धताम् । त्रिष्टुब्-
भाच्छन्दसेन्द्रियंत्विषिमिन्द्रेव्वयोदधद्वसुवनेव्वसुधेयस्यव्वीतांयज
॥ ४० ॥ देवीस्तिस्रस्तिस्रोदेवीर्व्वयोधसम्पतिमिन्द्रमवर्द्धयन् ।
जगत्याच्छन्दसेन्द्रिय९ शूषमिन्द्रेव्वयोदधद्वसुवनेव्वसुधेयस्यव्यन्तु
यज ॥ ४१ ॥ देवोनराशꣳसोदेवमिन्द्रंव्वयोधसन्देवोदेवमवर्द्धयत् ।
व्विराजाच्छन्दसेन्द्रिय९ रूपमिन्द्रेव्वयोदधद्वसुवनेव्वसुधेयस्यव्वेतुयज
॥ ४२ ॥ देवोव्वनस्पतिर्देवमिन्द्रंव्वयोधसन्देवोदेवमवर्द्धयत् । द्वि-

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

पदाच्छन्दसेन्द्रियम्भगमिन्द्रे व्वयोदधद्द्वसुवनेव्वसुधेयस्यव्वेतुयज

॥ ४३ ॥ देवम्बर्हिर्व्वारितीनान्देवमिन्द्रंव्वयोधसन्देवंदेवमवर्द्धयत् ।

ककुभाच्छन्दसेन्द्रियंय्यशऽइन्द्रे व्वयोदधद्द्वसुवनेव्वसुधेयस्यव्वेतुयज

॥ ४४ ॥ देवोऽअग्निः स्विष्टकृद्देवमिन्द्रंव्वयोधसन्देवोदेवमवर्द्धयत् ।

अतिच्छन्दसाच्छन्दसेन्द्रियङ्क्षत्रमिन्द्रेव्वयोदधद्द्वसुवनेव्वसुधेयस्यव्वे-

तुयज ॥ ४५ ॥ अग्निमद्यहोतारमवृणीतायंय्यजमानः पचन्पक्तीः प-

चन्पुरोडाशम्बध्नन्निन्द्रायव्वयोधसेच्छागम् । सूपस्थाऽअद्यदेवो

व्वनस्पतिरभवदिन्द्रायव्वयोधसेच्छागेन । अघत्तम्मेदस्तः प्रतिपच-

CC-0, Panini Kanya Maha Vidyalaya Collection

Digitized By Siddhanta eGangotri Gyaan Kosha

ताग्ग्रंभीदवींवृधत्पुरोडाशेंन । त्वामुद्यऽऋषे[1] ॥४६॥ इति संहितायां अष्टाविंशोऽध्यायः ।

## ❀ अथ एकोनत्रिंशोऽध्यायः ❀

ओ३म् समिद्धोऽअञ्जन्कृदरम्मतीनाङ्घृतमंग्ने मधुमत्पिन्वंमानः ।
व्वाजीवहंन्व्वाजिनंञ्जातवेदोदेवानांव्वक्षिप्प्रियमासधस्त्थंम् ॥ १ ॥ घृते-
नाञ्जन्त्सम्पथोदेंवयानान्प्रजानन्व्वाज्ज्यप्प्येंतुदेवान् । अनुंत्वासप्ते
प्प्रदिशंः सचन्ताᳬस्वधामस्म्मैयजंमानायधेहि ॥ २ ॥ ईड्ड्यश्चा-

---

१. त्वामद्यऽ ऋषऽ आर्षेय ( शु० अ० २१ म० ६१ )।

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

सिव्वन्थंश्चव्वाजिन्नाशुश्चासिमेद्ध्यंश्चसप्ते । अग्निष्ट्वादेवैर्व्वसुभिः
सजोषाः प्प्रीतंव्वन्न्हिंवहतुजातवेदाः ॥ ३ ॥ स्तीर्ण्णम्बर्हिः सुष्टरी-
माजुषाणोरुपृथुप्प्रथमानम्पृथिव्व्याम् । देवेभिर्य्युक्तमदितिः सजोषाः
स्योनङ्कृण्वानासुविते दधातु ॥ ४ ॥ एताऽउवः सुभगाव्विश्श्वरूपा
व्विपक्षोभिः श्रयमाणाऽउदातैः । ऋष्वाः सतीः कवषः शुम्भमाना
द्वारोदेवीः सुप्प्रायणाभवन्तु ॥ ५ ॥ अन्तरामित्रावरुणाचरन्तीमुखं
य्यज्ञानामभिसंव्विदाने । उषासावा सुहिरण्ण्येसुशिल्प्पेऽऋतस्य
योनाविहसादयामि ॥ ६ ॥ प्रथमावा सरथिनासुवर्ण्णादेवौपश्श्य-
न्तौभुवनानिव्विश्श्वा । अपिप्प्रयञ्चोदनाव्वाम्मिमानाहोताराज्ज्यो-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha
तिं॑ प्र॒दिशा॑ दि॒शन्ता॑ ॥ ७ ॥ आ॒दि॒त्यैर्नो॒ भार॑ती व॒ष्टु य॒ज्ञꣳ सर॑स्वती
स॒ह रु॒द्रैर्न॑ऽआवीत् । इडोप॑हूता॒ वसु॑भिः स॒जोषा॑ य॒ज्ञं नो॑ देवीर॒मृते॑षु
धत्त ॥ ८ ॥ त्वष्टा॑ वी॒रं दे॒वका॑मं जजान॒ त्वष्टु॒रर्वा॑ जायतऽआ॒शु-
रश्वः॑ । त्वष्टे॒दं विश्वं॒ भुव॑नं जजान ब॒होः क॒र्तार॑मि॒ह य॑क्षि होतः
॥ ९ ॥ अश्वो॑ घृ॒तेन॒ त्मन्या॒ सम॑क्तऽउप॑ दे॒वाँ२ऽऋ॑तु॒शः पाथ॑ऽएतु ।
वन॒स्पति॑र्देवलो॒कं प्र॑जा॒नन्न॒ग्निना॑ ह॒व्या स्व॑दि॒तानि॑ वक्षत् ॥ १० ॥
प्र॒जाप॑ते॒स्तप॑सा वावृधा॒नः स॒द्यो जा॒तो द॑धिषे य॒ज्ञम॑ग्ने । स्वाहा॑कृतेन
ह॒विषा॑ पुरोगा या॒हि सा॒ध्या ह॒विर॑दन्तु दे॒वाः ॥ ११ ॥ यदक्र॑न्दः
प्रथ॒मं जाय॑मानऽउ॒द्यन्त्स॑मु॒द्राद॒त वा॒ पुरी॑षात् । श्ये॒नस्य॑ प॒क्षा ह॑रि-
CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

णस्य बाहूऽउपस्तुत्यम्महि जातन्तेऽअर्वन् ॥ १२ ॥ यमेन दत्तन्त्रित
ऽएनमायुनगिन्द्रऽएणम्प्रथमोऽअद्ध्यतिष्ठत् । गन्धर्व्वोऽअस्य रशना
मगृभ्णात्सूराद्श्वं व्वसवो निरतष्ट ॥ १३ ॥ असि यमोऽअस्यादित्यो
ऽअर्व्वन्नसि त्रितो गुह्येन व्व्रतेन । असि सोमेन समया विपृक्तऽआहुस्ते
त्रीणि दिवि बन्धनानि ॥ १४ ॥ त्रीणि तऽआहुर्द्दिवि बन्धनानि त्रीण्यप्सु
त्रीण्यन्तः समुद्द्रे । उतेव मे व्वरुणश्छन्त्स्यर्व्वन्यत्रा तऽआहुः परमञ्ज
नित्रम् ॥ १५ ॥ इमा ते व्वाजिन्नवमार्ज्जनानीमा शफानांᳬ सनितुर्न्नि-
धाना । अत्रा ते भद्द्रा रशनाऽअपश्यमृतस्य याऽअभिरक्षन्ति गोपाः
॥ १६ ॥ आत्मानन्ते मनसारादजानामवो दिवा पतयन्तम्पतङ्गम् । शि-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

रोऽअपश्यन्पथिभिः सुगेभिररेणुभिर्ज्जेहमानम्पतत्रि ॥ १७ ॥ अत्रा ते
रूपमुत्तममपश्यञ्जिगीषमाणमिषऽआपदे गोः । यदा ते मर्त्तोऽअनुभोग-
मानडादिद्ग्रसिष्ठऽओषधीरजीगः ॥१८॥ अनु त्वा रथोऽअनु मर्य्योऽअ-
र्व्वन्ननु गावोऽनु भगः कनीनाम् । अनु व्व्रातासस्तव सख्यमीयुरनु देवा-
ममिरे व्वीर्य्यन्ते ॥१९॥ हिरण्यशृङ्गोऽयोऽअस्य पादा मनोजवाऽअवरऽइ-
न्द्रऽआसीत् । देवाऽइदस्य हविरद्यमायन्यो अर्व्वन्तम्प्रथमोऽअद्ध्यतिष्ठत्
॥ २० ॥ ईर्म्मान्तासः सिलिकमद्ध्यमासः सꣳशूरणासो दिव्यासोऽअ-
त्याः । हꣳसाऽइव श्रेणिशो यतन्ते यदाक्षिषुर्द्दिव्यमज्ममश्वाः
॥ २१ ॥ तव शरीरम्पतयिष्ण्वर्व्वन्तव चित्तं व्वातऽइव ध्रजीमान् ।

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

तवश्रृङ्गाणिव्विष्ठिताहपुरुत्त्रारण्येषुजर्भुराणाचरन्ति ॥ २२ ॥ उप-
प्प्रागाच्छसनंव्वाज्ज्यर्व्वदेवद्द्रीचामनसादीद्ध्यानः । अजःपुरोनी-
यतेनाभिरस्यानुपश्चात्कवयोयन्तिरेभाः ॥ २३ ॥ उपप्प्रागात्परमं
यत्सधस्त्थमर्व्वाँ२अच्छापितरम्मातरञ्च । अद्द्यादेवाञ्जु-
ष्टतमोहिगम्म्याऽऽअथाशास्तेदाशुषेव्वार्य्याणि ॥ २४ ॥ समिद्धोऽ-
अद्द्यमनुषोदुरोणेदेवोदेवान्यजसिजातवेदः । आचव्वहमित्त्रमह-
श्चिकित्वान्त्वन्दूतःकविरसिप्प्रचेताः ॥ २५ ॥ तनूनपात्पथऽऋत-
स्ययानान्मद्ध्वासमञ्जन्त्स्वदमासुजिह्व । मन्मानिधीभिरुतय-
ज्ञमृन्धन्देवत्राचकृणुह्यध्वरन्नः ॥ २६ ॥ नराशंसस्यमहिमान-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

मेधामुपस्तोषामयजतस्ययज्ञैः । येसुक्क्रतवःशुचयोधियन्धाःस्वद-
न्तिदेवाऽउभयानिहव्व्या ॥ २७ ॥ आजुह्वानऽईड्योव्वन्द्यश्च्चा-
याह्यग्नेव्वसुभिःसजोषाः । त्वन्देवानामसियह्वहोतासऽएना-
न्न्यक्षीषितोयजीयान् ॥ २८ ॥ प्राचीनम्बर्हिःप्रदिशापृथिव्याव्व-
स्तोरस्याव्वृज्ज्यतेऽअग्ग्रेऽअन्हाम् । व्युप्प्रथतेव्वितरंव्वरीयोदेवे-
भ्योऽअदितयेस्योनम् ॥ २९ ॥ व्यचस्वतीरुर्व्वियाव्विश्रयन्ता-
म्पतिभ्योनजनयःशुम्भमानाः । देवीर्द्द्वारोबृहतीर्विश्श्वमिन्न्वा-
देवेभ्योभवतसुप्प्रायणाः ॥ ३० ॥ आसुष्ष्वयन्तीयजतेऽउपाकेऽ
उषासानक्ताःसदतान्नियोनौ । दिव्व्येयोषणेबृहतीसुरुक्मेऽअधि-

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

श्श्रयं᳖ शुक्क्रपिशन्दधाने ॥ ३१ ॥ दैव्याहोतारा प्प्रथमासुवाचामि-
मानायज्ञम्मनुषोयजध्यै । प्रचोदयन्ताव्विदथेषुकारूप्प्राचीनञ्ज्यो-
तिं÷ प्प्रदिशादिशन्ता ॥ ३२ ॥ आनोयज्ञम्भारतीतूयमेत्त्विडामनु-
ष्व्वदिहचेतयन्ती । तिस्रोदेवीर्ब्बर्हिरेद ँ स्योन᳖ सरस्वतीस्वपसः
सदन्तु ॥ ३३ ॥ यऽइमेद्यावापृथिवीजनित्रीरूपैरपिं᳖शद्भुवनानि
व्विश्श्वा । तमद्यहोतरिषितोयजीयान्देवन्त्वष्टारमिहयक्षिव्वि-
द्वान् ॥ ३४ ॥ उपावसृजत्मन्न्यासमञ्जन्देवानाम्पाथऽऋतुथाह-
वी ँ षि । व्वनस्प्पतिं÷ शमितादेवोऽअग्निः स्वदन्तुहव्यम्मधुना
घृतेन ॥ ३५ ॥ सद्योजातोव्व्यमिमीतयज्ञमग्निर्देवानामभवत्पुरोगाः ।

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha
अस्यहोतुः प्रदिशुतस्यव्वाचिस्वाहाकृतꣳहुविरदन्तुदेवाः ॥ ३६ ॥
केतुङ्कृण्वन्नकेतवेपेशोमर्य्याऽअपेशसे । समुषद्भिरजायथाः ॥३७॥
जीमूतस्येवभवतिप्प्रतीकंय्यद्वर्म्मीयातिसमदामुपस्त्थे । अनावि-
द्धयातन्न्वाजयत्वꣳसत्वाव्वर्म्मणोमहिमापिपर्त्तु ॥ ३८ ॥ धन्न्वना
गाधन्न्वनाजिञ्जयेमधन्न्वनातीव्राःसमदोजयेम । धनुःशत्रोरप-
कामङ्कृणोतिधन्न्वनासर्व्वाः प्रदिशोजयेम ॥ ३९ ॥ व्वक्ष्यन्ती
वेदागनीगन्तिकर्णम्प्रियꣳसखायम्परिषस्वजाना । योषेवशिङ्क्तेव्वि-
तताधिधन्न्वञ्ज्याऽइयꣳसमनेपारयन्ती॥४०॥तेऽआचरन्तीसमनेवयो-
षामातेवपुत्रम्बिभृतामुपस्त्थे। अपशत्रून्विद्ध्यताꣳसंव्विदानेऽआर्त्नी-
CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

ऽइमेव्विष्फुरन्तीऽअमित्रान्॥४१॥बह्वीनाम्पिताबहुरस्यपुत्रश्चिश्चाकृ
णोतिसमनावगत्य ॥ इषुधिःसङ्काःपृतनाश्चसर्व्वाःपृष्ठेनिनद्धोजयति
प्रसूतः॥४२॥रथेतिष्ठन्नयतिव्वाजिनःपुरोयत्रयत्रकामयतेसुषारथिः॥
अभीशूनाम्महिमानम्पनायतमनःपश्चादनुयच्छन्तिरश्मयः ॥४३॥
तीव्रान्घोषान्कृण्वतेवृषपाणयोश्वारथेभिःसहव्वाजयन्तः ॥
अवक्कामन्तःप्रपदैरमित्रान्क्षिणन्तिशत्रूँ१रनपव्ययन्तः ॥ ४४ ॥
रथवाहनꣳहविरस्यनामयत्रायुधन्निहितमस्यव्वर्म्म । तत्रारथमुप-
शग्मꣳसदेमव्विश्वाहाव्वयꣳसुमनस्यमानाः ॥ ४५ ॥ स्वादुषꣳस-
दःपितरोव्वयोधाःकृच्छ्रेश्रितःशक्तीवन्तोगभीराः । चित्रसेना

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha
ऽइषुबलाऽअमृद्ध्राःसतोवीराऽउरवोव्व्रातसाहाः ॥ ४६ ॥ ब्राह्मणासःपितरःसोम्म्यासःशिवेनोद्यावापृथिवीऽअनेहसा । पूषानः पातुदुरितादृतावृधोरक्षामाकिर्न्नोऽअघशंसऽईशत ॥ ४७ ॥ सुपर्ण्णं व्वस्तेमृगोऽअस्यादन्तोगोभिःसन्नद्धापततिप्प्रसूता । यत्रानरःसञ्च विचद्द्रवन्तितत्रास्म्मभ्यमिषवःशर्म्मंसःसन ॥ ४८ ॥ ऋजीतेपरि वृङ्धिनोश्म्माभवतुनस्तनूः । सोमोऽअधिब्ब्रवीतुनोदितिःशर्म्मंय-च्छतु ॥ ४९ ॥ आजङ्घन्तिसान्वेषाञ्जघनाँ२उपजिग्घ्नते । अश्श्वाज-निप्प्रचेतसोश्श्वान्त्समत्सुचोदय ॥ ५० ॥ अहिरिवभोगैःपर्व्वैतिबाहु-ञ्ज्यायाहेतिम्परिबाधमानः । हस्तग्घ्नोव्विश्श्वाव्वयुनानिव्विद्द्वान्पु-
CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

मान्पुमां ꣳ सम्परिपातुव्विश्वतः ॥ ५१ ॥ व्वनस्पतेव्वीड्व-
ङ्गोहिभूयाऽअस्म्मत्सखाप्प्रतरणःसुवीरः । गोभिःसन्नद्धोऽअसि
व्वीडयस्वास्त्थातातेजयतुजेत्त्वानि ॥ ५२ ॥ दिवःपृथिव्व्याःपर्य्योज-
ऽउद्भृतंव्वनस्प्पतिब्भ्यःपर्य्याभृतꣳसहः । अपामोज्म्मानम्परिगो-
भिरावृतमिन्द्रस्यव्वज्रꣳहविषारथंय्यज ॥ ५३ ॥ इन्द्रस्यव्वज्जोम-
रुतामनीकम्मित्रस्यगर्ब्भोव्वरुणस्यनाभिः । सेमान्नोहव्यदातिञ्जु-
षाणोदेवरथप्प्रतिहव्व्यागृभाय ॥ ५४ ॥ उपश्श्वासयपृथिवीमुतद्द्या-
म्पुरुत्राते मनुतांविष्ठ्ठितञ्जगत् । सदुन्दुभेसजूरिन्द्रेणदेवैर्द्दूराद्दवीयोऽ-
अपसेधशत्रून् ॥ ५५ ॥ आक्क्रन्दयबलमोजोनऽआधानिष्ट्टनिहिदुरि-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

ताबाधमानᳬ । अपप्प्रोथदुन्दुभेदुच्छुनाऽइतऽइन्द्रस्यमुष्टिरसिव्वीड-
यस्व ॥ ५६ ॥ आमूरजप्प्रत्त्यावर्त्तयेमाःकेतुमद्दुन्दुभिर्वावदीति ।
समश्श्वपर्ण्णाश्चरन्तिनोनरोस्म्माकमिन्द्ररथिनोजयन्तु ॥ ५७ ॥ आग्ने-
यःकृष्ष्णग्रीवᳬसारस्वतीमेषीबब्भ्रुःसौम्म्यःपौष्ष्णःश्श्यामःशितिपृष्ट्ठो
बार्हस्प्पत्यःशिल्पोवैश्श्वदेवऽऐन्द्रोरुणोमारुतःकल्म्माषऽऐन्द्राग्नःसᳬ-
हितोधोरामᳬसावित्त्रोव्वारुणःकृष्ष्णऽएकशितिपात्पेत्वः ॥ ५८ ॥
अग्नयेनीकवतेरोहिताञ्जिरनड्वानधोरामौसावित्त्रोपौष्ष्णौरजतनाभीव्वै-
श्श्वदेवौपिशङ्गौतूपरौमारुतःकल्म्माषऽआग्नेयःकृष्ष्णोजःसारस्वतीमे-
षीव्वारुणःपेत्वः ॥ ५९ ॥ अग्नयेगायत्त्रायत्त्रिवृतेराथन्तरायाष्टा-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

कपालऽइन्द्रायत्रैष्टुभायपञ्चदशायबार्हतायैकादशकपालोव्विश्श्वेभ्यो
देवेभ्योजागतेभ्यःसप्तदशेभ्योव्वैरूपेभ्योद्वादशकपालोमित्रावरु-
णाभ्यामानुष्टुभाभ्यामेकविंशाभ्यांव्वैराजाभ्याम्पयस्याबृहस्प-
तयेपाङ्क्तायत्रिणवायशाक्करायचरुःसवित्रऽऔष्णिहायत्रयस्त्रिंशायरैवतायद्वादशकपालःप्राजापत्यश्चरुरदित्यैव्विष्णुपत्न्यैचरुर-
ग्नयेव्वैश्वानरायद्वादशकपालोनुमत्याऽअष्टाकपालः　॥ ६० ॥

इति संहितायां एकोनत्रिंशोऽध्यायः ॥

# ❀ त्रिंशत्तमोऽध्यायः ❀

ॐ देवसवितःप्रसुवयज्ञम्प्रसुवयज्ञपतिम्भगाय। दिव्योगन्धर्व्वः

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


कौंतपूऽकेतन्नःपुनातुव्वाचस्प्पतिर्व्वाचन्नःस्वदतु ॥ १ ॥ तत्सवितुर्व्वरे-
ण्यम्भर्गोदेवस्यधीमहि । धियोयोनः प्रचोदयात् ॥ २ ॥ विश्वा-
निदेवसवितर्दुरितानिपरासुव । यद्भद्रन्तन्नऽआसुव ॥ ३ ॥
व्विभक्तारःहवामहेव्वसोश्चित्रस्यराधसः । सवितारन्नृचक्ष-
सम् ॥ ४ ॥ ब्रह्मणेब्राह्मणङ्क्षत्रायराजन्न्यम्मरुद्भ्योव्वैश्यन्तपसे
शूद्रन्तमसेतस्करन्नारकायव्वीरहणम्पाप्मनेक्लीवमाक्रयायाऽअयो-
गूङ्कामायपुँश्चलूमतिक्रुष्टायमागधम् ॥ ५ ॥ नृत्तायसूतङ्गीताय
शैलूषन्धर्म्मायसभाचरन्नरिष्ठायैभीमलन्नर्म्मायरेभःहसायकारिमान-
न्दायस्त्रीषखम्प्रमदेकुमारीपुत्रम्मेधायैरथकारन्धैर्य्यायतक्षाणम् ॥ ६ ॥

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


तपसे कौलालम्मायायै कर्म्मारꣳ रूपाय मणिकारꣳ शुभे व्वपꣳ शरव्याया ऽ-
इषुकारꣳ हेत्यै धनुष्कारङ्कर्म्मणे ज्याकारन्दिष्टाय रज्जुसर्ज्जम्मृत्यवे
मृगयुमन्तकाय श्वनिनम् ॥ ७ ॥ नदीभ्यः पौञ्जिष्ठमृक्षीकाभ्यो
नैषादम्पुरुषव्याघ्राय दुर्म्मदङ्गन्धर्व्वाप्सरोभ्यो व्व्रात्यम्प्रयुग्भ्य ऽउन्म-
त्तꣳ सर्प्पदेवजनेभ्यो ऽप्रतिपदमयेभ्यः कितवमीर्य्यताया ऽअकितवम्पि-
शाचेभ्यो बिदलकारीं य्यातुधानेभ्यः कण्टकीकारीम् ॥ ८ ॥ सन्धये जारङ्गेहायोपपतिमार्त्यै परिवित्तन्निर्ऋत्यै परिविविदानमराध्या ऽए-
दिधिषुः पतिन्निष्कृत्यै पेशस्कारीꣳ सञ्ज्ञानाय स्मरकारीम्प्रकामो-
द्यायोपसदं व्वर्णायानुरुधम्बलायोपदाम् ॥ ९ ॥ उत्सादेभ्यः

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

कुब्जम्प्रमुदेव्वामनमानन्दायँ स्स्रामँ स्वप्नायान्धमधर्म्मायबधिरम्पवित्रा-
यभिषजम्प्रज्ञानायनक्षत्रदर्शमाशिक्षायैप्प्रश्निनमुपशिक्षायाऽअभिप्प्र-
श्निनम्मर्य्यादायैप्प्रश्नविवाकम् ॥ १० ॥ अर्म्मेभ्योहस्तिप-
ञ्जवायाश्श्वम्पुष्टयैगोपालंव्वीर्य्यायाविपालन्तेजसेजपालमिरायैकी-
नाशङ्कीलालायसुराकारम्भद्रायगृहपँ श्रेयसेव्वित्तधमाद्ध्यक्ष्या-
यानुक्षत्तारम् ॥ ११ ॥ भायैदार्व्वाहारम्प्रभायाऽअग्न्येधम्ब्रध्नस्य
व्विष्टपायाभिषेक्तारंव्वर्षिष्ठायनाकायपरिवेष्टारन्देवलोकायपेशिता-
रम्मनुष्ष्यलोकायप्प्रकरितार ६ सर्व्वेभ्योलोकेभ्यऽउपसेक्तारमवऽ-
ऋत्यैव्वधायोपमन्थितारम्मेधायव्वासः पल्पलीम्प्रकामायरजयित्रीम्

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

॥ १२ ॥ ऋतयेस्तेनहृदयंव्वैरहत्यायपिशुनंव्विविक्त्यैक्षत्तारमौपद्द्र-
ष्टृयायानुक्षत्तारम्बलायानुचरम्भूम्नेपरिष्कन्दम्प्रियायप्प्रियवादिनमरि-
ष्ट्याऽअश्श्वसादꣳस्वर्ग्गायलोकायभागदुघंव्वर्षिष्ठायनाकायपरिवे-
ष्टारम् ॥ १३ ॥ मन्यवेयस्तापङ्क्रोधायनिसरंय्योगाययोक्क्तारꣳ
शोकायाभिसर्त्तारङ्क्षेमायव्विमोक्क्तारमुत्कूलनिकूलेभ्यस्त्रिष्ष्ठिनंव्वपु-
षेमानस्कृतꣳशीलायाञ्जनीकारीन्निर्ऋत्यैकोशकारीम् ॥ १४ ॥
यमायंयमसूमथर्व्वभ्योवतोकाꣳसंव्वत्सरायपर्य्यायिणीम्परिवत्सरा-
याविजातामिदावत्सरायातीत्वरीमिद्वत्सरायातिष्क्कद्वरींव्वत्सराय
व्विजर्ज्जराꣳसंवत्सरायपलिक्क्नीमृभुभ्योजिनसन्धꣳसाद्ध्येभ्य-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

श्चर्म्मम्म्नम् ॥ १५ ॥ सरोब्भ्योधैवरमुपस्त्थावराब्भ्योदाशंव्वैशन्ता-
ब्भ्योव्वैन्दन्नंड्वलाब्भ्यःशौष्क्कलम्पारायमार्ग्गारमवारायकेवर्त्तन्तीर्त्थे-
ब्भ्यऽआन्दंव्विषमेब्भ्योमैनालंस्वनेब्भ्यःपर्ण्णकङ्गुहाब्भ्यःकिरातः
सानुब्भ्योजम्भकम्पर्व्वतेब्भ्यःकिम्पूरुषम् ॥ १६ ॥ बीभत्सायैपौल्क-
संव्वर्ण्णायहिरण्ण्यकारन्तुलायैव्वाणिजम्पश्चादोषायग्ग्लाविनंव्विश्श्वे-
ब्भ्योभूतेब्भ्यः सिद्ध्मलम्भूत्यैजागरणमभूत्यैस्वपनमार्त्यैजनवादिनं
व्व्यृद्ध्याऽअपगल्भःसंशरायप्प्रच्छिदम् ॥ १७ ॥ अक्षरा-
जायकितवङ्कृतायादिनवदर्शन्त्रेतायैकल्पिनन्द्वापरायाधिकल्पिनमा-
स्कन्दायसभास्त्थाणुम्मृत्यवेगोव्व्यच्छमन्तकायगोघातङ्क्षुधेयोगांव्वि-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

कृन्तन्तम्भिक्षमाणऽउपतिष्ठन्तन्दुष्कृतायचरकाचार्य्यम्पाप्मनेसैलगम्
॥ १८ ॥ प्रतिश्श्रुत्कायाऽअर्त्तनङ्घोषायभषमन्तायबहुवादिनमनन्ता-
यमूकꣳ शब्दायाडम्बराघातम्महसेव्वीणावादङ्क्रोशायतूणवध्ममवर-
स्स्परायशङ्खध्मंव्वनायव्वनपमन्यतोरण्यायदावपम् ॥ १९ ॥
नर्म्मायपुँश्चलूꣳहसायकारिँयादसेशाबल्याङ्ग्रामण्यङ्गणकमभि-
क्क्रोशकन्तान्महसेव्वीणावादम्पाणिघ्नन्तूणवध्मन्तान्नृत्तायानन्दाय
तलवम् ॥ २० ॥ अग्नयेपीवानम्पृथिव्यैपीठसर्प्पिणंव्वायवेचाण्डा-
लमन्तरिक्षायव्वꣳशनर्त्तिनन्दिवेखलतिꣳ सूर्य्यायहर्य्यक्षन्नक्षत्रेभ्यः
किर्म्मिरञ्चन्द्रमसेकिलासमह्नेशुक्लम्पिङ्गाक्षꣳ रात्र्यैकृष्णम्पिङ्गाक्षम्

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha
॥ २१ ॥ अथैतानुष्टौव्विरूपानालभतेतिदीर्घञ्चातिह्रस्वञ्चातिस्थूलञ्चातिकृशञ्चातिशुक्लञ्चातिकृष्णञ्चातिकुल्वञ्चातिलोमशञ्च । अशूद्द्राऽअब्ब्राह्मणास्तेप्प्राजापत्याः । मागधः पुँश्चलीकितवः क्लीबोऽशूद्द्राऽअब्ब्राह्मणास्तेप्प्राजापत्याः ॥ २२ ॥ इति संहितायां त्रिंशत्तमोऽध्यायः ।

## ❀ अथ एकत्रिंशोऽध्यायः ❀

ॐ सहस्रशीर्षापुरुषः सहस्राक्षः सहस्रपात् । सभूमिꣳ सर्व्वतस्स्पृत्वात्यतिष्ठद्दशाङ्गुलम् ॥ १ ॥ पुरुषएवेदꣳ सर्वं य्यद्भूतंय्यच्च

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


भाव्व्यम् । उतामृतत्वस्येशानोयदन्नेनातिरोहति ॥ २ ॥ एतावानस्यमहिमातोज्ज्यायाँश्च्चपूरुषः । पादोस्यव्विश्श्वाभूतानित्रिपादस्यामृतन्दिवि ॥ ३ ॥ त्रिपादूर्ध्वऽउदैत्पुरुषःपादोस्येहाभवत्पुनः । ततोव्विष्ष्वङ्व्यक्क्रामत्साशनानशनेऽअभि ॥ ४ ॥ ततोव्विराडजायतव्विराजोऽअधिपूरुषः । सजातोऽअत्यरिच्च्यतपश्चाद्भूमिमथोपुरः ॥ ५ ॥ तस्माद्यज्ञात्सर्व्वहुतःसम्भृतम्पृषदाज्ज्यम् । पशूँस्ताँश्च्चक्रेव्वायव्व्यानारण्ण्याग्ग्राम्म्याश्च्चये ॥ ६ ॥ तस्माद्यज्ञात्सर्व्वहुतऽऋचःसामानिजज्ञिरे । छन्दाᳪंसिजज्ञिरेतस्म्माद्यजुस्तस्म्मादजायत ॥ ७ ॥ तस्म्मादश्श्वाऽअजायन्तयेकेचोभयादतः । गावोहजज्ञि-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha
रेतस्माात्तस्माज्जाताऽअजावयः ॥ ८ ॥ तंय्यज्ञम्बर्हिषिप्प्रौक्षन्पु-
रुषञ्जातमग्रतः । तेनदेवाऽअयजन्तसाद्ध्याऽऋषयश्चये ॥ ९ ॥
यत्पुरुषंव्यदधुःकतिधाव्यकल्पयन् । मुखङ्किमस्यासीत्किम्बाहू
किमूरूपादाऽउच्च्येते ॥ १० ॥ ब्राह्मणोस्यमुखमासीद्बाहूराजन्न्यः
कृतः । ऊरूतदस्ययद्वैश्यःपद्भ्याᳬशूद्द्रोऽअजायत ॥ ११ ॥
चन्द्रमामनसोजातश्चक्षोःसूर्य्योऽअजायत । श्श्रोत्राद्वायुश्चप्प्राण-
श्चमुखादग्निरजायत ॥१२॥ नाभ्याऽआसीदन्तरिक्षᳬशीर्ष्णोद्द्यौः
समवर्त्तत । पद्भ्याम्भूमिर्द्दिशःश्श्रोत्रात्तथालोकाँ२ अकल्पयन्
॥ १३ ॥ यत्पुरुषेणहविषादेवायज्ञमतन्न्वत । व्वसन्तोस्यासीदाज्ज्य-
CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

ङ्ग्रीष्म्मऽइध्मः शरद्धविः ॥ १४ ॥ सप्तास्यासन्परिधयस्त्रिः सप्त-
समिधः कृताः । देवायद्यज्ञन्तन्वानाऽअबध्नन्पुरुषम्पशुम् ॥ १५ ॥
यज्ञेनयज्ञमयजन्तदेवास्तानिधर्म्माणिप्प्रथमान्न्यासन् । तेहनाकम्महि-
मानः सचन्तयत्रपूर्वेसाद्ध्याः सन्तिदेवाः ॥ १६ ॥ अद्भ्यः सम्भृतः
पृथिव्यैरसाच्चव्विश्श्वकर्म्मणः समवर्त्तताग्ग्रे । तस्यत्त्वष्टाव्विदधद्रूप-
मेतितन्मर्त्त्यस्यदेवत्वमाजानमग्ग्रे ॥ १७ ॥ व्वेदाहमेतम्पुरुषम्महान्त-
मादित्यवर्ण्णन्तमसः परस्तात् । तमेवव्विदित्वातिमृत्युमेतिनान्न्यः

१. 'यथा भारभराऽऽक्रान्ता निश्वसन्ति नरा भुवि । एवं वर्णाः प्रयोक्तव्याः 'अद्भ्यः सम्भृत' इत्यपि ॥ (या० शि० श्लो० ९६)

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

पन्थाविद्यतेयनाय ॥ १८ ॥ प्रजापतिश्चरतिगर्भेऽअन्तरजायमानो
बहुधाविजायते । तस्ययोनिम्परिपश्यन्तिधीरास्तस्मिन्हतस्थुर्भु-
वनानिविश्वा ॥ १९ ॥ योदेवेभ्यंऽआतपतियोदेवानाम्पुरोहितः ।
पूर्व्वोयोदेवेभ्योजातोनमोरुचायब्राह्मये ॥ २० ॥ रुचम्ब्राह्मञ्जन-
यन्तोदेवाऽअग्रेतदब्रुवन् । यस्त्वैवम्ब्राह्मणोविद्यात्तस्यदेवाऽअस-
न्वशे ॥ २१ ॥ श्रीश्चतेलक्ष्मीश्चपत्न्यावहोरात्रेपार्श्वेनक्षत्राणिरूप-
मश्विनौव्यात्तम् । इष्णन्निषाणामुम्मंऽइषाणसर्व्वलोकम्मंऽइषाण
॥ २२ ॥ इति संहितायामेकत्रिंशोऽध्यायः ।

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

# ❀ अथ द्वात्रिंशोऽध्यायः ❀

ॐ तदेवाग्निस्तदादित्यस्तद्वायुस्तदु चन्द्रमाः । तदेव शुक्रन्त-
द्ब्रह्म ताऽआपः स प्रजापतिः ॥ १ ॥ सर्वे निमेषा जज्ञिरे विद्युतः
पुरुषादधि । नैनमूर्ध्वं न तिर्य्यञ्चं न मध्ये परिजग्रभत् ॥ २ ॥
न तस्य प्रतिमाऽअस्ति यस्य नाम महद्यशः । हिरण्यगर्भऽइत्येष-
मा मा हिंसीदित्येषा यस्मान्न जातऽइत्येषः ॥ ३ ॥ एषो ह देवः प्रदि-

१. हिरण्यगर्भः सम्, यः प्राणतो नि, यस्येमे, यऽ आत्मदा ( शु० अ० २५ मं० १०–१३ ) यस्मान्न जातः ( शु० श० ८ मं० ३६ ) मा मा हिंसी० सीत् ( शु० अ० १२ मं० १०२ )

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

शोनुसर्व्वांꣳपूर्व्वोहजातःसऽउगर्भेऽअन्तः । सऽएवजातःसज
निष्ष्यमाणꣳप्प्रत्यङ्जनास्तिष्ठतिसर्व्वतोमुखꣳ ॥ ४ ॥ यस्म्माज्जा-
तन्नपुराकिञ्चनैवयऽआबभूवभुवनानिव्विश्श्वा । प्रजापतिꣳप्प्रज-
यासꣳरराणस्त्रीणिज्ज्योतीꣳषिसचतेसषोडशी ॥ ५ ॥ येनद्यौरु-
ग्ग्रापृथिवीचदृढायेनस्वस्तभितंय्येननाकः । योऽअन्तरिक्षेरजसो
व्विमानꣳकस्म्मैदेवायहविषाव्विधेम ॥ ६ ॥ यङ्क्रन्दसीऽअवसात-
स्तभानेऽअभ्यैक्षेताम्मनसारेजमाने । यत्राधिसूरऽउदितोव्विभाति
कस्म्मैदेवायहविषाव्विधेम । आपोहयद्बृहतीर्व्विश्श्वदापः ॥ ७ ॥

१. आपो ह यद् बृहती: [illegible] (शु० य० २७ मं० २५, २६)

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

व्वेनस्तत्पश्यन्निहितङ्गुहासद्यत्रव्विश्श्वम्भवत्येकनीडम् । तस्मि-
न्निद६ सञ्चव्विचैतिसर्व्व६ सऽओतःप्प्रोतश्च्चव्विभूःप्प्रजासु ॥ ८ ॥
प्रतद्वोचेदमृतन्नुव्विद्वान्गन्धर्व्वोधामव्विभृतङ्गुहासत् । त्रीणि
पदानिनिहितागुहास्ययस्तानिव्वेदसपितुःपितासत् ॥ ९ ॥ सनो
बन्धुर्ज्जनितासव्विधाताधामानिव्वेदभुवनानिव्विश्श्वा । यत्रदेवाऽ
अमृतमानशानास्तृतीयेधामन्नद्ध्यैरयन्त ॥ १० ॥ परीत्यभूतानि
परीत्यलोकान्परीत्यसर्व्वाःप्प्रदिशोदिशश्च्च । उपस्त्थायप्प्रथम-
जामृतस्यात्मनात्मानमभिसंव्विवेश ॥ ११ ॥ परिद्यावापृथिवीस-
द्यऽइत्वापरिलोकान्परिदिशःपरिस्वः । ऋतस्यतन्तुंव्विततंव्वि-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

चृत्यतदपश्यत्तदभवत्तदासीत् ॥ १२ ॥ सदसस्पतिमद्भुतम्प्रिय
मिन्द्रस्यकाम्म्यम् । सनिम्मेधामयासिषꣳस्वाहा ॥ १३ ॥ याम्मे-
धान्देवगणाः पितरश्श्चोपासते । तयामामद्यमेधयाग्नेमेधाविनङ्कु-
रुस्वाहा ॥ १४ ॥ मेधाम्मेव्वरुणोददातुमेधामग्निः प्प्रजापतिः ।
मेधामिन्द्रश्चव्वायुश्चमेधान्धातादंदातुमेस्वाहा ॥ १५ ॥ इदम्मेब्रह्म-
चक्षत्रञ्चोभेश्श्रियमश्नुताम् । मयिदेवादधतुश्श्रियमुत्तमान्तस्यै
तेस्वाहा ॥ १६ ॥ इति संहितायां द्वात्रिंशोऽध्यायः ।

## ❀ अथ त्रयस्त्रिंशत्तमोऽध्यायः ❀

CC-0, Panini Kanya Maha Vidyalaya Collection.

ॐअस्याजरासोदमामरित्रा अर्चद्धूमासोऽअग्नयः पावकाः । श्वि-

Digitized By Siddhanta eGangotri Gyaan Kosha
तीचयः॒ श्वात्रासोभुरण्ण्यवोव्वनर्षदोव्वायवोनसोमाः ॥ १ ॥ हरं-
योधूमकेतवोव्वातजूताऽउपद्यवि । यतन्तेव्वृथगग्नयः ॥ २ ॥ यजा-
नोमित्रावरुणायजादेवाँ२ऋतम्बृहत् । अग्ग्नेयक्षिस्वन्दमम् ॥ ३ ॥
युक्ष्वाहिदेवहूतमाँ२अश्श्वाँ२अग्ग्नेरथीरिव । निहोतापूर्व्व्यःसदः ॥४॥
द्वेव्विरूपेचरतःस्वर्त्थेऽअन्न्यान्न्याव्वत्समुपधापयेते । हरिरन्न्यस्या-
म्भवतिस्वधावाञ्छुक्क्रोऽअन्न्यस्यान्ददृशेसुवर्च्चाः ॥ ५ ॥ [ शतम्—
१७००] अयमिहप्प्रथमोधायिधातृभिर्होतायजिष्ठोऽअद्ध्वरेष्ष्वीड्यः ।
यमप्नवानोभृगवोव्विरुरुचुर्व्वनेषुचित्रंव्विभ्वंव्विशेविशे ॥६॥ त्रीणि
शतात्रीसहस्राण्यग्निन्त्रिंशच्चदेवानवचासपर्य्यन् । औक्षन्घृतैरस्तृ-
CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha


णन्बर्हिरंस्म्मा ऽआदिद्धोतारन्न्यसादयन्त ॥ ७ ॥ मूर्द्धानन्दिवोऽअर-
तिम्पृथिव्यावैश्वानरमृतऽआजातमग्निम् । कविꣳसम्राजमतिथि-
ञ्जनानामासन्नापात्रञ्जनयन्तदेवाः ॥ ८ ॥ अग्निर्वृत्राणिजङ्घनद्द्र-
विणस्युर्विपन्न्यया । समिद्धःशुक्रऽआहुतः ॥ ९ ॥ विश्वेभिःसो-
म्म्यम्मद्ध्वग्नऽइन्द्रेणव्वायुना । पिबामित्रस्यधामभिः ॥१०॥ आयदि-
षेनृपतिन्तेजऽआनट्शुचिरेतोनिषिक्तन्द्यौरभीके । अग्निःशर्द्धमनवद्यं
युवानꣳस्वाध्ध्यञ्जनयत्सूदयंच्च ॥ ११ ॥ अग्नेशर्द्धमहतेसौभगाय
तवद्द्युम्म्नान्युत्तमानिसन्तु । सञ्जास्पत्यꣳसुयममाकृणुष्ष्वशत्रूय-
CC-0. Panini Kanya Maha Vidyalaya Collection.
तामभितिष्ठामहाꣳसि ॥ १२ ॥ त्वाꣳहिमन्द्रतममर्कशोकैर्व्ववृमहे

Digitized By Siddhanta eGangotri Gyaan Kosha

महिनंश्रोष्यंग्ने । इन्द्रन्त्वाशवसादेवताव्वायुम्पृणन्तिराधसानृ-
तमाः ॥ १३ ॥ त्वेऽअग्नेस्वाहुतप्प्रियासःसन्तुसूरयः । यन्तारो
येमघवानोजनानामूर्व्वान्दयन्तगोनाम् ॥ १४ ॥ श्रुधिश्रुत्कर्ण्णव-
न्हिभिर्द्देवैरग्नेसयावभिः । आसीदन्तुवर्हिषिमित्रोऽअर्य्यमाप्रात-
र्य्यावाणोऽअद्ध्वरम् ॥ १५ ॥ व्विश्श्वेषामदितिर्य्यज्ञियानांव्विश्श्वे-
षामतिथिर्म्मानुषाणाम् । अग्निर्द्देवानामवऽआवृणानःसुमृडीकोभव-
तुजातवेदाः ॥ १६ ॥ महोऽअग्ग्नेःसमिधानस्यशर्म्मण्यनागामित्रे
व्वरुणेस्वस्तये । श्रेष्ठेस्यामसवितुःसवीमनितद्देवानामवोऽअद्या-
व्वृणीमहे ॥ १७ ॥ आपश्चित्पिप्युस्तर्य्योनगावोनक्षन्नृतञ्जरितारः

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha



स्तऽइन्द्र । याहिव्वायुर्न्नियुतोनोऽअच्छात्वᳫंहिधीभिर्द्दयसेव्विवाजान् ॥१८॥ गावऽउपावतावतम्महीयज्ञस्यरप्प्सुदा । उभाकर्ण्णाहिरण्ण्यया ॥१९॥ यदद्यसूरऽउदितेनागामित्त्रोऽअर्य्यमा । सुवातिसविताभगः ॥२०॥ आसुतेसिञ्चतश्श्रियᳫंरोदस्योरभिश्श्रियम् । रसादधीतव्वृषभम् । तम्प्रत्क्कथायंव्वेनः[1] ॥२१॥ आतिष्ठन्तम्परिविश्श्वेऽअभूषञ्छ्रियोव्वसानश्चरतिस्वरोचिः । महत्तद्वृष्ष्णोऽअसुरस्यनामाविश्श्वरूपोऽअमृतानितस्थौ ॥ २२ ॥ प्रवोमहेमन्दमानायान्धसोर्च्चाव्विश्श्वानरायव्विश्श्वाभुवे । इन्द्रस्ययस्यसुमखᳫंसहोमहिश्श्रवोनृ-

१. तम्प्रत्क्कथा (शु० अ० ७ मं० १२) अयं वेनः (शु० अ० ७ मं० १६)।

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

म्मणश्च॒रोद॑सीस॒पर्य्य॑त॑ᳬ ॥ २३ ॥ बृहन्नि॒दि॒ध्मऽएषाम्भूरि॑श॒स्त-
म्पृथुᳬस्वरुᳬ । येषा॒मिन्द्रो॒युवा॒सखा॑ ॥ २४ ॥ इन्द्रेहि॒मत्स्यन्ध॑सो॒
विश्वे॑भिᳬसोम॒पर्व॑भिᳬ । म॒हाँ२ऽअ॑भि॒ष्टिरोज॑सा ॥ २५ ॥ इन्द्रो॑वृ॒-
त्रम॑वृणो॒च्छर्द्ध॑नीति॒ᳬप्रमा॒यिना॑ममिना॒द्वर्प्प॑णीतिᳬ । अह॒न्व्यᳬस-
मु॒शध॒ग्वने॑ष्वा॒विर्द्धे॑ना॑ऽअकृणोद्रा॒म्म्याणा॑म् ॥ २६ ॥ कुत॒स्त्वमि॑-
न्द्र॒माहि॑न॒ᳬसन्नेको॑यासिसत्पते॒किन्त॑ऽइ॒त्था । सम्पृ॑च्छसेसम॒रा॒णᳬशु॑-
भानैर्व्वो॑चेस्तन्नो॑हरिवो॒यत्ते॑ऽअ॒स्मे । [1]म॒हाँ२ऽइन्द्रो॒यऽओज॑सा॒कदा-

१. महाँऽ इन्द्रो यऽ ओजसा ( शु० अ० ७ मं० ४० ) ।

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

चनस्तरीरसिकदाचनप्रयुच्छसि[२] ॥ २७ ॥ आतत्तऽइन्द्रायवः पन-
न्ताभियऽऊर्व्वङ्गोमन्तन्तितृत्सान् । सकृत्स्वं ये पुरुपुत्राम्महीᳪसहस्र-
धाराम्बृहतीन्दुदुक्षन् ॥ २८ ॥ इमान्तेधियम्प्रभरेमहोमहीमस्यस्तोत्रे
धिषणायत्तऽआनजे । तमुत्सवेचप्रसवेचसासहिमिन्द्रन्देवासःशव-
सामदन्ननु ॥ २९ ॥ विभ्राड्बृहत्पिबतुसोम्यम्मद्ध्वायुर्द्धद्यज्ञ-
पतावविह्रुतम् । व्वातजूतोयोऽअभिरक्षतित्मनाप्रजाः पुपोषपुरुधा-
व्विराजति ॥ ३० ॥ उदुत्यञ्जातवेदसन्देवंव्वहन्तिकेतवः । दृशेव्वि-

२. कदाचनस्तरीरसि, कदाचन प्रयुच्छसि ( शु० अ० ८ मं० २—३ )।

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

श्श्वायसूर्य्यम् ॥३१॥ येनापावकचक्षसाभुरण्यन्तञ्जनाँ२ऽअनु । त्वं
व्वरुणपश्यसि ॥ ३२ ॥ दैव्यावद्ध्वर्य्यूऽआगतꣳरथेनसूर्य्यत्वचा ।
मद्ध्वायज्ञꣳसमञ्जाथे । तम्प्रत्नथायंव्वेनश्चित्रन्देवानाम्[1] ॥ ३३ ॥
आनऽइडाभिर्व्विदथेसुशस्तिव्विश्श्वानरꣳसवितादेवऽएतु । अपि
यथायुवानोमत्सथानोव्विश्श्वञ्जगदभिपित्वेमनीषा ॥ ३४ ॥ यद्-
द्यकच्चव्वृत्रहन्नुदगाऽअभिसूर्य्य । सर्व्वन्तदिन्द्रतेव्वशे ॥ ३५ ॥
तरणिर्व्विश्श्वदर्शतोज्ज्योतिष्कृदसिसूर्य्य । व्विश्श्वमाभासिरोच-

---

१. तम्प्रत्नथा, अयं वेनः, चित्रं देवानाम् (शु० अ० ७ सं० १२, १६, ४२)।

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

नम् ॥ ३६ ॥ तत्सूर्य्यस्यदेवत्वन्तन्महित्वम्मद्ध्याकर्त्तोर्व्विततꣳ-
सञ्जभार । यदेदयुक्तहरितः सधस्त्थादाद्द्रात्रीव्वासस्तनुतेसि-
मस्मै ॥ ३७ ॥ तन्मित्रस्यव्वरुणस्याभिचक्षेसूर्य्योरूपङ्कृणुतेद्द्यो-
रुपस्त्थे । अनन्तमन्न्यद्रुशदस्यपाजः कृष्णमन्न्यद्धरितꣳसम्भ-
रन्ति ॥ ३८ ॥ बण्णमहाँ२अंसिसूर्य्यबडादित्यमहाँ२ऽअंसि ।
महस्तेसतोमहिमापनस्यतेद्धादेवमहाँ२ऽअंसि ॥ ३९ ॥ बट्सूर्य्य-
श्श्रवसामहाँ२ऽअंसिसत्रादेवमहाँ२अंसि । मन्हादेवानामसुर्य्यः
पुरोहितोव्विभुज्ज्योतिरदाभ्भ्यम् ॥ ४० ॥ श्रायन्तऽइवसूर्य्यव्विश्श्वे-
दिन्द्रस्यभक्षत । व्वसूनिजातेजनमानऽओजसाप्प्रतिभागन्नदीधिम

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

॥ ४१ ॥ अद्याद्देवाऽउदितासूर्य्यस्यनिरꣳहसःपिपृतानिरवद्यात् ।
तन्नोमित्रोवरुणोमामहन्तामदितिःसिन्धुःपृथिवीऽउतद्यौः ॥ ४२ ॥
आकृष्णेनरजसाव्वर्त्तमानोनिवेशयन्नमृतम्मर्त्यञ्च । हिरण्ययेनस-
वितारथेनादेवोयातिभुवनानिपश्यन् ॥ ४३ ॥ प्रवावृजेसुप्रयाबर्हि-
रेषामाव्विश्पतीवबीरिटऽइयाते । व्विशामक्तोरुषसःपूर्व्वहूतौव्वा-
युःपूषास्वस्तयेनियुत्वान् ॥ ४४ ॥ इन्द्रवायूबृहस्पतिम्मित्राग्निम्पू-
षणम्भगम् । आदित्यान्मारुतङ्गणम् ॥ ४५ ॥ व्वरुणःप्राविताभुव-
न्मित्रोव्विश्वाभिरूतिभिः । करेतान्नःसुराधसः ॥ ४६ ॥ अधि-
नऽइन्द्रैषांव्विष्णोसजात्यानाम् । इतामरुतोऽअश्विना । तम्प्रत्क्था-

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

यंव्वेमोवेदेवासऽआनऽइडाभिर्विश्वेभिःसोम्यम्मधुघोमासश्चर्षणी

घृतः ॥ ४७ ॥ अग्नऽइन्द्र्वरुणमित्रदेवाःशर्द्धःप्रयन्तमारुतोत-

विष्णो । उभानासत्यारुद्रोऽअधग्नाःपूषाभगःसरस्वतीजुषन्त

॥ ४८ ॥ इन्द्राग्नीमित्रावरुणादितिंस्व÷पृथिवीन्द्याम्मरुतःपर्व्व-

ताँ२अपः । हुवेव्विष्णुम्पूषणम्ब्रह्मणस्पतिम्भगन्नुशःसःसविता-

रमूतये ॥ ४९ ॥ अस्मेरुद्रामेहनापर्व्वतासोव्वृत्रहत्येभरहूतौस-

जोषाः । यःशःसतेस्तुवतेधायिपज्जऽइन्द्रज्ज्येष्ठाऽअस्माँ२अवन्तु

---

१. तम्प्रतथा, अयं वेनः, ये देवासः, ओमासश्चर्षणीधृ७ (शु० अ० ७ मं० १२,१६,१९,३३) आनऽइडा, विश्वेभिः सोम्यम् (शु० अ० ३३ मं० ३४, १०)।

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

देवाः ॥५०॥ अर्व्वाञ्चोऽअद्याभवतायजत्राऽआवोहार्द्दिभयमानोव्वय-
येयम् । त्राद्ध्वन्नोदेवानिजुरोव्वृकस्यत्राद्ध्वङ्कर्त्तादवपदोयजत्राः
॥५१॥ व्विश्वेऽअद्यमरुतोव्विश्वऽऊतीव्विश्वेभवन्त्वग्नयःसमिद्धाः ।
व्विश्वेनोदेवाऽअवसागमन्तुव्विश्वमस्तुद्द्रविणंव्वाजोऽअस्म्मे ॥५२॥
व्विश्वेदेवाःशृणुतेमꣳहवम्मेयेऽअन्तरिक्षेयऽउपद्यविष्ठ । येऽअग्नि-
जिह्वाऽउतवायजत्राऽआसद्यास्म्मिन्न्बर्हिषिमादयद्ध्वम् ॥ ५३ ॥
देवेभ्योहिप्प्रथमंय्यज्ञियेभ्योमृतत्वꣳसुवसिभागमुत्तमम् । आदि-
द्दामानꣳसवितर्व्व्यूर्णुषेनूचीनाजीवितामानुषेभ्यः ॥ ५४ ॥ प्रवा-
युमच्छाबृहतीमनीषाबृहद्द्रयिंव्विश्ववारꣳरथप्प्राम् । द्युतद्द्या-

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

मानियुतꣳपत्यमानꣳकविꣳकविमियक्षसिप्प्रयज्ज्यो ॥ ५५ ॥ इन्द्रंवा-
यूऽइमेसुताऽउपप्प्रयोभिरागतम् । इन्दवोवामुशन्तिहि ॥ ५६ ॥
मित्रꣳहुवेपूतदक्षंव्वरुणञ्चरिशादसम् । धियङ्घृताचीꣳसाधन्ता
॥ ५७ ॥ दस्राषुवाकवꣳसुतानासत्याव्वृक्तबर्हिषः । आयातꣳरु-
द्रवर्त्तनी । तम्प्रत्नथायंव्वेनः ॥ ५८ ॥ विददद्यदीसरमारुग्णमद्रे-
र्म्महिपाथःपूर्व्यꣳसध्र्यक्कः । अग्रन्नयत्सुपद्यक्षराणामच्छारवं-
प्प्रथमाजानतीगात् ॥ ५९ ॥ नहिस्पशमविदन्नन्न्यमस्म्माद्वैश्वान
रात्पुरऽएतारमग्ग्नेः । एमेनमवृधन्नमृताऽअमर्त्यंव्वैश्वानरङ्क्षैत्र-

१. तम्प्रत्नथा, अयं वेनः ( शु० अ० ७ मं० १२, १६ )।

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

जित्यायदेवाः ॥ ६० ॥ उग्राव्विघनिनामृधऽइन्द्राग्नीहवामहे ।
तानोमृडातऽईदृशे ॥ ६१ ॥ उपास्मैगायतानरःपवमानायेन्दवे ।
अभिदेवाँ२ इयक्षते ॥ ६२ ॥ येत्वाहिहत्येमघवन्नवर्द्धन्न्येशाम्बरेहरि-
वोयेगविष्टौ । येत्वानूनमनुमदन्तिव्विप्राःपिबेन्द्रसोमसगणोमरु-
द्भिः ॥ ६३ ॥ जनिष्ठाऽउग्रःसहसेतुरायमन्द्रऽओजिष्ठोबहुला-
भिमानः । अवर्द्धन्निन्द्रम्मरुतश्चिदत्रमातायद्वीरन्दधनद्धनिष्ठा
॥ ६४ ॥ आतूनऽइन्द्रवृत्रहन्नस्माकमर्द्धमागहि । महान्महीभिरू-
तिभिः ॥ ६५ ॥ त्वमिन्द्रप्रतूर्तिष्वभिविश्वाऽअसिस्पृधः ।
अशस्तिहाजनिताविश्वतूरसित्वन्तूर्यतरुष्यतः ॥ ६६ ॥ अनुते

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

शुष्मंन्तुरयंन्तमीयतुᳪक्षोणीशिशुन्नमातरा । व्विश्श्वास्तंस्पृधं꞉ श्नथ-
यन्तमन्न्यवैंव्वृत्रंम्बदिन्द्रतूर्व्वसि ॥ ६७ ॥ यज्ञोदेवानाम्प्रत्यैतिसुम्म्न-
मादित्यासोभवंताम्मृडयन्तं꞉ । आवोर्व्वाचीसुमतिर्व्ववृत्यादᳬहोश्चि-
द्द्याव्वरिवोवित्तरासंत् ॥ ६८ ॥ अदंब्धेभिᳪसवितᳪपायुभिष्ट्वᳬशि-
वेभिरद्यपरिंपाहिनोगयंम् । हिरंण्ण्यजिव्हᳪसुविताय नव्यंसेरक्षा-
माकिंर्न्नोंऽअघशᳬसऽईशत ॥ ६९ ॥ प्रवींरयाशुचंयोदद्रिरेवासदद्ध्व-
र्य्युभिर्म्मधुमन्तᳪसुतासं꞉ । व्वहंव्वायोनियुतोंयाह्यच्छापिबासुत-
स्यान्धंसोमदाय ॥७०॥ गावऽउपांवतावतम्महीयज्ञस्यंरप्प्सुदा । उभा-
CC-0, Panini Kanya Maha Vidyalaya Collection.
कर्ण्णाहिरण्ण्ययां ॥७१॥ काव्ययोराजानेषुक्क्रत्वादक्षस्यदुरोणे । रि-

Digitized By Siddhanta eGangotri Gyaan Kosha

शार्द्सासधस्थऽआ ॥७२॥ दैव्याध्वर्यूऽआगतꣳरथेनसूर्यत्वचा । मध्वायज्ञꣳसमञ्जाथे । तम्प्रत्नथायंवेनः[1] ॥७३॥ तिरश्चीनोविततोरश्मिरेषामधःस्विदासी३दुपरिस्विदासी३त् । रेतोधाऽआसन्महिमानऽआसन्त्स्वधाऽअवस्तात्प्रयतिःपरस्तात् ॥७४॥ आरोदसीअपृणदास्वर्महज्जातंयदेनमपसोऽअधारयन् । सोऽअध्वरायपरिणीयते कविरत्योनवाजसातयेचनोहितः ॥ ७५ ॥ उक्थेभिर्वृत्रहन्तमायामन्दानाचिदागिरा । आङ्गूषैराविवासतः ॥ ७६ ॥ उपनःसूनवोगिरःशृण्वन्त्वमृतस्यये । सुमृडीकाभवन्तुनः ॥ ७७ ॥ ब्रह्माणिमेमत-

CC-0. Panini Kanya Maha Vidyalaya Collection.

१—तम्प्रत्नथा, अयं वेनः ( शु० अ० ७ म० १२, १६ ) ।

Digitized By Siddhanta eGangotri Gyaan Kosha

यद्ःशद्दसुतासहःशुष्म्मंऽइयर्त्तिप्प्रभृतोमेऽअद्रिः । आशासतेप्रतिहर्य्र्न्त्युक्थेमाहरीव्वहतस्तानोऽअच्छ ॥ ७८ ॥ अनुंत्तमातेमघवन्नकिर्न्नुनत्वावाँ२ऽअस्तिदेवताव्विदानः । नजायमानोनशतेनजातोयानिकृरिष्ष्याकृणुहिप्प्रवृद्ध ॥ ७९ ॥ तदिदासभुवनेषुज्ज्येष्ठंऽयतोजज्ञऽउग्रस्त्वेषनृम्म्णः । सद्योजज्ञानोनिरिणातिशत्रूननुयंव्विश्श्वेमदन्त्यूमाः ॥ ८० ॥ इमाऽउत्वापुरूवसोगिरोव्वर्द्धन्तुयाममं । पावकवर्ण्णाःशुचयोव्विपश्चितोभिस्तोमैरनूषत ॥ ८१ ॥ यस्यायंव्विश्श्वऽआर्य्योदासःशेवधिपाऽअरिः । तिरश्चिदर्य्येरुशमेपवीरवितुभ्यमेत्सोऽअज्ज्यतेरयिः ॥ ८२ ॥ अयथ्सहस्रमृषिभिःसहस्कृतःसमुद्रऽइवप-

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

प्रथे । सत्यꣳसोऽअस्यमहिमागृणेशवोयज्ञेषुविप्रराज्ये ॥ ८३ ॥
अदब्धेभिꣳसवितꣳपायुभिष्ट्वꣳशिवेभिरद्यपरिपाहिनोगायम् । हिर-
ण्ण्यजिह्वꣳसुवितायनव्यसेरक्षामाकिन्नोऽअघशꣳसऽईशत ॥८४॥
आनोयज्ञन्दिविस्पृशंव्वायोयाहिसुमन्मभिꣳ । अन्तꣳपवित्रऽउपरि
श्रीणानोयꣳशुक्रोऽअयामिते ॥ ८५ ॥ इन्द्रवायूसुसन्दृशासुहवेह-
हवामहे । यथानꣳसर्व्वऽइज्जनोनमीवꣳसङ्गमेसुमनाऽअसत् ॥ ८६ ॥
ऋधगित्थासमर्त्यꣳशशमेदेवतातये । योनूनम्मित्रावरुणावभिष्टय-
यऽआचक्रेहव्यदातये ॥ ८७ ॥ आयातमुपभूषतम्मद्ध्वꣳपिवतम-
श्विना । दुग्धम्पयोवृषणाजेन्यावसूमानोमर्द्धिष्टमागतम् ॥ ८८ ॥

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

प्रैतुब्ब्रह्मणस्प्पतिः प्प्रदेव्व्येतुसूनृता । अच्छाव्वीरन्नर्य्यम्पङ्क्तिराधसन्देवायज्ञन्नयन्तुनः ॥ ८९ ॥ चन्द्रमाऽअप्प्स्वुन्तरासुपर्ण्णोधावते दिवि । रयिम्पिशङ्गम्बहुलम्पुरुस्पृहᳬहरिरेतिकनिक्क्रदत् ॥ ९० ॥ देवन्देवंव्वोवसेदेवन्देवमभिष्टये । देवन्देवᳬहुवेमव्वाजसातयेगृणन्तोदेव्व्याधिया ॥ ९१ ॥ दिविपृष्टोऽअरोचताग्निर्व्वैश्वानरोबृहन् । क्ष्मयाव्वृधानऽओजसाचनोहितोज्ज्योतिषावाधतेतमः ॥ ९२ ॥ इन्द्राग्नीऽअपादियम्पूर्व्वागात्पद्वतीब्भ्यः । हित्वीशिरोजिह्व्वया व्वावदच्चरत्रिᳬशत्पदान्न्यक्क्रमीत् ॥ ९३ ॥ देवासोहिष्म्मामनवेसमन्न्यवोव्विश्श्वेसाकᳬसरातयः । तेनोऽअद्यतेऽअपरन्तुचेतुनोभ-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

वन्तुञ्वरिवोविदः ॥ ९४ ॥ अपाधमदभिशस्तीरशस्तिहाथेन्द्रोद्द्यु-
म्न्याभवत् । देवास्तऽइन्द्रसख्यायर्येमिरेबृहद्भानोमरुद्गण ॥९५॥
प्रवऽइन्द्रायबृहतेमरुतोब्रह्मार्चत । व्वृत्रꣳहनतिव्वृत्रहाशतक्क्रतु-
र्व्वज्ज्रेणशतपर्व्वणा ॥ ९६ ॥ अस्येदिन्द्रोव्वावृधेव्वृष्ण्यꣳशवोमदे-
सुतस्यव्विष्णवि । अद्यातमस्यमहिमानमायवोनुष्टुवन्तिपूर्व्वथा ।
इमाऽउत्वायस्यायमयꣳसहस्रमूर्ध्वऽऊषुणः ॥९७॥ इति संहितायां
त्रयस्त्रिंशोऽध्यायः ।

१. इमा उत्वा, यस्यायम्, अयꣳ० सहस्रम् (शु० अ० ३३ मं० ८१-८३)।

२. ऊर्ध्व ऊषुणः (शु० अ० ११ मं० ४२)।

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

# ❀ अथ चतुस्त्रिंशोऽध्यायः ❀

ॐ यज्जाग्ग्रतोदूरमुदैतिदैवन्तदुसुप्तस्यतथैवैति । दूरङ्गमञ्ज्योति
षाञ्ज्योतिरेकन्तन्न्मेमनः शिवसङ्कल्प्पमस्तु ॥ १ ॥ येनकर्म्माण्ण्य-
पसोमनीषिणोयज्ञेकृण्ण्वन्तिव्विदथेषुधीराः । यदपूर्व्वंय्यक्षमन्तःप्प्र-
जानान्तन्न्मेमनः शिवसङ्कल्प्पमस्तु ॥ २ ॥ यत्प्रज्ञानमुतचेतोधृति-
श्चयज्ज्योतिरन्तरमृतम्प्रजासु । यस्म्मान्नऽऋतेकिञ्चनकर्म्मङ्क्रि-
यतेतन्न्मेमनः शिवसङ्कल्प्पमस्तु ॥ ३ ॥ येनेदम्भूतम्भुवनम्भवि-
ष्यत्परिगृहीतममृतेनसर्व्वम् । येनयज्ञस्तायतेसप्तहोतातन्न्मेमनः

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

शिवसंङ्कल्पमस्तु ॥ ४ ॥ यस्मिन्नृचः साम यजूंषि यस्मिन्प्रति-
ष्ठितारथनाभाविवाराः । यस्मिँश्चित्तꣳ सर्व्वमोतम्प्रजानान्तन्मे
मनः शिवसंङ्कल्पमस्तु ॥ ५ ॥ सुषारथिरश्वानिव यन्मनुष्यान्ने
नीयतेभीशुभिर्व्वाजिनऽइव । हृत्प्रतिष्ठं यदजिरञ्जविष्ठन्तन्मेम-
नः शिवसंङ्कल्पमस्तु ॥ ६ ॥ पितुन्नुस्तोषम्महोधर्म्माणन्तविषीम् ।
यस्यत्रितोव्व्योजसावृत्रंव्विपर्व्वमर्द्दयत् ॥ ७ ॥ अन्विदनुमतेत्वम्म-
न्यासैशञ्चनस्कृधि । क्रत्वेदक्षायनोहिनुप्रणऽआयूंषितारिषः
॥ ८ ॥ [ शतम्—१८०० ] अनुनोद्यानुमतिर्य्यज्ञन्देवेषुमन्यताम् ।
अग्निश्चहव्यवाहनोभवतन्दाशुषेमयः ॥ ९ ॥ सिनीवालिपृथु-

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

ष्टुकेयादेवानामसिस्वसा । जुषस्वहव्यमाहुतम्प्रजान्देविदिदि-
ड्ढिनः ॥ १० ॥ पञ्चनद्यः सरस्वतीमपियन्तिसस्रोतसः । सरस्व-
तीतुपञ्चधासोदेशेभवत्सरित् ॥ ११ ॥ त्वमग्नेप्प्रथमोऽअङ्गिराऽ-
ऋषिर्देवोदेवानामभवः शिवः सखा । तवव्व्रतेकवयोव्विद्मनापसो-
जायन्तमरुतोभ्भ्राजदृष्टयः ॥ १२ ॥ त्वन्नोऽअग्नेतवदेवपायुभिर्म्म-
घोनोरक्षतन्वश्चव्वन्द्य । त्रातातोकस्यतनयेगवामस्यनिमेषः रक्ष-
माणस्तवव्व्रते ॥ १३ ॥ उत्तानायामवभराचिकित्वान्सद्यः प्प्रवीता
व्वृषणञ्जजान । अरुषस्तूपोरुशदस्यपाजऽइडायास्प्पुत्रोव्वयुनेजनिष्ट
॥ १४ ॥ इडायास्त्वापदेव्वयन्नाभापृथिव्याऽअधि । जातवेदो

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

निधीमहि यज्ञꣳ हव्याय वोढवे ॥ १५ ॥ प्रमन्महे शवसानाय शूषमाङ्गू-
षङ्गिर्वणसे ऽङ्गिरस्वत् । सुवृक्तिभिस्तुवत ऽऋग्मियायार्चामार्क-
न्नरे विश्रुताय ॥ १६ ॥ प्रवो महे महि नमो भरध्वमाङ्गूष्यꣳ शव-
सानाय साम । येना नः पूर्वे पितरः पदज्ञा ऽअर्चन्तो ऽअङ्गिरसो गा ऽ-
अविन्दन् ॥ १७ ॥ इच्छन्ति त्वा सोम्यासः सखायः सुन्वन्ति सोमन्द-
धति प्रयाꣳसि । तितिक्षन्ते ऽअभिशस्तिञ्जनानामिन्द्र त्वदा कश्चन-
हि प्रकेतः ॥ १८ ॥ न ते दूरे परमा चिद्रजाꣳस्या तु प्रयाहि हरिवो
हरिभ्याम् । स्थिराय वृष्णे सवना कृतेमा युक्ता ग्रावाणः समिधाने
ऽअग्नौ ॥ १९ ॥ अषाढं युत्सु पृतनासु पप्रिꣳ स्वर्षामप्सां वृजनस्य

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

गोपाम् । भरेषुजाᳫंसुक्षितिᳫंसुश्रवसञ्जयन्तन्त्वामनुमदेमसोम
॥२०॥ सोमोधेनुᳫंसोमोऽअर्वन्तमाशुᳫंसोमोव्वीरङ्कर्म्मण्यन्ददाति ।
साद्न्यंविदत्थ्यᳫंसभेयम्पितृश्रवणंय्योददाशदस्मै ॥ २१ ॥ त्वमि-
माऽओषधीःसोमव्विश्वास्त्वमपोऽअजनयस्त्वङ्गाः । त्वमाततन्थो-
र्व्वन्तरिक्षन्त्वञ्ज्योतिषाव्वितमोव्ववर्त्थ ॥ २२ ॥ देवेननोमनसादेव-
सोमरायोभागᳫंसहसावन्नभियुद्ध्य । मात्वातनदीशिषेव्वीर्य्यस्यो-
भयेभ्यःप्रचिकित्सागविष्टौ ॥ २३ ॥ अष्टौव्व्यख्यत्ककुभःपृथि-
व्यास्त्रीधन्वयोजनासप्तसिन्धून् । हिरण्याक्षःसवितादेवऽआगा-
द्दधद्रत्नादाशुषेव्वार्य्याणि ॥ २४ ॥ हिरण्यपाणिःसवितान्विचर्ष-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

णिरुभेद्यावापृथिवीऽअन्तरीयते । अपामीवाम्बाधतेव्वेत्तिसूर्य्यमभि-
कृष्णेनरजसाद्द्यामृणोति ॥ २५ ॥ हिरण्ण्यहस्तोऽअसुरःसुनीथः
सुमृडीकःस्ववाँयात्वर्व्वाङ् । अपसेधन्त्रक्षसोयातुधानानस्त्थाद्देवः
प्प्रतिदोषङ्गृणानः ॥ २६ ॥ येतेपन्थाःसवितःपूर्व्यासोरेणवःसुकृता-
ऽअन्तरिक्षे । तेभिर्न्नोऽअद्यपथिभिःसुगेभीरक्षाचनोऽअधिचब्रूहिदेव
॥ २७ ॥ उभापिबतमश्श्विनोभानःशर्म्मयच्छतम् । अविद्द्रियाभि-
रूतिभिः ॥२८॥ अप्नस्वतीमश्श्विनाव्वाचमस्म्मेकृतन्नोदस्राव्वृष-
णामनीषाम् । अद्द्यूत्येवसेनिह्वयेवाँव्वृधेचनोभवतंव्वाजसातौ ॥२९॥
द्युभिरक्तुभिःपरिपातमस्म्मानरिष्टेभिरश्श्विनासौभगेभिः । तन्नोमि-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

न्नोव्वरुणोमामहन्तामदितिꣳसिन्धुः पृथिवीऽउतद्यौः ॥ ३० ॥ आ
कृष्णेनरजसाव्वर्त्तमानोनिवेशयन्नमृतम्मर्त्यञ्च । हिरण्ययेनसविता
रथेनादेवोयातिभुवनानिपश्यन् ॥ ३१ ॥ आरात्रिपार्थिवꣳरजः
पितुरप्रायिधामभिः । दिवःसदाꣳसिबृहतीव्वितिष्ठसऽआत्वेषंव्व-
र्त्ततेतमः ॥ ३२ ॥ उषस्तच्चित्रमाभरास्मभ्यंव्वाजिनीवति । येन
तोकञ्चतनयञ्चधामहे ॥ ३४ ॥ प्रातरग्निम्प्रातरिन्द्रꣳहवामहेप्रातर्म्मित्र-
त्रावरुणाप्प्रातरश्विना । प्रातर्भगम्पूषणम्ब्रह्मणस्पतिम्प्रातःसोम-
मुतरुद्रꣳहुवेम ॥ ३३ ॥ प्रातर्ज्जितम्भगमुग्रꣳहुवेमव्वयम्पुत्रमदि-
तेर्य्योविधर्त्ता । आध्रश्चिद्यम्मन्यमानस्तुरश्चिद्राजाचिद्यम्भ-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

गं॑म्भक्षीत्याह॑ ॥ ३५ ॥ भग॒ प्रणे॑त॒र्भग॒ सत्य॑राधो॒ भगे॒मान्धिय॒मुद॑-
वा॒दद॑न्नः । भग॒ प्रनो॑ जनय॒ गोभि॒रश्वै॒र्भग॒ प्रनृ॒भिर्नृ॒वन्त॑ÿ स्याम
॥ ३६ ॥ उ॒तेदानी॒म्भग॑वन्त स्यामो॒त प्रपि॒त्वऽउ॒त मध्ये॒ऽअन्हा॑म् ।
उ॒तोदि॑ता मघव॒न्त्सूर्य॑स्य व॒यन्दे॒वाना॑ᳫं सुम॒तौ स्या॑म ॥ ३७॥ भग॑ऽए॒व
भग॑वाँ२ऽ अस्तु देवा॒स्तेन॑ व॒यम्भग॑वन्त स्याम । तन्त्वा॑ भग॒ सर्व॒ऽइज्जो॑-
हवी॒ति स नो॑ भग पुरऽए॒ता भ॑वेह ॥३८॥ सम॑ध्व॒राये॒ाषसो॑ नमन्त दधि॒क्रा-
वे॑व॒ शुच॑ये प॒दाय॑ । अ॒र्वा॒ची॒नं॑ व॑सु॒विद॒म्भग॑न्नो॒ रथ॑मि॒वाश्वा॑ वा॒जिन॒ऽ-
आव॑हन्तु ॥ ३९ ॥ अश्वा॑वती॒र्गोम॑तीर्न॒ऽउ॒षासो॑ वी॒रव॑तीः॒ सद॑मुच्छ-
न्तु भ॒द्राः । घृ॒तन्दुहा॑ना वि॒श्वतः॒ प्रपी॑ता यू॒यं पा॑त स्व॒स्तिभिः॒ स-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

दानं ॥ ४० ॥ पूषन्तवव्व्रतेव्वयन्नरिष्ष्येमकदाचन । स्तोतारस्तऽ
इहस्म्मसि ॥ ४१ ॥ पथस्पथःपरिपतिव्वचस्याकामेनकृतोऽअब्भ्या-
नडर्कम् । सनोरासच्छुरुधश्चन्द्राग्ग्राधियन्धियःसीषधातिप्रपूषा
॥ ४२ ॥ त्रीणिपदाव्विचक्रमेव्विष्णुर्ग्गोपाऽअदाब्भ्यः । अतोधर्म्माणि
धारयन् ॥ ४३ ॥ तद्विप्रासोव्विपन्न्यवोजागृवाꣳसःसमिन्धते ।
व्विष्णोर्यत्परमम्पदम् ॥४४॥ घृतवतीभुवनानामभिश्रियोर्वीपृथ्वी
मधुदुघेसुपेशसा । द्यावापृथिवीव्वरुणस्यधर्म्मणाव्विष्कभितेअजरेभू-
रिरेतसा ॥ ४५ ॥ येनःसपत्नाऽअपतेभवन्त्विन्द्राग्निभ्भ्यामवबाधाम-
हेतान् । वसवोरुद्राऽआदित्याऽउपरिस्पृशम्मोग्ग्रञ्चेत्तारमधिराजम

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

क्रन् ॥ ४६ ॥ आनासत्यात्त्रिभिरेकादशैरिहदेवेभिर्य्यातम्मधुपेयम-
श्विना । प्रायुस्तारिष्टन्नीरपांꣳसिमृक्षतꣳसेधतन्द्वेषोभवतꣳसचाभु-
वा ॥ ४७ ॥ एषवस्तोमोमरुतऽइयङ्गीर्म्मान्दार्य्यस्यमान्यस्यकारोः[1] ।
एषायासीष्टतन्न्वेव्वयांव्विद्यामेषंव्वृजनञ्जीरदानुम् ॥ ४८ ॥ सह-
स्तोमाꣳसहछन्दसऽआवृतꣳसहप्प्रमाऽऋषयꣳसप्तदैव्व्याः । पूर्व्वे-
षाम्पन्थामनुदृश्यधीराऽअन्न्वालेभिरेरत्थ्योनरश्म्मीन् ॥४९॥ आयु-
ष्यंव्वर्च्चस्यꣳरायस्पोषमौद्भिदम् । इदꣳहिरण्ण्यंव्वर्च्चस्वज्जैत्राया-
विशतादुमाम् ॥ ५० ॥ नतद्रक्षाꣳसिनपिशाचास्तरन्तिदेवानामो-

[1]—यस्यातिहाय सहेतिन प्रा० अ० ४–२६ इति सूत्रेण चकारनिषेधात् ।

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

जं÷प्रथमजᳪ᳭ह्येतत् । योबिभर्तिदाक्षायणᳪ᳭हिरण्ण्यᳪ᳭सदेवेषुकृणु-
तेदीर्ग्घमायुᳪ᳭सम्मनुष्ष्येषुकृणुतेदीर्ग्घमायु÷ ॥ ५१ ॥ यदाबध्नन्दा-
क्षायणाहिरण्ण्यᳪ᳭शतानीकायसुमनस्यमानाᳪ᳭ । तन्मऽआबध्नामिश-
तशारदायायुष्ष्माञ्जरदष्ट्टिर्ब्यथासम् ॥५२॥ उतनोहिर्बुध्न्य÷शृणो-
त्वजऽएकपात्पृथिवीसमुद्द्रः । विश्श्वेदेवाऽऋतावृधोहुवानास्तुता-
मन्त्राᳪ᳭कविशस्ताऽअवन्तु ॥ ५३ ॥ इमागिरऽआदित्येब्भ्योघृतस्नूᳪ᳭
सनाद्द्राजब्भ्योजुह्वाजुहोमि । शृणोतुमित्त्रोऽअर्य्यमाभगोनस्तुवि-
जातोव्वरुणोदक्षोऽअᳪ᳭शं÷ ॥ ५४ ॥ सप्तऽऋषयᳪ᳭प्प्रतिहिताᳪ᳭शरीरे
सप्तरक्षन्तिसदमप्प्रमादम् । सप्तापᳪ᳭स्वपतोलोकमीयुस्तत्रजागृतोऽ-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

ऽअस्वंप्प्नजौसत्त्रसदौचदेवौ ॥ ५५ ॥ उत्तिष्ठब्ब्रह्मणस्प्पतेदेवयन्त-
स्त्वेमहे । उपप्प्रयन्तुमरुतः सुदानवऽइन्द्रप्प्राशूर्ब्भवासचा ॥ ५६ ॥
प्रनूनम्ब्रह्मणस्प्पतिर्म्मन्त्रंव्वदत्युक्त्थम् । यस्मिन्निन्द्रोव्वरुणोमित्त्रो
ऽअर्य्यमादेवाऽओकाᳬंसिचक्क्रिरे ॥ ५७ ॥ ब्रह्मणस्प्पतेत्वमस्ययन्-
न्तासूक्तस्यबोधितनयञ्चजिन्व । व्विश्श्वन्तद्भद्द्रंय्यदवन्तिदेवाबृह-
द्वदेमव्विदथेसुवीराः । यऽइमाव्विश्श्वाव्विश्श्वकर्म्मायोनः पितान्न-
पतेन्नस्यनोदेहि[2] ॥ ५८ ॥ इति संहितायां चतुस्त्रिंशोऽध्यायः ।

---

१—यऽइमा, व्विश्वकर्म्मा विमनाः, यो नः पिता (शु० अ० १७ मं० १७, २६, २७)। २—अन्नपतेन्नस्य, (अ० ११ मं० ८३)।

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

# ❀ अथ पञ्चत्रिंशोऽध्यायः ❀

ॐ अपेतोयन्तुपणयोसुम्म्नादेवपीयवः । अस्यलोकःसुता-
वतः । द्युभिरहोभिरक्तुभिर्व्यक्तँयमोददात्ववसानमस्म्मै ॥ १ ॥
सवितातेशरीरेभ्यःपृथिव्याँल्लोकमिच्छतु । तस्म्मैयुज्यन्तामुस्त्रियाः
॥ २ ॥ व्वायुःपुनातुसवितापुनात्वग्नेर्ब्भ्राजसासूर्य्यस्यव्वर्च्चसा ।
व्विमुच्च्यन्तामुस्त्रियाः ॥ ३ ॥ अश्श्वत्थेवोनिषदनम्पर्ण्णेवोव्वसति-

१—'पणयो जहीमोऽम्बिके' ४।७६। पणयः जहीमः अम्बिके एतेभ्य एकारौकारेभ्यः परोऽकारोऽभिनिधीयत इति सूत्रार्थः। 'अत्रा जहीमोऽशिवाये ३५।१०। अम्बेऽअम्बिकेऽम्बालिके २३।१८। इत्यादौ।

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized by Siddhanta eGangotri Gyaan Kosha

ष्कृता । गोभाजऽइत्किलासथयत्सनवथपूरुषम् ॥ ४ ॥ सवितांते
शरीराणिमातुरुपस्थऽआवपतु । तस्मैपृथिविशम्भव ॥ ५ ॥ प्रजा-
पतौत्वादेवतायामुपोदकेलोकेनिदधाम्म्यसौ । अपनःशोशुचदघम्
॥ ६ ॥ परम्मृत्योऽअनुपरेहिपन्थांयस्तेऽअन्न्यऽइतरोदेवयानात् ।
चक्षुष्मतेशृण्वतेतेब्रवीमिमानः प्रजाछंरीरिषोमोतवीरान् ॥ ७ ॥
शंवातःशछहितेघृणिःशन्तेभवन्त्विष्टकाः । शन्तेभवन्त्वग्नयः
पार्थिवासोमात्वाभिशूशुचन् ॥ ८ ॥ कल्पन्तान्तेदिशस्तुभ्य
मापः शिवतमास्तुभ्यम्भवन्तुसिन्धवः । अन्तरिक्षछशिवन्तु-
भ्यङ्कल्पन्तान्तेदिशःसर्व्वाः ॥ ९ ॥ अश्मन्वतीरीयतेसछरभ-

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

द्ध्वमुत्तिष्ठत्प्रतरतासखायः । अत्राजहीमोशिवायेऽअसन्छिवा-
न्वयमुत्तरेमाभिवाजान् ॥ १० ॥ अपाघमपकिल्बिषमपकृत्यामपो
रपः । अपामार्गत्वमस्मदपदुःष्वप्न्यꣳसुव ॥ ११ ॥ सुमित्त्रिया-
नऽआपऽओषधयःसन्तुदुर्म्मित्त्रियास्तस्मैसन्तुयोस्मान्द्वेष्टियञ्चव्वं-
यन्द्विष्मः ॥ १२ ॥ अनड्वाहमन्वारभामहेसौरभेयꣳस्वस्तये ।
सनऽइन्द्रऽइवदेवेभ्योव्वह्निःसन्तारणोभव ॥ १३ ॥ उद्वयन्तमस-
स्परिस्वःपश्यन्तऽउत्तरम् । देवन्देवत्राꣳसूर्य्यमगन्मज्ज्योतिरुत्तम-
म् ॥ १४ ॥ इमञ्जीवेब्भ्यःपरिधिन्दधामिमैषान्नुगादपरोऽअर्त्थमेतम् ।
शतञ्जीवन्तुशरदःपुरूचीरन्तर्म्मृत्युन्दधतामपर्व्वतेन ॥ १५ ॥ अग्न-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

ऽआयूꣳषिपिवस॒ऽआसु॒वोर्ज्ज॑मि॒षञ्च॑नः । आ॒रेबा॑धस्वदु॒च्छुना॑म् ॥१६॥
आयु॑ष्म्मानग्नेह॒विषा॑वृधा॒नोघृ॒तप्प्र॑तीकोघृ॒तयो॑निरेधि । घृ॒तम्पी॒त्वा
मधु॒चारु॒गव्व्यम्पि॒तेव॑पु॒त्रम॒भिर॑क्षतादि॒मान्त्स्वाहा॑ ॥ १७ ॥ परी॒मेगा-
म॑नेषत॒पर्य्य॒ग्निम॑हृषत । दे॒वेष्व॑क्रत॒श्श्रव॒ꣳकऽइ॒माँ२आद॑धर्षति ॥१८॥
क्र॒व्यादम॒ग्निम्प्रहि॑णोमिदू॒रंय॒मरा॑ज्यंगच्छतुरिप्रवा॒हः । इ॒हैवायमि-
त॑रोजा॒तवे॑दादे॒वेब्भ्यो॑ह॒व्यंव्व॑हतुप्रजा॒नन् ॥ १९ ॥ व्वह॑व्व॒पाञ्जा॑-
तवेदःपि॒तृब्भ्यो॒यत्रै॑नान्वेत्थनिहि॑तान्पराके । मेद॑सःकु॒ल्ल्याऽउप॒-
तान्त्स्र॑वन्तुस॒त्याऽए॑षामाशि॒षःसन्न॑मन्ता॒ꣳस्वाहा॑ ॥ २० ॥ स्यो॒-
नापृ॑थिविनोभवानृक्ष॒रानि॒वेश॑नी । यच्छा॑नः॒शर्म्म॑स॒प्प्रथाः॑ । अप॑नः॒

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

शोशुचदघम् ॥ २१ ॥ अस्मात्त्वमधिजातोसित्त्वदयञ्जायताम्पुनः । असौस्वर्गायलोकायस्वाहा ॥ २२ ॥ इति संहितायां पञ्चत्रिंशोऽध्यायः ।

## ❀ अथ षट्त्रिंशोऽध्यायः ❀

ॐऋचंव्वाचम्प्रपद्येमनोयजुःप्रपद्येसामप्प्राणम्प्रपद्येचक्षुःश्रोत्रम्प्रपद्ये । व्वागोजः सहौजोमयिप्प्राणापानौ ॥ १ ॥ यन्मेछिद्द्रञ्चक्षुषोहृदयस्यमनसोवातितृण्णम्बृहस्प्पतिर्म्मेतद्दधातु । शन्नोभवतु भुवनस्ययस्प्पतिः ॥ २ ॥ भूर्भुवःस्वः तत्सवितुर्व्वरेण्यम्भर्गो देवस्यधीमहि । धियोयोनः प्रचोदयात् ॥ ३ ॥ कयानश्चित्रऽआ-

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

भुवदूतीसदावृधः सखा । कयाशचिष्ठयाव्वृता ॥ ४ ॥ कस्त्वासत्यो-
मदानाम्मꣳहिष्ठोमत्सदन्धसः । द्दृढाचिदारुजेव्वसु ॥ ५ ॥ अभी-
षुणः सखीनामविताजरितॄणाम् । शतम्भवास्यूतिभिः ॥ ६ ॥ कया
त्वन्नऽऊत्याभिप्प्रमन्दसेव्वृषन् । कयास्तोतृब्भ्यऽआभर ॥ ७ ॥
इन्द्रोव्विश्श्वस्यराजति । शन्नोऽअस्तुद्द्विपदेशञ्चतुष्प्पदे ॥ ८ ॥
शन्नोमित्त्रः शंव्वरुणः शन्नोभवत्वर्य्यमा । शन्नऽइन्द्रोबृहस्प्पतिः शन्नो
व्विष्ष्णुरुरुक्रमः ॥ ९ ॥ शन्नोव्वातः पवताꣳशन्नस्तपतु-
सूर्य्यः । शन्नः कनिक्क्रदद्देवः पर्ज्जन्न्योऽअभिवर्षतु ॥ १० ॥ अहा-
निशम्भवन्तुनः शꣳरात्त्रीः प्प्रतिधीयताम् । शन्नऽइन्द्राग्नीभवतामवो-

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha
भिः॑शन्न॒ऽइन्द्रा॒वरु॑णारा॒तह॑व्या । शन्न॒ऽइन्द्रापू॒षणा॒व्वाज॑सातौ॒श-
मिन्द्रा॒सोमा॑सुवि॒ताय॒शंय्योः॑ ॥ ११ ॥ शन्नो॑दे॒वीर॒भिष्ट॑य॒ऽआपो॑
भवन्तुपी॒तये॑ । शंय्योर॒भिस्र॑वन्तुनः ॥ १२ ॥ स्यो॒नापृ॑थिविनोभवा-
नृक्ष॒रानि॒वेश॑नी । यच्छा॑नः॒शर्म्म॑स॒प्प्रथाः॑ ॥ १३ ॥ आपो॒हिष्ठाम॑यो-
भुव॒स्तान॑ऽऊ॒र्ज्जेद॑धातन । म॒हेरणा॑य॒चक्ष॑से ॥ १४ ॥ योवः॑शि॒वत॑-
मोर॒स॒स्तस्य॑भाजयते॒हनः॑ । उ॒श॒तीरि॑वमा॒तरः॑ ॥ १५ ॥ तस्म्मा॒
ऽअर॑ङ्गमामवो॒यस्य॒क्षया॑य॒जिन्व॑थ । आपो॑ज॒नय॑थाचनः ॥ १६ ॥
द्यौः॒शान्ति॑र॒न्तरि॑क्ष॒ᳯ॑शान्तिः॑ पृथि॒वीशान्ति॒राप॒ᳯ॑शान्ति॒रोष॑धय॒ᳯ॑शा-
न्तिः॑ । व्वन॒स्पत॑य॒ᳯ॑शान्ति॒र्व्विश्वे॑दे॒वाः॑शान्ति॒र्ब्ब्रह्म॒शान्ति॒ᳯ॑सर्व्व॒ᳯ॑
CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

शान्तिः शान्तिरेव शान्तिः सा मा शान्तिरेधि ॥ १७ ॥ दृते दृꣳह मा
मित्रस्य मा चक्षुषा सर्वाणि भूतानि समीक्षन्ताम् । मित्रस्याहं चक्षु-
षा सर्वाणि भूतानि समीक्षे । मित्रस्य चक्षुषा समीक्षामहे ॥ १८ ॥
दृते दृꣳह मा । ज्योक्ते सन्दृशि जीव्यासं ज्योक्ते सन्दृशि जीव्यासम्
॥ १९ ॥ नमस्ते हरसे शोचिषे नमस्ते अस्त्वर्चिषे । अन्याँस्ते अस्म-
त्तपन्तु हेतयः पावको अस्मभ्यꣳ शिवो भव ॥ २० ॥ नमस्ते अस्तु
विद्युते नमस्ते स्तनयित्नवे । नमस्ते भगवन्नस्तु यतः स्वः समीहसे
॥ २१ ॥ यतो यतः समीहसे ततो नो अभयं कुरु । शं नः कुरु प्रजाभ्यो
भयं नः पशुभ्यः ॥ २२ ॥ सुमित्रिया न आप ओषधयः सन्तु

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha
दुर्म्मित्रियास्तस्मैसन्तुयोस्म्मान्द्वेष्टियञ्चव्वयन्द्विष्म्मः ॥ २३ ॥
तच्चक्षुर्द्देवहितम्पुरस्ताच्छुक्क्रमुच्चरत् । पश्येमशरदः शतञ्जीवेमशरदः शतᳪ श्रृणुयामशरदः शतम्प्रब्रवामशरदः शतमदीनाःस्याम शरदः शतम्भूयश्चशरदः शतात् ॥ २४ ॥

इति संहितायां षट्त्रिंशोऽध्यायः ।

---

१. 'तकारवर्गश्चकारवर्गे चकारवर्गम्' (४।९५) तकारवर्गः पदान्तीयः चकारवर्गे प्रत्यये परे चकारवर्गमापद्यते । एवम्—'आराच्चिद्द्वेषः २०।५२। आच्छच्छन्दः १५।५।३, उज्जिहानाः १५।५। इत्यादौ ।'झकारादि जकारादि च पदानामुदाहरणं संहितायां न विद्यते ।

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

## ❀ अथ सप्तत्रिंशोऽध्यायः ❀

ओ३म् देवस्य॑त्वा सवि॒तुः प्र॑स॒वे॑ऽश्विनो॑र्बा॒हुभ्यां॑ पू॒ष्णो हस्ता॑भ्याम् । आ द॑दे॒ नारि॑रसि ॥ १ ॥ यु॒ञ्जते॒ मन॑ऽउ॒त यु॑ञ्जते॒ धियो॒ विप्रा॒ विप्र॑स्य बृह॒तो वि॑प॒श्चितः॑ । वि होत्रा॑ दधे वयुना॒विदेक॒ऽइन्म॒ही दे॒वस्य॑ स॒वितुः॒ परि॑ष्टुतिः ॥ २ ॥ देवी॑ द्यावापृथिवी म॒खस्य॑ वाम॒द्य शिरो॑ राध्यासं दे॒व॒यज॑ने पृथि॒व्याः । म॒खाय॑ त्वा म॒खस्य॑ त्वा शी॒र्ष्णे ॥ ३ ॥ दे॒व्यो॑ वम्र्यो भू॒तस्य॑ प्रथम॒जा म॒खस्य॑ वो॒ऽद्य शिरो॑ राध्यासं दे॒व॒यज॑ने पृथि॒व्याः । म॒खाय॑ त्वा म॒खस्य॑ त्वा शी॒र्ष्णे ॥ ४ ॥ [ शतम् १९०० ] इ॒यत्य॑ग्र॑ऽआसीन्म॒खस्य॑ ते॒ऽद्य शिरो॑ राध्यासं दे॒व॒यज॑ने पृथि॒व्याः । म॒खाय॑ त्वा म॒खस्य॑

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized by Siddhanta eGangotri Gyaan Kosha

त्वाशीर्ष्णे ॥ ५ ॥ इन्द्रस्यौजस्स्थमखस्यवोद्यशिरोराद्ध्यासन्देवयजं-
नेपृथिव्व्याः । मखायत्वामखस्यत्वाशीर्ष्णे । मखायत्वामखस्यत्वा
शीर्ष्णे । मखायत्वामखस्यत्वाशीर्ष्णे ॥ ६ ॥ प्रैतुब्ब्रह्मणस्पतिर्प्प्र-
देव्येतुसूनृता । अच्छाव्वीरन्नर्ष्यम्पङ्क्तिराधसन्देवायज्ञन्नयन्तुनः ।
मखायत्वामखस्यत्वाशीर्ष्णे । मखायत्वामखस्यत्वाशीर्ष्णे । मखा-
यत्वामखस्यप्वाशीर्ष्णे ॥ ७ ॥ मखस्यशिरोसि मखायत्वामखस्यत्वा
शीर्ष्णे । मखस्यशिरोसि । मखायत्वामखस्यत्वाशीर्ष्णे । मखस्यशि-
रोसि । मखायत्वामखस्यत्वाशीर्ष्णे । मखायत्वामखस्यत्वाशीर्ष्णे ।
मखायत्वामखस्यत्वाशीर्ष्णे । मखायत्वामखस्यत्वाशीर्ष्णे ॥ ८ ॥

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

अश्वस्यत्वावृष्ण्णः शक्नाधूपयामिदेवयजनेपृथिव्याः । मखायत्वा
मखस्यत्वाशीष्ण्णें । अश्वस्यत्वावृष्ण्णः शक्नाधूपयामिदेवयजने
पृथिव्याः । मखायत्वामखस्यत्वाशीष्ण्णें । अश्वस्यत्वावृष्ण्णः
शक्नाधूपयामिदेवयजनेपृथिव्याः । मखायत्वामखस्यत्वाशीष्ण्णें । म-
खायत्वामखस्यत्वाशीष्ण्णें । मखायत्वामखस्यत्वाशीष्ण्णें । मखायत्वा-
मखस्यत्वाशीष्ण्णें ॥९॥ ऋजवेत्वासाधवेत्वासुक्षित्यैत्वा । मखायत्वा
मखस्यत्वाशीष्ण्णें । मखायत्वामखस्यत्वाशीष्ण्णें । मखायत्वामखस्य
त्वाशीष्ण्णें ॥१०॥ यमायत्वामखायत्वासूर्य्यस्यत्वातपसे । देवस्त्वास-
वितामद्ध्वानक्तुपृथिव्याः संस्पृशस्पाहि । अर्चिरसिशोचिर-

CC-0. Panini Kanya Maha Vidyalaya Collection.

सि॒तपो॑सि Digitized By Siddhanta eGangotri Gyaan Kosha ॥ ११ ॥ अना॑धृष्टा पु॒रस्ता॑द॒ग्नेराधि॑पत्य॒ऽआयु॑र्म्मे॑दाः पु॒त्रव॑-
तीदक्षि॒णत॒ऽइन्द्र॒स्याधि॑पत्ये॒ प्रजाम्मे॑दाः । सु॒षदा॑ प॒श्चाद्दे॒वस्य॑ सवि॒तु-
राधि॑पत्ये॒ चक्षु॑र्म्मे॑ दा॒ऽआश्रु॑तिरु॒त्तर॒तो धा॒तुराधि॑पत्ये॒ रा॒यस्पोष॑म्मे दाः ।
विधृ॑तिरु॒परि॑ष्टा॒द् बृह॒स्पते॒राधि॑पत्य॒ऽओजो॑मे दा॒ विश्वा॑भ्यो मा॒ ना॒
ष्ट्राभ्य॑स्पाहि॒ मनो॒रश्वा॑सि ॥ १२ ॥ स्वाहा॑ म॒रुद्भि॒ः परि॑श्रीय-
स्व दि॒वः स॒ꣳस्पृशा॑स्पाहि । मधु॒ मधु॒ मधु॑ ॥ १३ ॥ गर्भो॑ दे॒वानां॑ पि॒-
ता म॑ती॒नाम्पति॑ः प्र॒जाना॑म् । सन्दे॒वो दे॒वेन॑ सवि॒त्रा ग॑त॒ सꣳ सूर्य्ये॑ण रो-
चते ॥ १४ ॥ सम॒ग्निर॒ग्निना॑ गत॒ सन्दैवे॑न सवि॒त्रा सꣳ सूर्य्ये॑णा रोचिष्ट ।
स्वाहा॒ सम॒ग्निस्तप॑सा गत॒ सन्दैव्ये॑न सवि॒त्रा सꣳ सूर्य्ये॑णा रूरुचत ॥ १५ ॥

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

धर्त्ता दिवो व्विभाति तपसस्पृथिव्यां धर्त्ता देवो देवानाममर्त्यस्तपोजा ॥ ।
व्वा चमस्म्मे नियच्छ देवायुवम् ॥ १६ ॥ अपश्यङ्गोपामनिपद्यमानमा
च परा च पथिभिश्चरन्तम् । स सद्ध्रीचीः स व्विषूचीर्व्वसान ऽआवरी-
वर्त्ति भुवनेष्वन्तः ॥ १७ ॥ व्विश्वासाम्भुवाम्पते व्विश्वस्य मनस-
स्पते व्विश्वस्य व्वचसस्पते सर्व्वस्य व्वचसस्पते । देवश्रुत्वन्देव घ-
र्म्म देवो देवान्पाह्यत्र प्रावीरनु वान्देववीतये । मधुमाद्ध्वीभ्याम्मधु-
माधूचीभ्याम् ॥ १८ ॥ हृदे त्वा मनसे त्वा दिवे त्वा सूर्य्याय त्वा । ऊर्द्ध्वो
ऽअद्ध्वरन्दिवि देवेषु धेहि ॥ १९ ॥ पिता नोऽसि पिता नो बोधि नमस्ते ऽअ-
स्तु मा मा हिंसीः । त्वष्टृमन्तस्त्वा सपेम पुत्रान्पशून्मयि धेहि प्रजा-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

मस्म्मासुधेह्यरिष्टाहᳬंसहपत्याभूयासम् ॥ २० ॥ अहँ÷केतुनाजुषताᳬंसुज्ज्योतिज्ज्योतिषास्वाहा । रात्रिँ÷केतुनाजुषताᳬंसुज्ज्योतिज्ज्योतिषास्वाहा ॥ २१ ॥

इति संहितायां सप्तत्रिंशोऽध्यायः ।

## ❀ अथ अष्टात्रिंशोऽध्यायः ❀

ॐ देवस्यत्वासवितुःप्प्रसवेऽश्विनोर्ब्बाहुब्भ्यांपूष्णोहस्ताब्भ्याम् । आददेदित्यैरास्स्नासि ॥ १ ॥ इडऽएह्यदितऽएहिसरस्वत्येहि । असा[1]-

---

१. 'असौ च शाकटायनः' (शु० य० प्रा० अ० ४ सू० १२७) असावित्येतस्य पदस्य असस्थाने प्रथमे तकारो न लुप्यते शाकटायनमतेन ।

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

वेह्यसावेह्यसावेहि ॥ २ ॥ अदित्यैरास्नासीन्द्राण्याऽउष्णीषः ।
पूषासिघर्म्मायदीष्ष्व ॥ ३ ॥ अश्विभ्याम्पिन्वस्वसरस्वत्यैपिन्व-
स्वेन्द्रायपिन्वस्व । स्वाहेन्द्रवत्स्वाहेन्द्रवत्स्वाहेन्द्रवत् ॥ ४ ॥
यस्ते स्तनःशशयोयोमयोभूर्य्योरत्नधाव्वसुविद्यःसुदत्रः ।
येनव्विश्श्वापुष्ष्यसिव्वार्य्याणिसरस्वतितमिहधातवेकः । उर्व्व-
न्तरिक्षमन्न्वेमि ॥ ५ ॥ गायत्रञ्छन्दोऽसित्रैष्टुभञ्छन्दोऽसि
द्यावापृथिवीब्भ्यान्त्वापरिगृह्णाम्यन्तरिक्षेणोपयच्छामि । इन्द्रा-
श्श्विनामधुनःसारघस्यघर्म्मम्पातव्वसवोयजतव्वाट् । स्वाहासूर्य्य-
स्यरश्मयेव्वृष्टिवनये ॥ ६ ॥ समुद्रायत्वाव्वातायस्वाहासरिराय

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

त्वाव्वातायस्वाहा । अनाधृष्ष्यायत्वाव्वातायस्वाहाऽप्रतिधृष्ष्याय
त्वाव्वातायस्वाहा । अवस्यवेत्वाव्वातायस्वाहाशिमिदायत्वाव्वा
तायस्वाहा ॥ ७ ॥ इन्द्रायत्वाव्वसुमतेरुद्द्रवतेस्वाहेन्द्रायत्वादित्य
वतेस्वाहेन्द्रायत्वाभिमातिघ्घ्नेस्वाहा । सवित्त्रेत्वऽऋभुमतेव्विभु
मतेव्वाजवतेस्वाहाबृहस्प्पतयेत्वाव्विश्श्वदेव्व्यावतेस्वाहा ॥ ८ ॥
समायत्वाङ्गिरस्वतेपितृमतेस्वाहा । स्वाहाघर्म्मायस्वाहाघर्म्मःपित्त्रे
॥ ९ ॥ व्विश्श्वाऽआशादक्षिणसद्विश्श्वान्देवानयाडिह । स्वाहा
कृतस्यघर्म्मस्यमधोःपिबतमश्श्विना ॥१०॥ दिविधाऽइमंयज्ञमिमंयज्ञ-
ञ्न्दिविधाः । स्वाहाग्नयेयज्ञियायशंयजुर्भ्यः ॥११॥ अश्श्विनाघर्म्मं-

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

म्पातꣳहादुद्धानमहद्दिवाभिरूतिभिः । तन्त्रायिणेनमोद्यावापृथिवी
भ्याम् ॥१२॥ अपातामश्विनाघर्म्ममनुद्यावापृथिवीऽअमꣳसाताम्।
इहैवरातयःसन्तु ॥१३॥ इषेपिन्वस्वोर्ज्जेपिन्वस्वब्रह्मणेपिन्वस्व
क्षत्रायपिन्वस्वद्यावापृथिवीभ्यांपिन्वस्व । धर्म्मासिसुधर्म्मामेन्य-
स्म्मेनृम्णानिधारयब्रह्मधारयक्षत्रन्धारयविशन्धारय ॥१४॥ स्वाहा-
पूष्णेशरसेस्वाहाग्ग्रावभ्यꣳस्वाहाप्रतिरवेभ्यः । स्वाहापितृभ्यऽऊ-
र्ध्वबर्हिभ्योघर्म्मपावभ्यꣳस्वाहाद्यावापृथिवीभ्याꣳस्वाहाविश्वे-
भ्योदेवेभ्यः ॥ १५ ॥ स्वाहारुद्रायरुद्रहूतयेस्वाहासञ्ज्योति-
षाज्ज्योतिः । अहःकेतुनाजुषताꣳसुज्ज्योतिर्ज्ज्योतिषास्वाहा ।

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

रात्रिः केतुनाजुषताꣳसुज्ज्योतिर्ज्ज्योतिषास्वाहा । मधुहुतमिन्द्र-
तमेऽअग्नावश्यामतेदेवघर्म्मनमस्तेऽअस्तुमामाहिꣳसीः ॥ १६ ॥
अभीमम्महिमादिवंव्विप्रोबभूवसप्रथाः । उतश्रवसापृथिवीꣳसꣳ
सीदस्वमहाँ२ऽअसिरोचस्वदेववीतमः । व्विधूममग्नेऽअरुषम्मियेद्ध्य-
सृजप्प्रशस्तदर्शतम् ॥ १७ ॥ यातेघर्म्मदिव्व्याशुग्ग्यागायत्र्याꣳहवि-
र्द्धाने । सातऽआप्प्यायतान्निष्ट्यायतान्तस्यैतेस्वाहा । यातेघ-
र्म्मान्तरिक्षेशुग्ग्यात्रिष्टुब्भ्याग्नीध्ध्रे । सातऽआप्प्यायतान्निष्ट्यायता-
न्तस्यैतेस्वाहा । यातेघर्म्मपृथिव्व्याꣳशुग्ग्याजगत्याꣳसदस्या ।
सातऽआप्प्यायतान्निष्ट्यायतान्तस्यैतेस्वाहा ॥ १८ ॥ क्षत्रस्यत्वा

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

परस्पायब्ब्रह्मणस्तन्न्वम्पाहि । व्विधर्म्मस्त्वाधर्म्मणाव्वयमनुक्क्रामा-
मसुविताय नव्व्यंसे ॥ १९ ॥ चतुः स्त्रक्तिर्न्नाभिर्ऋतस्यसप्प्रथाः
सनोव्विश्श्वायुः सप्प्रथाः सनः सर्व्वायुः सप्प्रथाः । अपद्वेषो
ऽअपह्वरोन्न्यव्व्रतस्यसश्चिम ॥ २० ॥ घर्म्मैतत्तेपुरीषन्तेनव्वर्द्ध-
स्वचाचप्प्यायस्व । व्वर्द्धिषीमहिचव्वयमाचप्प्यासिषीमहि ॥ २१ ॥
अचिक्रदद्वृषाहरिर्म्महान्मित्रोनदर्शतः । सᳬ सूर्य्येणदिद्युतदुदधि-
र्न्निधिः ॥ २२ ॥ सुमित्त्रियानऽआपऽओषधयः सन्तुदुर्म्मित्त्रियास्त-
स्म्मैसन्तुयोस्मान्द्वेष्टियञ्चव्वयन्द्विष्म्मः ॥ २३ ॥ उद्वयन्तमस-
स्प्परिस्वः पश्श्यन्तऽउत्तरम् । देवन्देवत्राम्सूर्य्यमगन्म्मज्ज्योतिरुत्त-

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

मम् ॥ २४ ॥ एधोस्येधिषीमहिसुमिदसितेजोसितेजोमयिधेहि ॥२५॥
यावतीद्यावापृथिवीयावच्चसप्तसिन्धवोवितस्थिरे । तावन्तमिन्द्र-
तेग्ग्रहमूर्ज्जागृह्णाम्म्यक्षितम्मयिगृह्णाम्म्यक्षितम् ॥ २६ ॥ मयित्यदि-
न्द्रियम्बृहन्म्मयिदक्षोमयिक्क्रतुः। घर्म्मस्त्रिशुग्ग्विराजतिव्विराजाज्ज्यो-
तिषासहब्ब्रह्मणातेजसासह ॥ २७ ॥ पयसोरेतऽआभृतन्तस्य
दोहमशीमह्युत्तरामुत्तराᳬ समाम् । त्विषःसंव्वृक्क्रत्वेदक्षस्यतेसुषु-
म्म्णस्यतेसुषुम्म्णाग्निहुतः । इन्द्रपीतस्यप्रजापतिभक्षितस्यमधुमतऽ-
उपहूतऽउपहूतस्यभक्षयामि ॥ २८ ॥

इति संहितायां अष्टत्रिंशोऽध्यायः ।

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

# ❀ अथ एकोनचत्वारिंशत्तमोऽध्यायः ❀

ॐ स्वाहाप्प्राणेभ्यᳪसाधिपतिकेभ्यᳪ । पृथिव्यैस्वाहाग्नयेस्वाहा-
न्तरिक्षायस्वाहाव्वायवेस्वाहा । दिवेस्वाहासूर्य्यायस्वाहा ॥ १ ॥
दिग्भ्यःस्वाहाचन्द्रायस्वाहानक्षत्रेभ्यᳪस्वाहाद्भ्यःस्वाहाव्वरुणाय
स्वाहा । नाभ्यैस्वाहापूतायस्वाहा ॥ २ ॥ व्वाचेस्वाहाप्प्राणाय
स्वाहाप्प्राणायस्वाहा । चक्षुषेस्वाहाचक्षुषेस्वाहाश्श्रोत्रायस्वाहा
श्श्रोत्रायस्वाहा ॥ ३ ॥ मनसᳪकाममाकूतिव्वाचःसत्यमशीय । पशू-
नाᳪरूपमन्नस्यरसोयशःश्रीःश्रयताम्मयिस्वाहा ॥ ४ ॥ प्रजापतिᳪ

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

सम्भ्रियमाणꣳसम्राट्सम्भृतोव्वैश्श्वदेवः सꣳसन्नोघर्म्मः प्रवृक्तस्ते-
जऽउद्यतऽआश्विनःपयस्यानीयमानेपौष्ष्णोव्विष्यन्दमानेमारुतःक्कल
थन् । मैत्रःशरसिसन्ताय्यमानेव्वायव्व्योह्रियमाणऽआग्नेयोहूयमानो
व्वाग्घुतः ॥ ५ ॥ सविताप्प्रथमेहन्नग्निर्द्द्वितीयेव्वायुस्तृतीयऽआदि-
त्यश्चतुर्थेचन्द्रमाꣳपञ्चमऽऋतुःषष्ष्ठेमरुतꣳसप्प्तमेबृहस्पतिरष्ट्टमे ।
मित्त्रोनवमेव्वरुणोदशमऽइन्द्रऽएकादशेव्विश्श्वेदेवाद्द्वादशे ॥ ६ ॥
उग्ग्रश्श्चभीमश्श्चद्ध्वान्तश्श्चधुनिश्श्च । सासह्वाँश्श्चाभियुग्वाचव्वि-
क्षिपꣳस्वाहा ॥ ७ ॥ अग्निꣳहृदयेनाशनिꣳहृदयाग्ग्रेणपशुपतिङ्कृ-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

त्स्नहृद॑येनभ॒वं॑रु॒यक्ना । श॒र्व्वंम्मत॑स्नाभ्या॒मीशा॑नम्म॒न्न्युना॑महादे॒व-
म॑न्तःपर्श॒व्व्येनो॒ग्ग्रन्दे॒वंव्व॑नि॒ष्ट्टुना॑व्वसिष्ठ॒हनुः॑शिङ्गीनि॒को॑श्याभ्या॑म्
॥ ८ ॥ उ॒ग्ग्रंल्लो॑हि॑तेन मि॒त्र॒सौव्व्र॑त्ये॒नरु॒द्द्रन्दौव्व्र॑त्ये॒नेन्द्रम्प्रक्क्री॒डेन॑
म॒रुतो॒बले॑नसा॒द्ध्यान्प्र॒मुदा॑ । भ॒वस्य॒कण्ठ्य॑ᳪरु॒द्द्रस्या॑न्तःप॒र्श्व्यं-
म्म॑हादे॒वस्य॒यकृ॑च्छ॒र्व्वस्य॑व्वनि॒ष्ठुः॑पशु॒पतेः॑पुरीतत् ॥ ९ ॥ लोम॑भ्य॒ᳪ
स्वाहा॒लोम॑भ्य॒ᳪस्वाहा॑त्व॒चेस्वाहा॑त्व॒चेस्वाहा॒लोहि॑ताय॒स्वाहा॒लोहि॑ताय॒
स्वाहा॒मेदो॑भ्य॒ᳪस्वाहा॒मेदो॑भ्य॒ᳪस्वाहा॑ । मा॒ᳪसेभ्य॒ᳪस्वाहा॑
मा॒ᳪसेभ्य॒ᳪस्वाहा॒स्नाव॑भ्य॒ᳪस्वाहा॒स्नाव॑भ्य॒ᳪस्वाहा॒स्त्थभ्य॒ᳪस्वा-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

ह्रास्थभ्य॑ᳬस्वाहा॑मज्जभ्य॑ᳬस्वाहा॑मज्जभ्य॑ᳬस्वाहा॑ । रेत॑से॒स्वाहा॑
पा॒यवे॒स्वाहा॑ ॥ १० ॥ आ॒या॒सा॒य॒स्वाहा॑प्प्रा॒या॒सा॒य॒स्वाहा॑सं॒य्या॒साय॒
स्वाहा॑व्वि॒या॒सा॒य॒स्वाहो॑द्या॒सा॒य॒स्वाहा॑ । शु॒चे॒स्वाहा॒शो॒च॑ते॒स्वाहा॒
शो॒च॑मा॒ना॒य॒स्वाहा॒शो॒का॑य॒स्वाहा॑ ॥ ११ ॥ तप॑से॒स्वाहा॒तप्प्य॑ते॒स्वाहा॒
तप्प्य॑मा॒ना॒य॒स्वाहा॑त॒प्ता॒य॒स्वाहा॑घ॒र्म्मा॑य॒स्वाहा॑ । निष्कृ॑त्यै॒स्वाहा॒
प्प्राय॑श्चित्त्यै॒स्वाहा॑भेष॒जा॒य॒स्वाहा॑ ॥१२॥ य॒मा॒य॒स्वाहा॒न्त॑का॒य॒स्वाहा॑
मृ॒त्यवे॒स्वाहा॑ । ब्ब्रह्म॑णे॒स्वाहा॑ब्ब्रह्मह॒त्यायै॒स्वाहा॒विश्श्वे॑भ्यो॒दे॒वेभ्य॑ᳬ
स्वाहा॒द्यावा॑पृथि॒वीभ्या॑ᳬस्वाहा॑ ॥ १३ ॥

इति संहितायामेकोन-चत्वारिंशत्तमोऽध्यायः ।

CC-0, Panini Kanya Maha Vidyalaya Collection

Digitized By Siddhanta eGangotri Gyaan Kosha

# ❁ अथ चत्वारिंशत्तमोऽध्यायः ❁

ॐ ईशावास्यमिदꣳसर्व्वंयत्किञ्चजगत्याञ्जगत् । तेनत्यक्तेन
भुञ्जीथामागृधःकस्यस्विद्धनम् ॥ १ ॥ कुर्व्वन्नेवेहकर्म्माणिजिजीवि-
षेच्छतꣳसमाः । एवन्त्वयिनान्यथेतोस्तिनकर्म्मलिप्यतेनरे ॥ २ ॥
असुर्य्यानामतेलोकाऽअन्धेनतमसावृताः । ताँस्तेप्रेत्यापिगच्छन्ति
येकेचात्महनोजनाः ॥ ३ ॥ अनेजदेकम्मनसोजवीयोनैनद्देवाऽआ-
प्नुवन्पूर्व्वमर्षत् । तद्धावतोन्यानत्येतितिष्ठत्तस्मिन्नपोमातरिश्वा
दधाति ॥ ४ ॥ तदेजतितन्नैजतितद्दूरेतद्वन्तिके । तदन्तरस्यसर्व्वस्य

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

तदुसर्व्वस्यास्यबाह्यतः ॥ ५ ॥ यस्तुसर्व्वाणिभूतान्यात्मन्नेवानुप-
श्यति । सर्वभूतेषुचात्मानन्ततोनव्विचिकित्सति ॥ ६ ॥ यस्मिन्-
त्सर्व्वाणिभूतान्यात्मैवाभूद्विजानतः । तत्रकोमोहꣳकःशोकऽएक-
त्वमनुपश्यतः ॥ ७ ॥ सपर्य्यगाच्छुक्रमकायमव्रणमस्नाविरꣳशुद्ध-
मपापविद्धम् । कविर्म्मनीषीपरिभूःस्वयम्भूर्य्याथातत्थ्यतोर्थान्व्य-
दधाच्छाश्वतीभ्यःसमाभ्यः ॥ ८ ॥ अन्धन्तमःप्रविशन्तियेसम्भू-
तिमुपासते । ततोभूयऽइवतेतमोयऽउसम्भूत्याꣳरताः ॥९॥ अन्य-
देवाहुःसम्भवादन्यदाहुरसम्भवात् । इतिशुश्रुमधीराणांयेनस्त-
द्विचचक्षिरे ॥ १० ॥ सम्भूतिञ्चविनाशञ्चयस्तद्वेदोभयꣳसह ।

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

व्विनाशेनमृत्युन्तीर्त्वासम्भूत्यामृतमश्श्नुते ॥ ११ ॥ अन्धन्तमः प्र-
विंशन्तिषेविद्यामुपासते । ततोभूयऽइवतेतमोषऽउविद्यायाᳬ रताः ॥ १२ ॥
अन्न्यदेवाहुर्व्विद्यायाऽअन्न्यदाहुरविद्यायाः । इति शुश्श्रुमधीराणांय्येनस्तद्द्विचचक्षिरे ॥ १३ ॥
व्विद्याञ्चाविद्याञ्च यस्तद्वेदोभयᳬसह । अविद्ययामृत्युन्तीर्त्वाव्विद्ययामृतमश्नुते ॥ १४ ॥
व्वायुरनिलममृतमथेदम्भस्मान्तᳬशरीरम् ॥ ॐ ३ क्रतो-
स्मर । क्लिबेस्मर । कृतᳬस्मर ॥ १५ ॥ अग्नेनयसुपथाराये ऽअस्स्मा-
न्व्विश्श्वानिदेवव्वयुनानिव्विद्वान् । युयोद्ध्युस्म्मज्जुहुराणमेनोभूयि-
ष्ठान्तेनमऽउक्तिम्व्विधेम ॥ १६ ॥ हिरण्मयेनपात्रेणसत्यस्यापिहित-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

म्मुखम् । योसावादित्येपुरुषः सोसावहम् ॥१७॥ ओ३म् खम्ब्रह्म ॥१८॥

इति संहितायां चत्वारिंशत्तमोऽध्यायः ।



---

१. 'तस्मिन्नहलजिह्वामूलीयोपद्ध्मानीयनासिक्या न सन्ति माध्यन्दिनानाम् । लृकारो दीर्घः प्लुतश्चोक्तवर्जम् । ढकारष्टवर्गीयोउकारश्च तत्प्रकृती ह्लकारौ क इति जिह्वामूलीयः प इत्युपध्मानीयः हुम् इति नासिक्यः एते वर्णा न सन्ति माध्यन्दिनानाम् । लृकारो दीर्घः लाजीन्छाचीनित्यमादयो ये पठितास्तान्प्लुतान् वर्जयित्वा अन्ये प्लुता न सन्ति माध्यन्दिनानाम् । ( शु० य० प्रा० सू० २९, ३० ) ।

CC-0, Panini Kanya Maha Vidyalaya Collection.

